

श्रीः

# भास्करोदया ।



## तर्कसंग्रहदीपिका-प्रकाश (नीलकण्ठी)-सवलिता ।

मूल्यं १। सपादरूप्यकः ।



THE

# BHÂSKARODAYÂ

## A commentary on Nîlakaṇṭhabhatt's Tarka-sangraha-Dîpikâ-prakâsha

BY HIS SON

## SHRÎ LAKSHMÎṆRISIMHA SHÂSTRÎ.

EDITED WITH CRITICAL AND EXPLANATORY NOTES
BY

PANDITA MUKUNDA JHÂ,
DANADHYAKSHA OF HER HIGHNESS MAHARANI LAKSHMIBATEE,
THE ELDER WIDOW OF HIS HIGHNESS MAHARAJA
SIR LAKSHMISHWARA SINGH BAHADUR G. C. I. E.
THE LATE MAHARAJA BAHADUR OF DARBHANGA.

Forth Edition.

REVISED BY

WÂSUDEV LAXMAṆ SHÂSTRÎ PAṆS'ÎKAR.

PUBLISHED BY
PÂNDURANG JÂWAJÎ,
PROPRIETOR OF THE "NIRṆAYA-SÂGAR" PRESS,
BOMBAY.

1926.

*Price* $1\frac{1}{4}$ *Rupees.*

श्रीः

# भास्करोदया ।

तर्कसंग्रहदीपिका–प्रकाशस्य ( नीलकण्ठ्याः )
व्याख्या पदवाक्यप्रमाणपारावारीणनील-
कण्ठभट्टसूनुपण्डितेन्द्रश्रीमल्लक्ष्मी-
नृसिंहशर्म्मकृता

विविधविरुदावलीविराजमानमानोन्नतमहाराजाधिराजमिथि-
लेश-श्री ५ मल्लक्ष्मीश्वर सिंहबहादुर-जी-सी-आइ-ई महोद-
यानां ज्येष्ठधर्मपत्न्याः श्री ५ मल्लक्ष्मीवत्यामहाराज्याः
कुलपरम्परासेवकेन, मुजफ्फरपुरस्थराजकीयध-स-
संस्कृतमहाविद्यालयाध्यापकेन, कर्म्मकाण्डभू-
षणेन मैथिलझोपाख्यपण्डित–श्रीमुकु-
न्दशर्म्मणा संस्कृता परिष्कृता
संशोधिता च ।

( चतुर्थावृत्तिः )

सांगलीस्थन्यायशालाध्यापकैः वे० शा० सं० अनन्तशास्त्रिभिः
सुसंस्कृता ।

सैषा

मुम्बय्यां

पाण्डुरङ्ग जावजी इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये
मुद्रयित्वा प्रकाशिता ।

संवत् १९८२—सन १९२६.

मूल्यं १। सपादरूप्यकः ।

# भूमिका.

समुपजोषमद्य प्रकाश्यते नीलकण्ठभट्टकृततर्कदीपिकाप्रकाशव्याख्या भास्करोदयाख्या, अस्य निर्माता किलोक्तनीलकण्ठभट्टतनुजन्मा पदवाक्यप्रमाणपारावारीणपण्डितेन्द्रश्रीमल्लक्ष्मीनृसिंहभट्टः। नीलकण्ठभट्टश्च पाण्योपनामककौण्डिन्यवंशसमुद्भूतो रामभट्टस्य तनूज आन्ध्र(तैलङ्ग)देशीयो दाक्षिणात्य इत्येतद्ग्रन्थान्तलेखादेवावसीयते, अयं च स्वदेश एव षोडशाधिकाष्टादशशततमे ख्रिस्ताब्देऽहोबलसन्निधौ पाण्यग्रामे लब्धजन्मा कृतद्विजातिसंस्कारश्चरमे वयसि मुक्तिद्वारं श्रीकाशीक्षेत्रं प्रतिष्ठमानान्निजपितुरेवाधीयानस्तेन सहैवोक्तक्षेत्रमुपागत्य तत्रापि पितुरेव निखिलां पदवाक्यप्रमाणविद्यां समधीतवान्। अत्रान्तर एवोक्तनीलकण्ठभट्टो मणिप्रभामभिनवदीधितिव्याख्यामुक्तप्रकाशग्रन्थं च निबबन्ध, कृतदारपरिग्रहं पञ्चविंशतिवर्षदेशीयवयस्कमेनं निजयोगक्षेमचिन्तनक्षममवेक्ष्य चत्वारिंशदधिकाष्टादशशततमे ख्रिस्ताब्दे नीलकण्ठभट्टो देवभूयंगतः। पितर्युपरतेऽनवाप्तसन्ततिकोऽयं (ल. नृ. भ.) सहधर्मिण्यामपि दिवं संप्रस्थितायामस्माज्जगज्जालादुद्विज्य ब्रह्मविद्यामेव निःश्रेयसैकनिदानमाकलय्य तामेव चिराय चिन्तयन् काश्यां धन्वन्तरिकूपोपान्ते कस्मिंश्चिन्मठे कृतनिकेतो यथावकाशसमयं समध्यापयन्कालमतिवाहयामास।

एकदा तदीयप्रियशिष्यः शुक्लोपनामको ढुण्ढिराजशर्मा दाक्षिणात्यः साञ्जलिबन्धनं व्यजिज्ञपत् महानुभावाः तत्रभवतां नीलकण्ठभट्टसुधियां तर्कदीपिकाप्रकाशग्रन्थो नाधुनाऽपि पिपठिषूणामुपयोगाय पर्याप्तोऽन्तरेण सुगमव्याख्यामिति भवन्तोऽस्मांस्तं पाठयन्तु विरचयन्तु च तदीयामाशुबोधौपयिकीं टीकामेकामिति, इत्थं ग्रन्थकर्तृगौरवात्तदीयप्रार्थनातिशयाच्चावर्जितस्वान्तो ब्रह्मविद्याविचारैकप्रवणोऽपि लोकोपकृतये इमां विरचयितुमुपक्रान्तवान्। कियतैव कालेनान्तरायतिरस्करणमचिरेण संभावितमवगत्य कथंचिज्झटित्येनां समापूर्यान्यैरपि निजपितृकृतैरात्मकृतैश्च राधामाधवविलासाख्यशृङ्गारप्रबन्धादिभिः सममिमां निजपत्नीसोदरापुत्रेभ्यो वेदान्तन्यायसाहित्यकमलदिवाकरेभ्योऽनन्तान्तेवासिपञ्चास्यजितदिङ्मण्डलविद्वद्द्विजेभ्यः पूज्यपादासद्गुरुवर्य—सर्वतन्त्रस्वतन्त्र-मानवल्ल्युपाख्य-महामहोपाध्याय सी, आई, ई,-श्री ६ मद्गङ्गाधरशास्त्रिमहानुभावानां पितृचरणेभ्यः श्रीमन्नृसिंहशास्त्रिमहाशयेभ्यः सबहुमानं समर्प्य सप्ताशीत्युत्तराष्टादशशततमे ख्रिस्ताब्दे ब्रह्मभूयंगत इति निजगुरुकुले वसन्कर्णाकर्णिकयाऽश्रृणवम्॥ अहं चैकदा त्रिनवत्युत्तराष्टादशशततमे ख्रिस्ताब्दे काश्यामुक्तनिजगुरुचरणोपान्ते वसंस्तेभ्यो नीलकण्ठकृतं प्रकाशग्रन्थमधीयानस्तत्र लक्षणलक्षणपरकग्रन्थार्थविचारे पाठदोषमाकलय्य तन्मोषाय ग्रन्थकर्तृलिखितोऽयं प्रकाशग्रन्थोऽस्मत्पुस्तकालयेऽस्ति तमानयेति तैराज्ञप्तस्तत्र (पुस्तकालये) तमन्विष्यन् एकस्मिन्पुस्तके तैलङ्गाक्षरलिखिते प्रकाशग्रन्थेन सह प्रथमलिखितां स्खलितबहुपत्रामनतिसष्टाक्षरामिमां

तट्टीकामपि समासादितवान् । अनतिपरिज्ञाततैलङ्गाक्षरेणापि मया प्रकाशग्रन्थ-प्रौढिमनुनिशम्य तत्संगमनायैनां परिज्ञातुं गाढं प्रयतितम् । तत्र विहस्ते मयि समनुकम्प्योक्तगुरुवर्यकनिष्ठभ्रातृभिः काशिकराजकीयसंस्कृतपाठशालायां साहित्यद-र्शनाध्यापकैः महामहोपाध्यायश्री ६ मद्रामशास्त्रिमहाशयैर्निजान्तेवासी पूर्वोक्तशुक्लोप-नामकढुण्ढिराजशास्त्रितनयः समाज्ञप्तो यत्त्वं निजपितृलिखितामिमां समन्विष्यास्मै-प्रदेहीति, सोऽपि तथा तैराज्ञप्तः सत्वरमेव मया सहैव निजपितृपुस्तकेष्वेनामन्विष्य प्रदत्तवान्परं तल्लिखितापि तथाविधैवेयमिति सशोकमलोकयम् । ततश्च निजगुरुगृहोप-लब्धां तामेव सबहुमानं देवनागराक्षरे समुद्धर्त्तुं प्रयतमानस्तदात्वे पञ्चनदीयपण्डितवर-श्रीपद्मनाभशर्मणो निजप्रियसुहृदः साहाय्यमासाद्य तत्सहाध्यायिभिरान्ध्रदेशीयैः संगत्य तैस्समेनां समुद्दहरमिति तेषामुपकृतिं मुहुः स्मरामि । पश्चादस्याः संस्करणे कृतदृढ-मतिना मया निजगुरुचरणेभ्य एव स्खलिततममंशमवबुध्यावबुध्येयं सुबहुना कालेन साकल्येन समुद्धृता सुसंस्कृता क्वचित् उपयुक्तटिप्पण्या सुपरिष्कृता च लोकोपयोगक्षमा संपादितेति सानन्दमावेदयामि सहृदयेभ्यः । तामेतां सहृदयहृदयाह्लादिनीं भास्करो-दयाख्यां प्रकाशव्याख्यामद्य मुम्बापुरवासिने श्रीलश्रीतुकारामजावजीति शुभाख्य-महोदयाय ससर्वाधिकारं मुद्रणाय समर्प्य विदुषां पिपठिषूणां च पुरः प्रकाशयामि, यद्येनाममत्सराः सहृदयवराः क्षणमप्यवहितमनसा समवलोकयेयुस्तदाऽऽत्मानं सफलोद्योगं मन्ये,

यद्यपीयमाद्योपान्तं मया बहुधा दृष्टा संशोधिताऽथापीदृशे कार्ये मादृशाल्पज्ञजन-सुलभेन मतिदोषेण जनितानि स्खलितानि सुविमृश्य प्रबोधयन्तु विचक्षणवरा येन कृतज्ञताप्रकाशनपुरःसरं यतेय द्वितीयसंस्करणे निर्दोषतायै, क्षन्तारश्च गुणैकपक्षपा-तिनो दूषणवाचंयमाः सुधियः सीसकाक्षरयोजकदोषेण मदीयदृष्टिदोषेण चोपनता अशुद्धीरिति निश्चिन्वन् विरमामि निरर्थकाद्विस्तरादिति निगदति,

मिथिलादेशान्तर्गतहाटीतप्पान्तर्गतहरिपुरग्रामनिवासी वखशीश्रीनन्दनलालशर्म-

तनुजन्मा झोपाख्य पं० श्रीमुकुन्दशर्मा, व्या. चार्यः ।

# तृतीयावृत्तिप्रस्तावना ।



भगवान् महर्षिः गौतमः दुःखपङ्कनिमग्नं जगदुद्दिधीर्षुः मोक्षोपयोगितया सर्वाणि तन्त्राण्यालोच्य प्रमाणप्रमेयेत्यादीनि सूत्राणि चकार । विरचितवांश्च भगवान् कणादः अथातो धर्मं व्याख्यास्याम इत्यादिसूत्राणि । तानि सर्वाणि इदानींतना मन्दप्रज्ञा अवगाहाक्षमाः इति विचार्य पण्डितवरः अन्नंभट्टः संग्रहं तट्टीकां दीपिकां च कृतवान् । सापि न्यायविप्रतिपन्नशास्त्रान्तरकर्तॄणां बहुशङ्काकुला स्यादिति आकलय्य आन्ध्रदेशीयेन विद्वच्छिरोमणिना नीलकण्ठभट्टेन वादिमतानि स्थलेस्थले खण्डयित्वा दीपिकाप्रकाशो व्यरचि । विरचितवांश्च तत्तनूजो बहुजनोपकारिणीं भास्करोदयाख्यां टीकाम् । सा मैथिलदेशीयझोपाख्यमुकुन्दपण्डितवरैः सुसंस्कृता सती सर्वजनदृग्गोचरतामियाय । तां पुनः संस्कर्तुकामैः निर्णयसागराख्यमुद्रणालयाधिपतिभिर्नियुक्तेन सांगलीराजकीयन्यायशालाध्यापकेन अनन्तशर्मणा मया संशोधिता.

अनंतशास्त्री जोशी.

श्रीः

# तर्कसंग्रहः

## दीपिका–प्रकाशव्याख्या–भास्करोदयाभिः संवलितः ।



निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥ १ ॥

### दीपिकाव्याख्या.

विश्वेश्वरं साम्बमूर्तिं प्रणिपत्य गिरां गुरुम् ।
टीकां शिशुहितां कुर्वे तर्कसंग्रहदीपिकाम् ॥ १ ॥

---

### नीलकण्ठी.

वन्दे गुरुं शिवं साम्बं दक्षिणामूर्तिमव्ययम् ।
यद्वन्दनेन मन्दोऽपि विन्देद्गुरुसमानताम् ॥ १ ॥

### भास्करोदयाख्यव्याख्या.

नीलकण्ठं गुरुं वन्दे दक्षिणामूर्तिरूपिणम् ।
यद्बोधसमुद्भूतमिन्द्रजालमिदं जगत् ॥ १ ॥

अथ प्रारिप्सितस्यास्य ग्रन्थस्य प्रत्यूहव्यूहापोहाय स्वीयनानाविधनिबन्धनसाधारणं स्वमुद्रारूपमभीष्टदायकगुरुवन्दनप्रतिपादकमङ्गलं शिष्यशिक्षायै ग्रन्थादौ पदवाक्यप्रमाणपारावारीणपण्डितेन्द्रनीलकण्ठशर्मा ग्रन्थकृन्निबध्नाति—**वन्दे गुरुमिति** । कथंभूतं, शिवं, परब्रह्मस्वरूपम्, 'शिवमद्वैतं चतुर्थं मन्यन्ते' इत्यादिश्रुतेः, 'गुरुरेव परब्रह्म' इत्यादिस्मृतेर्गुरुपरब्रह्मणोरैक्यं, गुरोरेव परब्रह्मसाक्षात्कारहेतुत्वात्प्रथमं तदुपादानम् । वन्देरभिवादनार्थस्य स्वावधिकोत्कृष्टत्वप्रकारकज्ञानजनकव्यापारार्थत्वेन, उत्कृष्टत्वप्रकारकज्ञानस्य गुणवत्त्वप्रकारकज्ञानाधीनत्वेन, निराकारे ब्रह्मणि तदसंभवं दूरीकर्तुं—**साम्बमिति** । अम्बया सहितं, मायोपहितचैतन्यम्, साकारमित्यर्थः । केचित्तु शेते यस्मिञ्जगदिति व्युत्पत्त्या तल्लयाधिष्ठानत्वेन साकारत्वोपपत्तौ साम्बमिति नतिकालिकविजातीयानन्दातिशयद्योतनायेत्याहुः । इतरव्यावृत्त्यर्थं—**दक्षिणामूर्तिमिति** । साकारत्वे "अस्ति जायते वर्धतेऽपक्षीयते विपरिणमते नश्यती"ति षड्भावविकारप्राप्तिं वारयति—**अव्ययमिति** । न व्येतीत्यव्ययमिति व्युत्पत्त्योक्तषड्भावविकारविरहिणमित्यर्थः । वन्दनफलं दर्शयति—**यद्वन्दनेनेति** । यस्य वन्दनेन

---

१ साकारस्य कल्पितत्वेऽपि शुद्धचैतन्यस्याव्ययत्वेऽविरोध इति भावः ।

## नीलकण्ठी.

प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तये समाचरितं मङ्गलमीश्वरनत्यात्मकं शिष्यशिक्षायै निबध्नंश्चिकीर्षितं प्रतिजानीते—**विश्वेश्वरमिति**। गिरां गुरुं निखिलविद्यानामुपदेष्टारम्। इदमपि विश्वेश्वरे विशेषणम्। **'गिरं गुरुम्'** इति पाठे तु सरस्वतीं विद्यागुरुं च प्रणिपत्य इत्यर्थो बोध्यः। स्वग्रन्थस्येतरग्रन्थैरगतार्थतां दर्शयति—**शिशुहितामिति**। **तर्कसंग्रहदीपिकां** तर्कसंग्रहार्थप्रकाशिकाम् ॥ आचरितस्य,

## भास्करोदयाख्यव्याख्या.

मन्दोऽपि मूढोऽपि गुरोर्बृहस्पतेः समानतां विन्देत्प्राप्नुयात्। 'विद्लृ लाभे'। अथवा मन्दत्वं मूलाज्ञानोत्थितदेहाद्यात्माध्यासेन शोकमोहसुखदुःखाद्यभिमानित्वं, ततो गुरूपदेशादध्यारोपापवादन्यायपुरस्सरं परिशोधिततत्त्वमस्यादिमहावाक्यैर्जीवपरब्रह्मणोरैक्यरूपमखण्डार्थं विदित्वा ब्रह्माकारेणावस्थितिर्गुरुसमानतेति। तथाच श्रुतिः—'ब्रह्मविद्ब्रह्मैव भवति' इति। 'ईशानः'[1] इति श्रुतिबोधितसकलविद्याधीशत्वेन गुरुत्वं शिवस्यैवेति विद्याकामैरवश्यानुष्ठेयत्वं तद्वन्दनस्येति व्यज्यत इत्यलम् ॥ अथेदानीमीश्वरनत्यात्मकस्यास्यादृष्टद्वारेणैव दृष्टसाधनत्वे दृष्टस्य कस्यचिदप्रसिद्धेरदृष्टमात्रस्यान्यथासिद्धेरेतद्वैयर्थ्यमापादयन्तम्, किंचास्तु वा प्रकृतविघ्नध्वंसमङ्गलयोर्विशेषरूपेण कार्यकारणभावस्तथापि तस्य त्रैविध्याल्लाघवान्मानसिकेन कायिकेन वान्यथासिद्धिमुद्भावयन्तं प्रत्याह—**प्रारिप्सितस्येत्यादि**। प्रपूर्वकस्यारमेराद्यकृतिः, सन इच्छा क्तस्य च विषयत्वमर्थः, तथाचाद्यकृतिविषयत्वेनेच्छाविषयस्य ग्रन्थस्येत्यर्थः। **निर्विघ्नपरिसमाप्तय इति**। निर्गता विघ्ना यस्या इति व्युत्पत्त्या चरमवर्णध्वंसरूपसमाप्तिपर्यन्तं विघ्नध्वंसलाभेन विघ्नध्वंसपूर्वकसमाप्तिरूपफललाभायेत्यर्थः। इदं प्राचीनमतानुगतमूलोक्तार्थानुरोधेन। नैतत्संमतमेतद्ग्रन्थकृताम्। अतएव 'एतत्तत्त्वमस्मदीयचिन्तामणिव्याख्यायामनुसंधेयम्' इति वक्ष्यमाणं संगच्छते। **निबध्नन्निति**। पूर्वार्धेनेत्यादिः। **चिकीर्षितं** कृतिसाध्यत्वेनेच्छाविषयीभूतम्। **प्रतिजानीते** उत्तरार्धेनेत्यादिः। **विश्वेश्वरमिति**। जगन्नियन्तारं पुण्यपापानुसारेण सुखदुःखफलदातारमित्यर्थः। सप्रमाणं पाठद्वयं मत्वा विवृणोति—**गिरां गुरुमिति**। पार्थक्येन क्रियाविशेषणत्वे विद्याविशेषगुरुपरत्वमसंभवदुक्तिकमिति तात्पर्येणाह—**इदमपि विश्वेश्वरे विशेषणमिति**। अपिरेवार्थे। स च भिन्नक्रमः। तथाचेदं विश्वेश्वर एव विशेषणमित्यन्वयः। तेन विद्यागुरुपरत्वाभावो ध्वन्यते। अन्यथा 'इदमपि' इत्याद्युक्तिस्वारस्यभङ्गापत्तिरित्यवसेयम्। गिरं गुरुमिति पाठस्याप्युचितत्वं स्फुटयितुं तुशब्दं प्रतिक्षिपति—**पाठे त्विति**। ननु तर्कसंग्रहदीपिकामित्यनुपपन्नं, तर्कसंग्रहस्य शब्दकदम्बात्मकस्य शब्दप्रकाश्यत्वासंभवादित्याशङ्कां मनसिकृत्वा मूलकृन्न्यूनतामर्थपदमन्तर्भाव्य विवरणेनार्थप्रकाशिकामित्यनेन निराचष्टे—**तर्कसंग्रहार्थप्रकाशिकामिति**। प्रतिज्ञायाः शुश्रूषोद्देश्यकत्वेन तद्वाचकाप्रयोगेण प्राप्ताज्ञानता-

१ 'ईशानः सर्वविद्यानामीश्वरः सर्वभूताना'मिति।

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकमिष्टदेवतानमस्कारलक्षणं मङ्गलं शिष्यशिक्षार्थं निबध्नंश्चिकीर्षितं ग्रन्थादौ प्रतिजानीते—निधायेति । ननु मङ्गलस्य समाप्तिसाधनत्वं नास्ति । मङ्गले कृतेऽपि कादम्बर्यादौ निर्विघ्नपरिसमाप्त्यदर्शनात्, मङ्गलाभावेऽपि किरणावल्यादौ समाप्तिदर्शनादन्वयव्यतिरेकव्यभिचारादितिचेत् । न । कादम्बर्यादौ विघ्नबाहुल्यात्समाप्त्यभावः । किरणावल्यादौ तु ग्रन्थाद्बहिरेव मङ्गलं कृतमतो न व्यभिचारः ।

## नीलकण्ठी.

मङ्गलस्य तन्निबन्धनस्य च फलं दर्शयति—**चिकीर्षितेत्यादिना प्रतिजानीत इति । शिष्यावधानायेत्यादिः** । ननु समाप्तिं प्रति मङ्गलस्य कारणता स्याच्चेत् तदा तदाचरणं युज्यते । सैव न संभवतीत्याशङ्कते—**नन्विति । व्यभिचारादिति** । अन्वयव्यतिरेकव्यभिचारज्ञानरूपप्रतिबन्धकसत्त्वान्नियतान्वयव्यतिरेकसहचारनिश्चयरूपकारणासंभवेन न कारणत्वनिश्चय इत्यभिसंधिः ॥ **समाप्त्यभाव इति** । 'अतो न व्यभिचारः' इत्यनेनान्वयः ॥ विघ्नान्यूनसंख्याकस्य बलवत्तरस्य वा मङ्गलस्य विघ्ननिरसनद्वारा समाप्तिसाधनत्वेन तादृशमङ्गलाभावान्नान्वयव्यभिचार इति भावः ॥ **बहिरेवेति** । जन्मान्तर एवेत्यर्थः । अतः कुत्रचिद्ग्रन्थक-

## भास्करोदयाख्यव्याख्या.

परिहाराय शिष्यावधानायेति पूरयति आदौ **शिष्यावधानायेत्यादिरिति** । उद्देश्यवाचकानां विधेयवाचकपूर्वत्वस्यौत्सर्गिकत्वमित्याशयात् । कारणत्वस्यान्वयव्यतिरेकसहकृतत्वेन तद्व्यभिचारप्रदर्शनपरमूलाशयं वर्णयितुमाशङ्कते–**नन्विति । व्यभिचारादितीति** । ययोः कार्यकारणभावस्तत्सत्त्वयोर्व्याप्यव्यापकभावरूपान्वयसहचारज्ञानस्य तदभावसत्त्वयोर्व्याप्यव्यापकभावरूपव्यतिरेकसहचारज्ञानस्य च घटे दण्ड इव प्रकृते न सद्भाव इति तदाशयः । **अभिसंधिः** अभिप्रायः । कादम्बर्यादौ प्राप्तान्वयव्यभिचारवारणपरमूलं विघ्नबाहुल्यकल्पकं, समसंख्याकस्य बलवत्तरस्य वा मङ्गलस्य कारणत्वस्फोरकमित्याशयेन भाववर्णनमित्यवसेयम् ॥ ननु किरणावलीप्रणेतुरास्तिकत्वेन कायिकमानसिकमङ्गलजनितदुरितध्वंसद्वारा समाप्तिकल्पनेन व्यतिरेकव्यभिचारवारणेऽपि प्रत्यक्षातिरिक्तवस्तुसत्ताविद्वेषिणश्चार्वाकस्य ग्रन्थे यथाश्रुतमूलार्थे व्यभिचारवारणासंभवान्मूलन्यूनता स्यादित्यतो 'बहिरेव'इति मूलं जन्मान्तरपरतयोन्नेयमित्याह—**जन्मान्तर एवेति** । इत्थं प्रत्यक्षातिरिक्तवस्तुसत्ताविद्वेषिणो लोकायतिकस्य मतसरणिः—प्रत्यक्षमेव प्रमाणं नातिरिक्तं, मानाभावात् । नास्ति परलोको, नास्ति चैतन्यविशिष्टदेहादतिरिक्त आत्मा, नापि चाङ्गनालिङ्गनादिजन्यसुखातिरिक्तनित्याद्वितीयब्रह्मानन्दात्मकः परमपुरुषार्थः, नापि च राजातिरिक्त ईश्वरः, नापि च देहोच्छेदातिरिक्तो मोक्षः । देहात्मवाद एव कृशोऽहम्, कृष्णोऽहमित्यादि सामानाधिकरण्योपपत्तिः । मम शरीरमित्यादिभेदव्यवहारस्तु 'राहोः शिर' इत्यादिवदौपचारिक एव । तदुक्तम्—'अत्र चत्वारि भूतानि भूमिवार्यनलानिलाः । चतुर्भ्यः खलु भूते-

१ उदयनाचार्यस.

## भास्करोदयाख्यव्याख्या.

भ्यश्चैतन्यमुपजायते ॥ १ ॥ किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत् । अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः ॥ २ ॥ देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः । मम देहोऽयमित्युक्तिः संभवेदौपचारिकी ॥ ३ ॥ यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः । भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥ ४ ॥ अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथानिलः । केनेदं चित्रितं तस्मात्स्वभावात्तद्व्यवस्थितिः ॥ ५ ॥' तदेतत्सर्वं सुरगुरुणापि समग्राहि । 'न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः । नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः ॥ १ ॥ अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् । बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता ॥ २ ॥ पशुश्चेन्निहतः स्वर्गं ज्योतिष्टोमे गमिष्यति । स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते ॥ ३ ॥ मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम् । गच्छतामिह जन्तूनां व्यर्थं पाथेयकल्पनम् ॥ ४ ॥ स्वर्गे स्थिता यदा तृप्तिं गच्छेयुस्त्वत्र दानतः । प्रासादस्योपरिस्थानामिह कस्मान्न दीयते ॥ ५ ॥' इत्यादि । नचाङ्गनालिङ्गनादिजन्यसुखस्य यत्किंचिदनुचितान्तरपरिरब्धत्वेन दुःखसंभिन्नतया पुरुषार्थत्वमेव नास्तीति वाच्यम्, अवर्जनीयतया प्राप्तस्य दुःखस्य परिहारेण सुखमात्रस्यैवोपादेयत्वाद्दुःखभयान्नानुकूलवेदनीयं सुखं त्यक्तुमुचितमिति सिद्धम् । नहि मृगाः सन्तीति शालयो नोप्यन्ते नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रियन्ते । तदुक्तम्—'त्याज्यं सुखं विषयसंगमजन्म पुंसां दुःखोपसृष्टमिति मूर्खविचारणैषा । व्रीहीञ्जिहासति सितोत्तमतण्डुलाढ्यान्को नाम भोस्तुषकणोपहितान्हितार्थी ॥' इति । ननु स्यादेष ते मनोरथो यद्यनुमानादेः प्रामाण्यं न स्यात् । अस्ति च प्रामाण्यम्, कथमन्यथा धूमचाक्षुषानन्तरं धूमेन साध्ये प्रेक्षावतां प्रवृत्तिरुपपद्येत । एवं नद्यास्तीरे फलानि सन्तीत्याप्तोक्तशब्दश्रवणानन्तरं फलार्थिनां तीरे प्रवृत्तिर्न स्यादिति चेत् । न । भवन्नये व्याप्तिपक्षधर्मताशालिलिङ्गमनुमितिजनकम् । व्याप्तिश्चोभयविधोपाधिविधुरः संबन्धविशेषः । स च चक्षुरादिवत्स्वरूपेण नाङ्गभावं भजते, किंतु ज्ञाततया, तथाच चक्षुःसंयुक्तयोर्वर्तमानवह्निधूमयोरैकाधिकरण्यस्य चक्षुःसंयुक्तविशेषणतया तद्विषयकेन्द्रियप्रत्यक्षविषयत्वेऽपि तदसंयुक्तभूतभविष्यदैकाधिकरण्यज्ञानविषयत्वेन व्याप्तेः सर्वोपसंहारवत्त्वस्यासर्वज्ञदुर्ज्ञेयत्वात् । नच सामान्यलक्षणया तज्ज्ञानं सुलभमिति वाच्यम् । अन्तःकरणस्य बहिरिन्द्रियसापेक्षतया बाह्येऽर्थे स्वातन्त्र्येणाप्रवृत्तेः । तदुक्तम्—'चक्षुराद्युक्तविषयं परतन्त्रं बहिर्मनः' इति । नापि शब्दोपमाने, कणादमतानुसारेणानुमान एवा-

---

१ क्रमुकादीति पाठान्तरम् । तण्डुलादिद्रव्यकृतसुरावीजं किण्वं, क्रमुकस्तु गुवाकः, सुपारीति प्रसिद्धः. २ तस्मात्. पा. ३ राहोः शिर इत्यादिवदभेदेऽप्यारोपितभेदावगाहिनी. ४ अविषय इत्यर्थः. ५ पुण्ड्रम्. पा. ६ पुण्ड्रकम्. ७ हन्यते. पा. ८ मपि. पा. ९ अयं पाठः क्वचिन्नास्ति. १० बहिर्विषये बहिःप्रत्यक्षे मनः परतन्त्रम् । इन्द्रियसहकारेणैव प्रत्यक्षजनकमित्यर्थः । परंतु इदं चिन्त्यम् । भूतभविष्यतोर्वह्निः प्रत्यक्षानङ्गीकारात् ।

## नीलकण्ठी.

र्तुर्नास्तिकत्वेऽपि न क्षतिः ॥ **अत इति** । तादृशस्य मङ्गलस्य विघ्नध्वंसद्वारा समाप्तिकारणत्वसत्त्वान्न व्यतिरेकव्यभिचार इत्यर्थः । एवं च कारणत्वं सिध्यतीति भावः ॥ परे तु अत उक्तहेतुद्वयात् न व्यभिचारः नान्वयव्यतिरेकव्यभिचार इति व्याचख्युः ॥ मणिकृतस्तु मङ्गलस्य विघ्नध्वंस एव फलम् । समाप्तिस्तु स्वसामग्रीवशादेवेत्याहुः ॥ एतत्तत्त्वमस्मदीयचिन्तामणिव्याख्यायामनुसंधेयम् ॥ मङ्गलस्य श्रुतिबोधितकर्तव्यता-

## भास्करोदयाख्यव्याख्या.

न्तर्भावात् तन्निरासेनैव तन्निरासात् ( नैयायिकनये पृथक्प्रमाणत्वेऽपीश्वरानङ्गीकर्तृमते तस्य प्रामाण्यसाधकहेतोः स्वरूपासिद्धत्वात् । आप्तोक्ते तु तदावश्यकतैव । शब्दत्वसामानाधिकरण्येनैव तदसिद्धेः । तत्तत्प्राप्त्यर्थककल्पनावश्यकत्वात् ) इत्यास्तां तावदप्रस्तुतविचारेण ॥ **कुत्रचिदिति** । तेन किरणावल्या नास्तिकेतरकृतिविषयत्वं सूचितम् । ननु कर्तुरनास्तिकत्वे ग्रन्थाद्बहिः कायिकमानसिकमङ्गलकरणसंभावनया जन्मान्तरानुसंधानानावश्यकत्वेन नास्तिकानुष्ठितग्रन्थे व्यतिरेकव्यभिचारावारणप्रयुक्तन्यूनतापरिहाराय बहिरेवेतिमूलस्य जन्मान्तरार्थकत्वेपि किरणावल्यादौ तदपरिहारेण तुन्दिलप्रियारतिप्रस्तावप्रसङ्ग इति चेत् । इदमजहल्लक्षणाऽभिप्रायकमित्यतो न दोषलेशस्याप्यवसर इति भावः ॥ **अत** इत्यस्योपसंहारबोधकवाक्यघटकत्वेन प्रकृतहेतुपरामर्शकतया प्रकृतोपसंहारार्थत्वं स्फुटयति—**तादृशस्येत्यादिना** । तादृशस्य कायिकमानसिकान्यतरस्य । व्यभिचारद्वयवारणसिद्धफलं दर्शयति—**एवं चेत्यादिना** । उपसंहारवाक्यघटकव्यभिचारपदस्यान्वयव्यतिरेकव्यभिचारोभयपरत्वावश्यकतया तद्वारकपूर्वपूर्वहेतुद्वयान्वयानुविधायित्वादपकर्षे तत्तदन्वयस्य गौरवपराहतत्वाभिमानेन स्वोत्प्रेक्षितार्थं बोधयितुमाह—**परे त्विति** । **मणिकृतस्त्विति** । कार्यमात्रे प्रतिबन्धकसंसर्गाभावस्य हेतुत्वेन प्रतिबन्धकनिरासेनैव कार्यसंपत्तेर्लाघवं नव्यमते । समाप्तिहेतुत्ववादिनां प्राचां मते तु प्रतिबन्धकनिवृत्तिमन्तरेण ४व्यूहस्थराजकरावलम्बनन्यायेन तद्धेतुत्वासंगतेरुभयहेतुत्वाद्गौरवम् । मूलं तु प्राचीनमतानुसारेण । **एतत्तत्त्वमिति** । प्रथमोपस्थितविघ्नध्वंसं प्रत्येव कारणत्वं ( इति ) हृदयम् । अधिकं तु प्रकाशकर्तृपदवाक्यप्रमाणपारावारीणपण्डितेन्द्रनीलकण्ठविद्वन्मणीयव्याख्यायामभिनवप्रभाख्यायामधिकजिज्ञासुभिरनुसंधेयं बुद्धिकुशलैरिति समुदितार्थः । मङ्गलस्य कर्तव्यत्वे शिष्टाचारानुमितश्रुतेरेव प्रमाणतयोपन्यासः, इदानीं लोके पठ्यमानप्रचलितवेदे 'समाप्तिकामो मङ्गलमाचरेत्' इत्यानुपूर्वी-

---

१ शब्दोपमानप्रमाणान्तरत्वस्य निराकरणात्. २ 'तुन्दिलो मैथुनं कुर्वंश्चुम्बनाय प्रवर्तितः । इतो भ्रष्टस्ततो भ्रष्टो नैको लब्धो न चापरः ॥' इति. ३ तथाच ग्रन्थाद्बहिर्यत्रकुत्रचिदत्र जन्मनि जन्मान्तरे वेति लभ्यते. ४ यथा व्यूहस्थस्य राज्ञः करावलम्बनमरातिना व्यूहमनिरास्याशक्यं, तथा प्रकृतेऽपि प्रतिबन्धकनिरासमन्तरा समाप्तिर्दुरशकेति भावः.

ननु मङ्गलस्य कर्तव्यत्वे किं प्रमाणमितिचेत्। न। शिष्टाचारानुमितश्रुतेरेव प्रमाणत्वात्। 'समाप्तिकामो मङ्गलमाचरेत्' इति श्रुतेः। तथाहि—मङ्गलं वेदबो-

## नीलकण्ठी.

कत्वं व्यवस्थापयितुं शङ्कते—**नन्विति** । **अनुमितश्रुतेरेवेति** । अत्रायमाशयः—श्रुतेर्वेदबोधितकर्तव्यताकत्वरूपवक्ष्यमाणविधेयकोटिप्रविष्टत्वेऽपि तदन्तर्भावेण विधेयत्वमभ्युपगम्यते । तच्छ्रुतेरनुमितेः पूर्वमसिद्धत्वात् । एतेन वह्न्यादिसाध्यकानुमितिविषयतामादाय वह्नित्वादिकमनुमितमिति व्यवहाराभावेन श्रुतावनुमितत्वव्यवहारः कथमिति शङ्का निरस्ता ॥ श्रुतौ विधेयताभ्युपगमेन तादृशव्यवहारे बाधकाभावात् ॥ एवकारोऽप्यर्थकः ॥ तेन मङ्गलं कर्तव्यं समाप्तिफलकत्वात् इत्यनुमानरूप-

## भास्करोदयाख्यव्याख्या.

कायाः श्रुतेरदर्शनात्, तत्र चानुमितत्वमेवानुपपन्नं, विधेयतावच्छेदकत्वादिति 'सति कुड्ये चित्रम्' इति न्यायप्रसरमूलकानुपपत्तिमुद्दिधीर्षुस्तदाशयं वर्णयति—**अत्रायमाशय इति** । **श्रुतेरनुमितेः पूर्वमसिद्धत्वादिति** । नच 'अनन्ता वै वेदाः' इत्यतः सिद्धत्वम्। सामान्यज्ञानं हि न बोधोपयोगि, अन्यथा 'सर्वे सर्वार्थवाचकाः' इत्यभ्युपगममात्रेणास्मदादीनामसर्वशब्दार्थज्ञानानां सर्वज्ञत्वापत्तेरन्यत्राभिधानात्। नहि सामान्यज्ञानकत्वेन तद्बोध्यकर्तव्यताकत्वं विधातुं शक्यम्। तद्विपरीतवादिना तदनाचरणत्वे श्रुतेरुपन्यसितुं शक्यत्वेन प्रमाणप्रतीतस्यैव सार्थकत्वौचित्यादित्याशयात्। **एतेनेति** । विधेयकोटिप्रविष्टस्य विधेयत्वाभ्युपगमेऽनुमितेः पूर्वमसिद्धत्वोपपादनेन । तदनुपपादने वह्नित्वावच्छिन्नवह्नेः साध्यतया विशिष्टस्य विशेषणविशेष्यानतिरेकित्वेन वह्नित्वस्य विधेयतावच्छेदकविधयानुमितिविषयत्वेनानुमितत्वप्रामाणिकव्यवहारापत्तिरूपशङ्का निरस्ता, श्रुतेरिव वह्नित्वस्यासिद्ध्यभावात् । संयुक्तसमवायसंनिकर्षेण अपरोक्षज्ञानविषयत्वादित्यनुसंधेयम् ॥ नच श्रुतेः समाप्तिफलत्वेनोपादानात्कथं नव्यमतनिरुक्तिरिति वाच्यम्। समाप्तिकामोक्त्या समाप्त्युद्देशेन मङ्गलस्य विघ्नध्वंसफलकत्वानपायात्॥ **तादृशव्यवहारे** श्रुतावनुमितत्वव्यवहारे । एवकारस्येतरव्यवच्छेदार्थकत्वेऽप्रसिद्धिरनुमानान्तरप्रमाणसद्भावादित्यसंभवस्य परिहारायाह—**एवकारोऽप्यर्थक इति** । अपेरर्थो यस्येति व्यधिकरणबहुव्रीहिः । तथाचाप्यर्थवाचक एवकार इति बोधः सामासिकः । वैग्रहिकस्तु अर्थविशेष्यकः षष्ठ्यर्थो वाच्यवाचकभावः संबन्धः । तथाच यन्निष्ठवाचकतानिरूपितवाच्यतावानप्यर्थ इत्येवम् अर्थेन वाच्यवाचकभावसंबन्धान्निपातानां वाचकत्वसमर्थनं तावत्तार्किकाणाम्। वैयाकरणमते तु द्योत्यद्योतकभावसंबन्धोऽर्थनिपातयोः। तथाचोक्तबोधद्वयोपपत्तिर्विशेषणविशेष्यभावव्यत्यासात्। अत्रायं निष्कर्षो द्योतकत्ववाचकत्वयोरवधेयः। तार्किकाः खलु निपाता वाचका इति मन्यन्ते। अत्र शाब्दिकाः—अनुभूयते सुखमित्यादौ धातोः सकर्मकक्रियापरत्वं विना कर्मणि लकारासंभवेनानुभवाद्यर्थ-

१ कुड्याभावे चित्राभाववत् श्रुतेरनुमितत्वाभावे तत्र प्रमात्वस्याप्यनुपपत्तिः.

धितकर्तव्यताकमलौकिकाविगीतशिष्टाचारविषयत्वात्, दर्शादिवत् । भोजनादौ व्य-

## नीलकण्ठी.

प्रमाणान्तरसत्त्वेऽपि न क्षतिरिति ॥ अन्ये तु स्वबोधितकर्तव्यताकत्वसंबन्धेन श्रुतेरेव साध्यता । अग्रिमग्रन्थस्याप्यत्रैव तात्पर्यम् । एवं च श्रुतेरनुमितत्वोपपत्तिरित्याहुः । **अलौकिकेति** । विधिमन्तरा रागादिप्राप्तभिन्नेत्यर्थः ॥ **अविगीतेति** । धर्मशास्त्रानिषिद्धेत्यर्थः ॥ **शिष्टेति** । वेदोक्ततत्त्वज्ञानेन वेदविहितकर्मकारीत्यर्थः ॥ वेदोक्ताहिंसादिकर्तरि बौद्धेऽतिव्याप्तिवारणाय तृतीयान्तम् । **आचारविषयत्वा-**

## भास्करोदयाख्यव्याख्या.

कत्वे स्थिते तात्पर्यग्राहकत्वरूपं द्योतकत्वमुपसर्गाणामङ्गीकृत्य वाचकत्वाभावे साधनीये उपसर्गत्वापेक्षया निपातत्वस्याधिकवृत्तितया तदवच्छेदेनैव वाचकत्वाभावसाधनं युक्तम् 'प्रमाणानां सामान्ये पक्षपातः' इति न्यायात् । अत एव साक्षात्क्रियते गुरुरित्यादि संगच्छते । निपातत्वमखण्डोपाधिरूपं, शक्तिसंबन्धेन निपातपदवत्त्वं वेत्याहुः ॥ तन्नच 'अथ शब्दानुशासनम्' इति भाष्य आरम्भवाचकाथपदोपादानविरोधः । किंच स्वरित्यादीनां स्वर्गादिवाचकत्वस्य सर्वसंमतत्वात् । किंच महाभाष्य एव ननेत्याद्यभावो नेत्याद्यभावो नेत्यर्थोपादानात् । किंच पर्वतादा इत्यादौ पर्वतादर्वागित्यर्थप्रतीतेरर्वागर्थकत्वमेवान्यथा पञ्चम्यनुपपत्तेर्निरुक्ते स्पष्टत्वात् । किंच 'पार्थ एव धनुर्धर' इत्यादौ एवकारस्येतरवृत्तित्वेऽभावे च खण्डशः शक्तिमङ्गीकृत्य व्युत्पत्तिवैचित्र्येण समभिव्याहृतपदार्थस्येतरत्वांशेन वृत्तित्वस्य चाभावेनान्वयेन पार्थेतरावृत्तिधनुर्धरत्ववान्पार्थ इति बोधः । द्योतकत्वे समभिव्याहृतपदानामनन्तानां शक्तिकल्पने गौरवोपन्यासविरोधापत्तेः । किंच न तावत्प्रमाणानामिति न्यायोपन्यसनं, निपातत्वापेक्षया अव्ययत्वस्याधिकवृत्तितया तदवच्छेदेन तदापत्तेः । समुच्चयपदोपस्थाप्यसमुच्चये शोभनान्वयवत् शोभनश्चेत्यापत्तेस्तु शब्दशक्तिस्वाभाव्येन नित्यपरतन्त्रतया चादिभिः स्वार्थस्य परविशेषणत्वेनैवावबोधेन वारणीयत्वात् । तस्मात्क्रियाविशेषणद्योतकातिरिक्तनिपातानां यथायथं वाचकत्वस्वीकारेणोभयनये[१] नापत्त्यनुपपत्तिलेशशङ्कावसर इति ॥ **अग्रिमग्रन्थस्याप्यत्रैव तात्पर्यमिति** । तथाहीति वक्ष्यमाणानुमितिग्रन्थस्यापि श्रुतावनुमितत्वसाधन एव तात्पर्यमित्यर्थः । अत्राप्येवकारोऽप्यर्थ एव । तेन श्रुतावनुमितत्वस्य मङ्गले तद्बोधितकृतिविषयत्वस्य च तत्सिद्धिः । अलौकिकपदं व्याचष्टे– **विधिमन्तरा रागादिप्राप्तभिन्नेत्यर्थ इति** । विधिं विना अवश्यप्राप्तभिन्नमित्यर्थः । नञ्द्वयस्य दार्ढ्यार्थप्रतिपादकत्वस्य येन नाप्राप्तिन्यायविषये दृष्टचरत्वात् तत्पर्यायके तथैवानुभवात् । विधिबोधितावश्यकप्राप्तिविषय इति यावत् । शिष्टपदं व्याचष्टे–**वेदोक्ततत्त्वज्ञानेन वेदविहितकर्मकारीत्यर्थ इति** । ननु यत्किंचिद्वेदोक्ततत्त्वज्ञानं यावद्वेदोक्ततत्त्वज्ञानं वा विवक्षितम् । एवं यत्किंचिद्वेदविहितकर्मकारित्वं यावद्वेदविहितकर्मकारित्वं वा विवक्षितम् । आदौ यत्किंचिदथर्वो-

१ द्योतकत्ववाचकत्वनये.

भिचारवारणायालौकिकेति । रात्रिश्राद्धादौ व्यभिचारवारणायाविगीतेति । शिष्ट-

## नीलकण्ठी.

दिति । आचारः कृतिः तस्या वृत्त्यनियामकविषयतासंबन्धेन हेतुता विवादग्रस्तेति तद्विषयत्वस्य हेतुत्वानुधावनमिति भावः ॥ यथाक्रमं हेतुविशेषणप्रयोजनमाह—**भोजनादौ इत्यादिना** । ननु अलौकिकाविगीताचारविषयत्वस्यैव हेतुतास्तु, अशिष्टाचारविषये तादृशहेतोरसत्त्वेन व्यभिचारासंभवादित्याशङ्कामिष्टापत्त्या परिह-

## भास्करोदयाख्यव्याख्या.

क्ताभिशापाबाधितज्ञानवत्त्वेन तद्विहिततन्मात्रकर्मकारिणि तदापत्तेः । द्वितीये तु यावद्वेदविहितयावत्कर्मकारित्वासंभव एव । अतोऽस्यैवं पर्यवसानमवसेयम्—वेदोक्ताबाधितप्रामाणिकार्थाभ्युपगन्तृत्वे सति वेदविहिताऽकरणप्रत्यवायफलककर्मकारित्वमिति ॥ ज्योतिष्टोमादिकर्मकारित्वं तु पुरुषार्थसाधकमेव । केचित्तु फलसाधनतांशे भ्रान्तिरहितत्वं तत्त्वमिति । तन्न । 'स्वर्गकामो यजेत'इत्यादिविधीनां यागे स्वर्गरूपफलसाधकतया प्रामाण्याभ्युपगन्तृत्वमात्रेण लोके सर्वेषामशिष्टव्यवहारवर्तिनां तदापत्तेरवश्यं वारणीयत्वात् ॥ स्वोक्तलक्षणघटकतृतीयान्तपदोपादानफलं दर्शयति—**अहिंसाकर्तरि बौद्धेऽतिव्याप्तिवारणायेति** । तन्मते हि अहिंसायाः कुलधर्मत्वम् । तथाहि—'सर्वथाऽवद्ययोगानां त्यागश्चारित्रमुच्यते । कीर्तितं तदहिंसादिव्रतभेदेन पञ्चधा ॥ १ ॥ अहिंसा सूनृताऽस्तेयब्रह्मचर्याऽपरिग्रहाः । नयत्प्रमादयोगेन जीवितव्यपरोपणम् ॥ २ ॥ चराणां स्थावराणां च तदहिंसाव्रतं मतम् । प्रियं पथ्यं वचस्तथ्यं सूनृतव्रतमुच्यते ॥ ३ ॥ तत्तथ्यमपि नो तथ्यमप्रियं चाहितं च यत् । अनादानमदत्तस्यास्तेयव्रतमुदीरितम् ॥ ४ ॥ बाह्याः प्राणा नृणामर्थो हरता तं हता हि ते । दिव्यौदरिककामानां कृतानुमतकारितैः ॥ ५ ॥ मनोवाक्कायतस्त्यागो ब्रह्माष्टादशधा मतम् । सर्वभावेषु मूर्च्छायास्त्यागः स्यादपरिग्रहः ॥ ६ ॥ यदसत्स्वपि जायेत मूर्च्छया चित्तविप्लवः । भावनाभिर्भावितानि पञ्चभिः पञ्चधा क्रमात् ॥ ७ ॥ महाव्रतानि लोकस्य साधयन्त्यव्ययं पदम् ।' इति ॥ भावनापञ्चकप्रपञ्चनं च स्वरूपितम्—'हास्यलोभभयक्रोधप्रत्याख्यानैर्निरन्तरम् । आलोच्य भाषणेनापि भावयेत्सूनृतं व्रतम् ॥' इत्यादिना ॥ एतानि सम्यग्दर्शनज्ञानचारित्राणि मिलितानि मोक्षकारणं न प्रत्येकमित्यादि स्थितं बौद्धसिद्धान्ते ॥ मूले 'अविगीत' इत्यस्य प्रयोजनं रात्रिश्राद्धादौ व्यभिचारवारणं दर्शितम् । कथं तावत्तस्यालौकिकशिष्टाचारविषयत्वम् । निषिद्धत्वेनाशिष्टाचारविषयत्वात् । अत्रायमाशयः—अविगीतविशेषणान्तर्भावेण तस्या-

१ अवद्या गर्ह्या ये योगा उपायास्तेषाम्. २ जीवितस्य प्राणस्य व्यपरोपणं नाशनम्. ३ अर्थः धनं नृणां बाह्या बहिर्भवाः प्राणा भवन्ति, तमर्थं हरता पुंसा ते नरा हता हि इति निश्चयेन । उद्देश्यविधेययोः सामानाधिकरण्येऽपि समानलिङ्गवचनता नियमो नास्ति. ४ स्वरूपतो निदर्शितम्. ५ अत्र बौद्धशब्देन समानधर्मतया आर्हतो ग्राह्यः । सर्वक्षमाधवाचार्यैः तदेतत्सप्रपञ्चमुक्तमर्हतेत्युक्त्वा उक्तवचनजातानामार्हतदर्शन एवोपन्यसनात्.

पदं स्पष्टार्थम्। 'न कुर्यान्निष्फलं कर्म' इति जलताडनादेरपि निषिद्धत्वादिति। तर्क्यन्ते प्रतिपाद्यन्त इति तर्का द्रव्यादिसप्तपदार्थास्तेषां संग्रहः संक्षेपेण स्वरूपकथनं क्रियत इत्यर्थः॥ कस्मै प्रयोजनायेत्यत आह—सुखबोधायेति। सुखेनानायासेन बोधः पदार्थज्ञानं तस्मा इत्यर्थः॥ ननु बहुषु तर्कग्रन्थेषु सत्सु किमर्थमपूर्वग्रन्थः क्रियत इत्यत आह—बालानामिति। तेषामतिविस्तृतत्वाद्बालानां ततः सुखेन बोधो न भवतीत्यर्थमित्यर्थः। ग्रहणधारणपटुर्बालः। न तु स्तनंधयः॥ किं कृत्वा क्रियत इत्यत आह—निधायेति। विश्वेशं जगन्नियन्तारं शिवं हृदि निधाय नितरां स्थापयित्वा। सर्वदा तद्ध्यानपरो भूत्वेत्यर्थः॥ गुरूणां विद्यागुरूणां वन्दनं नमस्कारं विधाय कृत्वेत्यर्थः॥

**द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तपदार्थाः ॥१॥**

## नीलकण्ठी.

रति—**शिष्टपदमिति**। जलताडनादौ अशिष्टाचारविषये हेतोरसत्त्वं स्फुटयति—**न कुर्यादिति**। स्वर्गादिफले व्यभिचारवारणाय **आचारविषयत्वेति**। विधेयतया आचारविषयत्वार्थकमिति संक्षेपः॥ तर्कपदस्यारोपार्थकत्वभ्रमं वारयितुं द्रव्यादिसाधारणतर्कत्वं निर्वक्ति—**तर्क्यन्त इति**। उपादानरूपसंग्रहस्यासंभवादाह—**संक्षेपेणेति**। **स्वरूपकथनं** स्वरूपज्ञानानुकूलः शब्दः। एतावता द्रव्यादिपदार्था विषयाः, पदार्थतत्त्वावधारणं प्रयोजनम्, संबन्धश्च प्रतिपाद्यप्रतिपादकभावः, पदार्थतत्त्वावधारणकामोऽधिकारीत्यनुबन्धचतुष्टयं प्रेक्षावत्प्रवृत्त्यङ्गं सूचितम्॥ षष्ठीतत्पुरुषभ्रमवारणायाह—**सुखेनेति**। सुखबोधरूपप्रयोजनस्याऽन्यतः सिद्धत्वेन एतद्ग्रन्थकरणे प्रयोजनाकाङ्क्षा न शाम्यतीत्याशयेनावतारयति—**नन्विति**। **तेषां** भाष्यादिग्रन्थानाम्। **मूले सप्तपदार्था इति**। द्रव्यत्वादिरूपा ये पदार्थविभाजकाः सप्तो-

## भास्करोदयाख्यव्याख्या.

नतिप्रयोजनकत्वेन वैयर्थ्यस्य वक्ष्यमाणतया तदघटितत्वेन शङ्कोत्तरे इति। **विधेयतया आचारविषयत्वार्थकमिति**। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति वाक्याज्ज्योतिष्टोमाभिन्नयागैककरणिका स्वर्गोद्देश्यकभावनेति बोधात् श्रुतौ 'स्वर्गकाम' इत्यनेन स्वर्गस्येच्छाविषयत्वप्रतीतेः। तदुद्देश्यताख्यमेव नतु विधेयताख्यम्। तस्य पूर्वत्वादिति भावः। **उपादानरूपसंग्रहस्येति**। 'अनित्यानि शरीराणि' इति श्लोके संग्रहपदस्योपादानरूपार्थप्रसिद्धेः॥ 'स्वरूपकथनम्' इति मूलस्थस्वरूपशब्देनाकृतेर्बोधात्तस्य चार्थरूपत्वेन ताल्वोष्ठपुटसंयोगानुकूलव्यापारविषयत्वाभावेन न्यूनतां परिहरति—**स्वरूपज्ञानानुकूलः शब्द इति**। **एतावतेति**। तर्कसंग्रहपदस्योक्तार्थकरणेनेत्यर्थः॥ **सूचितमिति**। विषयमात्रप्रतिपादनेऽपि इतरेषां ध्वनितत्वं बोध्यम्। यद्यपि सुखबोधायेति वाक्यस्य षष्ठीतत्पुरुषघटितत्वसंभावनया षष्ठ्याश्च विषयविषयिभावार्थत्वेन चतुर्विंशतिगुणत्वेन सुखविषयकबोधकत्वात्संभवति संभवदुक्तिकत्वं तथापि द्रव्यादिपदार्थानां प्रतिपाद्यत्वेन प्रतिज्ञाहानेर्दुरुपपन्नत्वादित्याशयेनाह—**भ्रमवारणायेति**। **भाष्यादिग्रन्था-**

पदार्थान्विभजते—द्रव्येति । पदस्यार्थः पदार्थ इति व्युत्पत्त्याभिधेयत्वं पदार्थसामान्यलक्षणमिति[1] लभ्यते ॥ नन्वत्र विभागादेव सप्तत्वे लब्धे सप्तग्रहणं किमर्थमिति[2] चेत् । न । अधिकसंख्याव्यवच्छेदार्थत्वात् ॥ नन्वतिरिक्तः पदार्थः

---

## नीलकण्ठी.

पाधयस्तदन्यतमवन्तः पदार्था इत्यर्थः ॥ अत्र सप्तत्वमपेक्षाबुद्धिविशेषविषयत्वम् । एवमेवाग्रिमग्रन्थस्यापि अत्रैव पर्यवसानमवसेयम् ॥ ननु सामान्यधर्मज्ञानस्य विशेषजिज्ञासां प्रति हेतुत्वात्सामान्यलक्षणकथनानन्तरमेव विभागो युक्तः । तथा च मूले कथमादौ विभाग इति न्यूनतां परिहरति—**पदस्येति** । **अर्थः** अभिधेयः ॥ उक्तव्युत्पत्त्या पदसंबन्ध्यभिधाविषयत्वस्य लाभेऽपि पदसंबन्धित्वांशस्याव्यावर्तकत्वादाह—**अभिधेयत्वमिति** । लक्षणं लभ्यत इति शेषः । तथा च न न्यूनतेति भावः ॥ **विभागादेवेति** । पदार्थत्वावान्तरधर्मपुरस्कारेण धर्मिप्रतिपादनादेवेत्यर्थः ॥ **अधिकसंख्याव्यवच्छेदार्थत्वादिति** । तादृशसंख्यानिषेधसिद्धिफलकत्वादित्यर्थः ॥

## भास्करोदयाख्यव्याख्या.

**नामिति** । वैशेषिकनैयायिकभाष्याणामित्यर्थः । **मूले सप्तपदार्था इतीति** । सप्तैव पदार्था इत्यर्थः । प्रमाणादीनां सप्तस्वेवान्तर्भावात्तस्यात्रैव वक्ष्यमाणत्वात् । (नन्वेवं[3] सति घटः घट इत्यादिधारावाहिकबुद्धिविषयधर्मिभेदस्य धर्मभेदाप्रयोज्यत्वादुक्तनियमभङ्गप्रसङ्ग इति चेत् । न । विभिन्नबुद्धिविषयतादृशधर्मिभेदस्यैव धर्मभेदव्याप्यत्वनियमात् । प्रकृते धारावाहिकबुद्धेः सर्वमत एवाभिन्नत्वाभ्युपगमात्) । **द्रव्यत्वादिरूपा ये पदार्थविभाजकाः सप्तोपाधयस्तदन्यतमवन्तः पदार्था इत्यर्थ इति** । सप्तत्वस्य प्रत्येकवृत्तित्वेन गुणे गुणानङ्गीकारन्याये विरोधं मनसिकृत्याह—**सप्तत्वमपेक्षाबुद्धिविशेषविषयत्वमिति** न संख्यारूपमित्यर्थः ॥ **एवमेवाग्रिमग्रन्थस्यापि,** रूपादिचतुर्विंशतिगुणा इति वक्ष्यमाणग्रन्थस्यापि । **अत्रैव,** चतुर्विंशतित्वस्याप्यपेक्षाबुद्धिविशेषविषयत्व एव । **पर्यवसानं** तात्पर्य**मवसेयं** बोध्यमित्यर्थः ॥ पदस्यार्थः पदार्थ इति योगमर्यादयाभिधेयत्वलक्षणवर्णनपरमूलाशयं वर्णयितुमाशङ्कते—**नन्विति** । **विशेषजिज्ञासां प्रति** । विशेषधर्मप्रकारकजिज्ञासां प्रति । **पदसंबन्धित्वांशस्याव्यावर्तकत्वादिति**[4] ताल्वोष्ठपुटसंयोगानुकूलव्यापारविषयत्वरूपाभिधाविषयत्वस्य पदसंबन्धित्वाल्लक्ष्यस्य लक्षणवाचकपदबोधविषयत्वादित्याकूतम् । 'अस्तिर्भवन्ती[5]परोऽप्रयुज्यमानोऽप्यस्ति' इति कात्यायनस्मरणात् 'नहि क्रियाविनिर्मुक्तं वाक्यमस्ति' इति महाभाष्याच्च प्राप्तन्यूनतां परिहरति—**लभ्यत इति** शेषपूरणेन । ननूद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदके विधेयव्याप्यत्वभानस्य स्वाभाविकत्वाभिमतत्वे विप्रकृष्टपर्वतत्वे वह्निव्याप्यत्वापात इति चेत्, न । अनुमितेर्व्याप्तिविशि-

---

१ इति लभ्यते, लभ्यते, उभयविधोऽपि पाठः प्रामाणिकपुस्तकेषु न दृश्यते. २ व्यर्थमिति १।२ पुस्तके पाठः. ३ अयं पाठः प्रामादिकः प्रतिभाति. ४ अव्यावर्तकत्वेन विशेषणानर्हत्वादिति तदर्थः. ५ भवन्तीति पूर्वाचार्याणां लटः संज्ञा भुवो झिच् औणादिकस्ततो ङीप्प्रत्यये भवन्ती इति भवति.

प्रमितो न वा । नाद्यः, प्रमितस्य निषेधायोगात् । नान्त्यः, प्रतियोगिप्रमितिं विना निषेधानुपपत्तेरिति चेत् । न । पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यमिति व्यवच्छेदार्थत्वात् ॥ [1]ननु सप्तान्यतमत्वं सप्तभिन्नभिन्नत्वम् । एवं च सप्तभिन्नस्याप्रसिद्धत्वात्सप्तान्यतमत्वं कथमिति चेत् । न । द्रव्यादिसप्तान्यतमत्वं द्रव्यादिभेदसप्तकाभाववत्त्वमिति तदर्थत्वात् । एवमग्रेऽपि द्रष्टव्यम् ।

## नीलकण्ठी.

उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदके विधेयव्याप्यत्वभानमौत्सर्गिकमित्याशयेनाह—**पदार्थत्वमिति** । इति **व्यवच्छेदार्थत्वादिति** । इति एतद्रूपो यो व्यवच्छेदो निर्णयविशेषस्तदर्थत्वादित्यर्थः ॥ **सप्तभिन्नभिन्नत्वमिति** । द्रव्यादयो ये सप्त पदार्थास्तद्भेदकूटविशिष्टभिन्नत्वं वक्तव्यमित्यर्थः ॥ **द्रव्यादिभेदसप्तकाभाववत्त्वमिति** । द्रव्यादिभेदानां प्रत्येकप्रसिद्धानां सप्तानां कुत्राप्यसत्त्वेन तादृशभेदसप्तकत्वावच्छिन्नाभावस्य सर्वत्र सत्त्वान्न दोष इति भावः ॥ वस्तुतस्तु पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यमित्यस्य पदार्थत्वं द्रव्यत्वादिसप्तोपाध्यन्यतमव्याप्यमित्यर्थः ॥ एवं च वहुषु पुस्तकेषु सप्तान्यतमत्वाप्रसिद्धिशङ्का तत्समाधानपरस्य **ननु सप्तान्यतमत्वम्** इत्यादि ग्रन्थस्यासत्त्वेपि न क्षतिरिति ध्येयम्॥ **एवमग्रेऽपीति** । एवंरीत्या द्रव्याणीत्यादावपीत्यर्थः ॥ **द्रव्यमिति** जात्येकवचनम् ॥ मीमांसकमतं दूषयितुमु-

## भास्करोदयाख्यव्याख्या.

ष्टपक्षधर्मताज्ञानजन्यत्वाद्व्याप्तिमद्धूमवत्पर्वतत्वत्वावच्छेदेनैव विधेयव्याप्यत्वमिति तात्पर्यात् । 'अधिकसंख्याव्यवच्छेदार्थत्वात्' इति पूर्वग्रन्थस्थव्यवच्छेदपदस्य निषेधार्थकत्ववर्णनात्प्रकृते तदसंभवप्रयुक्तमूलन्यूनतानिरासायार्थान्तरमाचष्टे—**व्यवच्छेदो निर्णयविशेष इति** । 'द्रव्यादिभेदसप्तकाभाववत्त्वम्'इति मूलस्य सप्तेतरासिद्धिपरत्वे 'भक्षितेऽपि लशुने न शान्तो व्याधिः' इति न्यायेन द्रव्यादीनां ये भेदाः सप्त ते यस्मिन्नित्यन्यपदार्थप्रधानकसमासेनेतरबोधेनाप्रसिद्धिशङ्काया अनिरासात् तदाशयं वर्णयति—**द्रव्यादिभेदानामित्यादिना** । **भेदसप्तकत्वावच्छिन्नेति** । प्रत्येकं सप्तभेदा यस्मिन् भेदसमुदाये स तादृशभेदसप्तकः । तादृशसमुदायत्वावच्छिन्नाभावस्यावयवेषु प्रसिद्धिरिति तदाशयः । स्वोत्प्रेक्षितार्थमाचष्टे—**वस्तुतस्त्वति । द्रव्याणीत्यादावपीत्यर्थ इति । द्रव्यमिति जात्येकवचनमिति ।** द्रव्यपदोत्तरैकवचनार्थैकत्वस्य व्यक्त्यावन्वये पृथिव्यादिरूपैकद्रव्यस्य घटत्वपटत्वादिना तद्विभागसंभवेऽपि पृथिवीत्वादिना द्रव्यत्वावच्छिन्नानां तद्विभागानुपपत्तेर्जात्यन्वयि । तथाच सर्वानुगतैकद्रव्यत्वावच्छिन्नपृथिव्यादिधर्मिकपृथिवीत्वाद्यवान्तरधर्मप्रकारकप्रतिपादनानुकूलवर्तमानकालिककृतिमानेकत्वाश्रयो मूलकार इति बोधः ॥ 'जात्याख्यायाम्' एतत्पाणिनीयं नापूर्वम् । जात्यन्वयविवक्षायामेकवचनं, व्यक्त्यन्वयविवक्षायां वहुवचनं च साध्वित्यभिहितं भाष्य इति ध्येयम् । संग्रहे **तत्रेत्यादि । नवैवेति ।** द्रव्यत्वं पृथिवीत्वादिनवोपाध्यन्यतमव्याप्यं बोध्यमित्यर्थः ।

[1] ननु इत्यादि तदर्थत्वादित्यन्तो ग्रन्थः प्रामाणिकपु. नास्ति.

**तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव २**

द्रव्यं विभजते—तत्रेति। तत्र द्रव्यादिमध्ये द्रव्याणि नवैवेत्यन्वयः। कानि तानीत्यत आह—पृथिवीत्यादि। ननु तमसो दशमद्रव्यस्य विद्यमानत्वात्कथं नवैव द्रव्याणि। तथाहि—'तमः खलु चलं नीलं परापरविभागवत्। प्रसिद्धद्र-

## नीलकण्ठी.

पन्यस्यति—**नन्वित्यादिना। प्रतीतिवलात्** प्रात्यक्षिकप्रतीतिवलात्॥ तस्य द्रव्यत्वेऽनुमानं प्रमाणयति—**नीलरूपाधारतयेति**। समवायेन नीलरूपवत्तये-त्यर्थः॥ तेन कालिकादिसंबन्धेन तस्यातिप्रसक्तत्वेऽपि न क्षतिः। एवमग्रेपि बोध्यम्।

## भास्करोदयाख्यव्याख्या.

**मीमांसकमतं दूषयितुमुपन्यस्यतीति।** दूषणस्योपन्यासपूर्वकत्व एव निर्विचिकित्सं प्रेक्षावत्प्रवर्तकत्वमिति भावः। तदुक्तं तैर्नैयायिकमते तमसस्तेजोभावरूपत्वे दूषणम्—यदि तमस्तेजोऽभावः स्यात्तर्हि रत्नादिषु तेजःसामानाधिकरण्येन छायाधीर्न स्यात्। किंच 'रश्मिरग्निरजश्छाया गौरश्वो वसुधानिलः। विप्रुषो मक्षिकास्पर्शे वत्सः प्रस्रवणे शुचिः' इति स्मृतिष्वेतच्छायायाः शुचित्वस्य, 'चण्डालपतितच्छायां स्पृष्ट्वा स्नानं समाचरेत्' इत्युक्तेश्चण्डालच्छायायाश्चाशुचित्वस्य व्यवस्था घटेद्यदि मूर्तद्रव्यत्वं तमसो भवानभ्युपगच्छेत्, मूर्तद्रव्यस्पर्शस्य दोषजनकतानियमादिति। ननु तमो यदि नीलं तमश्चलतीति प्रतीत्या रूपि द्रव्यं स्यात्तर्हि आलोकनिरपेक्षचक्षुर्ग्राह्यं न स्याद्रूपिद्रव्यप्रत्यक्षे आलोकसापेक्षचक्षुषः कारणत्वनियमादिति चेत्। न। यथा भवन्नये रूपवदभावस्यालोकसापेक्षचक्षुर्ग्राह्यत्वनियमेऽप्यालोकाभावे तत्त्यागः एवं ममापीत्यदोषः। ननु आलोके आलोकापेक्षाभावात्तदभावग्रहेऽपि नालोकापेक्षा। योग्यानुपलब्ध्याऽभावग्रहः। प्रतियोगितद्व्याप्येतरयावत्प्रतियोगिग्राहकसामग्रीसमवधानं च योग्यता। आलोकाभावग्रहे चालोकस्य प्रतियोगित्वेन तत्सत्त्वे योग्यताविरहादितिचेत्। न। आलोके आलोकापेक्षाभावे त्वदुक्तव्याप्तेस्तत्रैव व्यभिचारात्॥ अथ तत्राप्यस्त्येवावयवरूपालोक इति चेत्तर्ह्यवयवभूतालोकस्य प्रतियोगितद्व्याप्येतरत्वात्कथं तेन विनाऽऽलोकाभावश्चाक्षुषः स्यादित्युभयतःपाशा रज्जुः। एवं तमः आरब्धं द्रव्यं महत्त्वे सति रूपवत्त्वात्। नचासिद्धिः। प्रत्ययस्य सार्वजनीनत्वात्। नचैतस्य भ्रान्तत्वं, विनिगमनाविरहेण तवैव किं न स्यादिति॥ अपि च तेजोभावं तमो वदन्प्रष्टव्यः। कस्तमोरूपाभावः। न प्रागभावध्वंसौ, सौरालोके प्रदीपोत्पत्तिविनाशाभ्यां प्रागूर्ध्वं च तमोबुद्ध्यापत्तेः। तेजःसामान्याभावरूपत्वं तु दुर्वचमेव। तमस्यपि देशे तेजःपरमाणुसत्तावश्यकत्वात्। विशेषादर्शनेऽपि सामान्यदर्शनात्। अत एव नान्योन्याभावात्यन्ताभावौ। किंच तेजस एव तमोभावत्वं किं न स्यात् विनिगमनाविरहात्। अत एव विवरणे भट्टनये तमसो द्रव्यत्वमुक्तम्। तदुक्तम्—'तमः खलु चलं नीलं परापरविभागवत्। प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति' इति। तस्मात्सिद्धं तमसोऽतिरिक्तद्रव्यत्वम्।

१ अयं श्लोकः प्रक्षिप्तः. २ दूषणमित्यनेनान्वेति.

न्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति॥' नीलं तमश्चलतीत्यबाधितप्रतीतिबलान्नीलरूपाधारतया क्रियाधारतया च द्रव्यत्वं तावत्सिद्धम्। तत्र तमसो नाकाशादिपञ्चकेऽन्तर्भावो रूपवत्त्वात्। अत एव न वायौ स्पर्शाभावात्। सदागतिमत्त्वाभावाच्च। नापि तेजसि भास्वररूपाभावादुष्णस्पर्शाभावाच्च। नापि जले शीतस्पर्शाभावान्नीलरूपाश्रय-

## नीलकण्ठी.

तत्र द्रव्यत्वे सिद्धे सति ॥ अतिरिक्तत्वं व्यवस्थापयितुं क्लृप्तद्रव्येष्वन्तर्भावं निराचष्टे–**तमस** इत्यादिना। **अत एव** रूपवत्त्वादेव ॥ **न वायाविति** । अन्तर्भाव इत्यनुषज्यते ॥ संबन्धभेदाभिप्रायेणाह—**स्पर्शाभावादिति**। इदं च ध्वंसप्रागभावयोरधिकरणेऽत्यन्ताभावो नाङ्गीक्रियत इति प्राचीनमताभिप्रायेण । अन्यथा समवायावच्छिन्नस्पर्शसामान्याभावस्य दैशिकविशेषणतया वायावप्युत्पत्तिकालावच्छेदेन

## भास्करोदयाख्यव्याख्या.

इदानीं प्रतीत्यैव तत्साधयतः प्रतीतावबाधितत्वविशेषणफलं दर्शयति–**बाधितप्रतीतेर्विषयासाधकत्वादिति**। यथा चाकचक्यादिना शुक्तौ रजतत्वज्ञानोत्तरकाले नीलपृष्ठत्वादिविशेषज्ञानेन बाधावताराम्न रजतत्वनिश्चयः, एवं तमसि विदुषां गगनतलमलिनत्ववन्नीलरूपवत्त्वप्रतीतेर्दीपापसारणोपाधिकक्रियाप्रतीतेश्च भ्रमविषयत्वेन बाधितत्वात् बाधितप्रतीतेर्न विषयसाधकत्वमित्याशयेनायमुल्लेखः। **प्रात्यक्षिकप्रतीतिबलादिति** । एतस्यास्तु नाप्रामाण्यमबाधितत्वेन निखिलभूयोऽनुभवात् ॥ 'प्रत्यक्षाकलितमप्यर्थमनुमानेनैव बुभुत्सन्ते तर्करसिकाः' इति मणिकारोक्तेः स्वस्य तर्करसिकत्वबोधनायाह–**तस्य** तमसः। **द्रव्यत्वे** विधेयतया तत्त्वे। **अनुमानम्**। तमो द्रव्यत्ववत्, रूपवत्त्वात्, क्रियावत्त्वात् पृथिवीवत् इति। **प्रमाणयति**। प्रमाणत्वेन इच्छति। ननु कथं नीरूपनिष्क्रियत्ववत्याकाशे द्रव्यत्वसिद्धिरिति चेत्, न। गुणवत्त्वस्यैव द्रव्यत्वसाधकत्वात्। अत्र रूपस्य गुणरूपत्वात्। अत एव वक्ष्यमाणद्रव्यसामान्यलक्षणे गुणवत्त्वाभिधानं, क्रियावत्त्वाभिधानं त्वभ्युच्चयमात्रं वेदितव्यम् । **एवमग्रेऽपि बोध्यमिति** । क्रियाधारत्वमपि समवायेनैव बोध्यमित्यर्थः । समानगुणकानामेवान्तर्भावनैयत्यादभावादनन्तर्भावमभिव्यंजयितुमभिहितं मूले **स्पर्शाभावादिति** हेत्वन्तरं । तच्च संबन्धभेदाभिप्रायकमित्याह–**संबन्धभेदाभिप्रायेणाहेति**। स्पर्शः संयोगजन्यो गुणविशेषः। समवायादाविव तमसि समवायेन नानुभवविषय इति नान्तर्भावाशङ्कागम इति तदाशय इति बोध्यम्। **ध्वंसप्रागभावयोरधिकरणेऽत्यन्ताभावो नाङ्गीक्रियत इति प्राचीनमताभिप्रायेणेति**। तेषां त्वयमाशयः। ध्वंसप्रागभावाधिकरणे घटो नास्तीति नात्यन्ताभावावगाहिप्रत्ययः ध्वंसो भविष्यतीति प्रत्ययाद्विरोधितया न स इति। नव्यास्तु। घटो नास्तीत्यविशेषप्रत्ययाद्ध्वंसप्रागभावात्यन्ताभावानां नञ्पदवाच्यत्वमावश्यकम् । एतदभिप्रायेणैवात्यन्ताभाव इत्युपेक्ष्य संस-

१ बोद्धुमिच्छन्ति, इति चिन्तामणिकारस्य गङ्गेशोपाध्यायस्य मैथिलस्य वचनम्.
२ समवायेन पूर्वत्र, इह च स्वरूपेणेति भेदः.

त्वाच्च । नापि पृथिव्यां गन्धवत्त्वाभावात्स्पर्शरहितत्वाच्च । तस्मात्तमो दशमद्रव्यमिति चेन्न । तमसस्तेजोभावरूपत्वात् ॥ तथाहि । तमो हि न रूपिद्रव्यं

## नीलकण्ठी.

सत्त्वाद्व्यभिचरितत्वापत्तेः । वस्तुतस्तु निरवच्छिन्नदैशिकविशेषणतया तस्य हेतुत्वमिति ध्येयम् ॥ विषमव्याप्तं हेतुमभिधाय समव्याप्तं तमाह—**सदागतीति** ॥ सदागतिर्विजातीयक्रिया ॥ उपसंहरति—**तस्मादिति** ॥ क्लृप्तेष्वनन्तर्भावादित्यर्थः ॥ **तेजोभावरूपत्वादिति** ॥ प्रौढप्रकाशकतेजोभावरूपत्वाङ्गीकारादित्यर्थः ॥ अतस्तमस्यत्यपि देशे तेजःपरमाण्वादिसत्त्वेन तेजःसामान्याभावासत्त्वेऽपि न क्षतिः ॥

## भास्करोदयाख्यव्याख्या.

र्गाभावो नञोऽर्थ इत्युक्तं दीधितिकृता नञ्पदशक्तिनिरूपण इति । तत्र घटो नास्तीत्यादौ **यद्यभावत्वेनैव** बोधस्तदाऽभावत्वमेव नञ्पदशक्यतावच्छेदकम् । यदि चात्यन्ताभावत्वादिना बोधस्तदात्यन्ताभावत्वादिकं नञ्पदशक्यतावच्छेदकमिति न विरोधप्रसङ्ग इत्याहुः । न चैवं यत्किंचिद्घटवत्यपि घटान्तराभावसत्त्वाद् घटो नास्तीति प्रत्ययापत्तिरिति वाच्यम् । नञ्समभिव्याहारेऽन्वयितावच्छेदकावच्छिन्नप्रतियोगितानिरूपितानुयोगितासंबन्धेनैवाभावांशे प्रतियोगिनो भानस्य व्युत्पत्तिसिद्धतयाऽदोषात् । नच कम्बुग्रीवादिमान्नास्ति प्रमेयघटो नास्तीत्यादौ कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगित्वाप्रसिद्ध्योक्तव्युत्पत्तिभङ्ग इति वाच्यम् । गुरुधर्मस्याप्यनुभवबलेन प्रतियोगितावच्छेदकत्वाङ्गीकारात् । नच पीतः शङ्खो नास्तीत्यादावगतिः । पीतशङ्खत्वादेरन्वयितावच्छेदकस्याप्रसिद्धेरिति वाच्यम् । तत्र पीतपदस्य पीतत्वप्रकारकज्ञानविषये लाक्षणिकतयाऽप्रसिद्ध्यभाव इति नव्याः । अधिकमधिकजिज्ञासुभिरन्यत्र द्रष्टव्यम् । स्पर्शाभावरूपहेतुनाऽनन्तर्भावस्य सिद्धतया सदागतिमत्त्वाभावादिति हेतोर्वैफल्यं मनसिकृत्य तदाशयं वर्णयति—**विषमव्याप्तं हेतुमभिधाय समव्याप्तं तमाहेति** । विषमव्याप्तत्वं च साध्यमात्रव्याप्तिकत्वम् । समव्याप्तिकत्वं च हेतुव्यापकसाध्यव्यापकत्वं बोध्यम् । **प्रौढप्रकाशकतेजोऽभावरूपत्वाङ्गीकारादित्यर्थ इति** । तथाचोक्तं मीमांसकैः । तमसस्तेजोऽभावरूपत्वे रत्नादिषु तेजःसामानाधिकरण्येन छायाधीर्न स्यादिति । तदतीवाविचारसहम् । तेजस्तिमिरयोः सामानाधिकरण्यस्याबालवृद्धप्रत्ययाविषयत्वात् । यदपि ऋते मूर्तद्रव्यत्वं छायाया निषिद्धानिषिद्धत्वस्मार्तविधानानुपपत्तिरिति । तदप्यकिंचित्करम् । तत्तच्छायायास्तत्तदाकारत्वेन तत्संबन्धित्वभ्रमेणोरगस्य सुवर्णच्छायाया भयजनकत्ववदेतच्छायायास्तदाकारस्पर्शभ्रममूलकव्यवहारविषयत्वेन दोषजनकत्वबोधकस्मार्तविधेरनिषिद्धप्रसरत्वात् । अपिचोक्तं न प्रागभावध्वंसान्योन्याभावात्यन्ताभावान्यतमरूपत्वं, सौरालोके प्रदीपोत्पत्तिविनाशाभ्यां चन्द्रालोकभेददतदत्य-

१ स्वव्यापकसाध्याधिकरणवृत्त्यभावप्रतियोगिधूमादिर्विषमव्याप्तः । तादृशाभावाप्रतियोगिगन्धवत्त्वादि समव्याप्तम्.

आलोकासहकृतचक्षुर्ग्राह्यत्वात् । आलोकाभाववत् । रूपिद्रव्यचाक्षुषप्रमायामालोकस्य कारणत्वात् । तस्मात्प्रौढप्रकाशकतेजःसामान्याभावस्तमः । तत्र नीलं तमश्चल-

---

## नीलकण्ठी.

त्र्यणुकादिवारणाय **प्रौढेतीति** दिक् ॥ घटादिषु व्यभिचारवारणाय **आलोकासहकृतेति** ॥ चक्षुर्ग्राह्यत्वं चक्षुर्जन्यज्ञानीयलौकिकविषयत्वम् । तेन तमसश्चाक्षुषे घटादीनामुपनयमर्यादया भानेऽपि न क्षतिः ॥ विशेषाभावं दृष्टान्तयति—**आलोकाभाववदिति** ॥ आलोकं विना रूपवत्त्वेन तमोविषयकचाक्षुषभ्रमोदयादाह—**प्रमायामिति** ॥ **कारणत्वादिति** । अन्यथा अन्धकारस्थघटादेश्चाक्षुषापत्तेरिति दिक् ॥ ननु तमसस्तादृशतेजोऽभावरूपत्वे तमसि रूपवत्ताप्रतीतिः कर्मवत्ताप्रतीतिश्च कथम्, अभावे रूपकर्मणोरभावादित्यत आह—**तत्रेति** ॥ तमसोऽतिरिक्तत्वेऽनन्तावयवतत्प्रागभावादिकल्पनागौरवमत आवश्यकतादृशतेजोभावरूपत्वं सिध्यतीत्यपि बोध्यम् ॥ इति तमोवादः ॥ ॥ मुक्तिसाधनीभूतपदार्थतत्त्वज्ञानं लक्षणज्ञानं विना

## भास्करोदयाख्यव्याख्या.

न्ताभावाभ्यां च तद्व्यवहारप्रसक्तेरप्रत्यूहत्वादिति । तदप्यविचारतः । प्रौढप्रकाशकतेजस्त्वसामान्यधर्मावच्छिन्नाभावत्वाभ्युपगमेनादोषात् । यदपि तेजोऽभावरूपत्वे विनिगमनाविरह इति तदप्यविचारत एव । सौरादितेजस उष्णस्पर्शाश्रयस्य भावत्वेनानुभवस्यैव विनिगमकत्वात् । यदपि उदाजह्रुः तमः खल्वित्यादि भाट्टवचनं तमसोऽतिरिक्तत्वविवरणे, तदुक्तगौरवादेव निरस्तमित्यलम् ॥ **घटादिषु व्यभिचारवारणायालोकासहकृतेतीति** । चक्षुर्ग्राह्यत्वविशेषणमितीति शेषः । **उपनयमर्यादयेति** । ज्ञानलक्षणाप्रत्यासत्त्येति तदर्थः । **विशेषाभावं दृष्टान्तयतीति** । सामान्याभावस्य तत्त्वे इह भूतले घटो नास्तीति प्रतीतिविषयघटाभावे येनेन्द्रियेणेतिन्यायेनालोकसहकृतचक्षुर्ग्राह्यत्वमन्धकारे तु तत्संशयो नतु निश्चयः । एवं च रूपवदभावप्रत्यक्षे आलोकसहकृतचक्षुषः कारणत्वेन तत्संभवतात्पर्येण विशेषाभावदृष्टांतानुधावनमिति भावः । ( केनचित्तर्कशून्येन व्याप्यमात्रावस्थानेन व्यापकविरहशङ्कायां तर्कज्ञः किल तर्कयति । व्याप्यस्यालोकसहकृतविशेषितत्वेनालोकसहकृतचक्षुषश्च रूपिद्रव्यचाक्षुष एव कारणत्वात्तेन व्यापकरूपद्रव्यत्वाभावारोपः सिध्यतीत्याशयकमूलतात्पर्यं बोधयितुमाह—प्रयोजकत्वशंकां वारयतीति (?) ) प्रमापदप्रयोजनं दर्शयति—**आलोकं विनेत्यादिना** । **रूपवत्त्वेन तमोविषयकचाक्षुषभ्रमोदयादिति** । एतेनाभावान्तर्भावो ध्वनितः । तुष्यतु दुर्जनन्यायेन दोषममिदधत्यनन्तावयवेत्यादिबोध्यान्तेन । **मुक्तिसाधनीभूतपदार्थतत्त्वज्ञानमिति** । तत्त्वज्ञानमबाधितार्थज्ञानं लक्षणज्ञानाधीनमित्याशयेनाह—**लक्षणज्ञानं विनेति** । विभागबोधकमादिपदमुपस्थापयति—**संयोगादीति** । गुणवत्त्वलक्षणमवतारयितुमाशंकते—**नन्विति** । **न्यूनतापि नेति** । द्रव्यविभाग-

तीति प्रत्ययो भ्रमः । अतो नव द्रव्याणीति सिद्धम् ॥ द्रव्यत्वजातिमत्त्वं गुणवत्त्वं वा द्रव्यसामान्यलक्षणम् ॥ लक्ष्यैकदेशावृत्तित्वमव्याप्तिः । यथा गोः कपिलत्वम् ॥ अलक्ष्यवृत्तित्वमतिव्याप्तिः। यथा गोः शृङ्गित्वम् ॥ लक्ष्यमात्रावर्तनमसंभवः । यथा गोरेकशफत्वम् ॥ एतद्दूषणत्रयरहितो धर्मो लक्षणम् । यथा गोः सास्नादिमत्त्वम् ।

## नीलकण्ठी.

नोपपद्यते अत आह—**द्रव्यत्वेति** ॥ संयोगादिजनकतावच्छेदकतया द्रव्यत्वजातिसिद्धिरिति भावः ॥ ननु लक्षणलक्ष्यतावच्छेदकयोरभेद इत्यत आह—**गुणवत्त्वमिति** ॥ **द्रव्यसामान्यलक्षणमिति** ॥ एवं च सामान्यधर्माकथनेन न्यूनतापि नेति भावः ॥ दूषणत्रयरहितधर्मस्यैव लक्षणत्वस्य वक्ष्यमाणतया तज्ज्ञानं विशेषणीभूतदूषणत्रयरहितत्वज्ञानं विना न संभवति । दूषणत्रयरहितत्वज्ञानं तु विशिष्य दूषणत्रयज्ञानाधीनमभावबुद्धिं प्रति प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य तन्त्रत्वादित्याशयेन दूषणत्रयं प्रदर्शयति—**लक्ष्यैकदेशावृत्तित्वमिति** ॥ लक्षणतावच्छेदकत्वाभिमतसंबन्धेन किंचिल्लक्ष्यावृत्तित्वमित्यर्थः ॥ **लक्ष्यमात्रेति** ॥ मात्रपदं कृत्स्नार्थकं संबन्धविशेषावच्छिन्नलक्ष्यवृत्तित्वसामान्याभावस्फोरकम् ॥ **एकशफत्वमिति** ॥ न चात्रालक्ष्यवृत्तित्वरूपातिव्याप्तेरपि सत्त्वात्संकर इति वाच्यम् ॥ दुष्टसंकरेऽपि दोषासंकरादिति दिक् ॥ **एतद्दूषणत्रयरहित इति** ॥ उक्तदूषणाभावत्रयविशिष्ट इत्यर्थः ॥ नन्वसाधारणधर्मो लक्षणमिति हि

## भास्करोदयाख्यव्याख्या.

न्यूनतापि नेति तदर्थः । सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासां प्रति हेतुत्वादिति भावः । द्रव्यलक्षणस्य दलैकात्मकत्वेन तत्र प्रयोजनाभावेनासंगत्याऽव्याप्त्यादिदोषत्रयस्वरूपनिर्वचनमप्रासङ्गिकमित्याशंकामपनोदयन् सप्रयोजनकत्वं व्यवस्थापयितुमाह—**दूषणत्रयेत्यादिना** । **लक्षणतावच्छेदकत्वाभिमतसंबन्धेन किंचिल्लक्ष्यावृत्तित्वमित्यर्थ इति** । लक्षणं हि न संबन्धसामान्येनाभिधीयतेऽतिप्रसक्तेरप्रसक्तेरसंभवाच्च, किंतु यस्य यल्लक्षणं गुणरूपं क्रियारूपमन्यतररूपं वा तस्य यथायथं संभवति संबन्धो लक्षणतावच्छेदक इति भण्यते तेन लक्ष्यैकदेशावृत्तित्वं विवक्षितमित्यर्थः । तेन कपिलत्वस्य कालिकेन गोमात्रवृत्तितया नाव्याप्तत्वाभावावसरः । **कृत्स्नार्थकमिति** । अन्ययोगव्यवच्छेदार्थत्वं तु न संभवति । "पार्थ एव धनुर्धर" इत्यत्र धनुर्धरत्वे पार्थेतरावृत्तित्ववल्लक्षणे लक्ष्येतरावृत्तित्वबोधापत्तेरसत्त्वपदवैयर्थ्यापत्तेश्चेति तद्धृदयं ज्ञेयम् । **सम्बन्धविशेषेति** लक्ष्यतावच्छेदकत्वाभिमतेत्यादिः । तेन कालिकेन नासंभवाभाव इति भावः ॥ असंभवाक्रांते एकशफत्वेऽलक्ष्यवृत्तित्वेनातिव्याप्तिदोषस्यापि सत्वात्सांकर्यमाशंकते—**नचेति** । समाधत्ते—**दुष्टसंकरेऽपीति** । व्यभिचारादिदोषाणां कुत्रचिद्धेतौ संभवेन सांकर्यमाशंक्य दुष्टसंकरेऽपि दोषासंकरादिति ग्रन्थकारोक्तप्रकारेणेहापि

स एवासाधारणधर्म इत्युच्यते ॥ लक्ष्यतावच्छेदकसमनियतत्वमसाधारणत्वम् ।

## नीलकण्ठी.

सिद्धान्तः । तत्कथं तादृशदूषणत्रयरहितो धर्म इत्यत आह—**स एवेति** ॥ **इत्युच्यत इति** । अभियुक्तैरिति शेषः ॥ ननु साधारणत्वस्य लक्ष्यालक्ष्यवृत्तित्वरूपतया तदभावरूपासाधारणत्वस्याव्याप्त्यादिदोषग्रस्तधर्मेऽपि सत्त्वात् कथं दोषत्रयरहित एवासाधारणधर्म इत्याशङ्कां परिजिहीर्षुः असाधारणत्वमन्यादृशं निर्वक्ति—**लक्ष्यतावच्छेदकसमनियतत्वमिति** ॥ लक्ष्यतावच्छेदकव्यापकत्वे सति लक्ष्यतावच्छेदकव्याप्यत्वमित्यर्थः । अव्याप्त्यसंभवग्रस्तयोर्वारणाय सत्यन्तम् ॥ अतिव्याप्तस्य वारणाय विशेष्यम् ॥ धर्मपदं तु लक्षणताघटकसंबन्धेन व्यापकत्वादितात्पर्यग्राहकमिति भावः ॥ अत्रेदं बोध्यम् ॥ एते दोषा असाधारणत्वस्य विघटकाः । अतिव्याप्तौ व्याप्यत्वस्येतरयोश्च व्यापकत्वस्य भङ्गात् । एतेषां दूषकताबीजं तु लक्षणेनेतरभेदसाधने अतिव्याप्तौ व्यभिचारः ॥ इतरयोश्च भागासिद्धिस्वरूपासिद्धी इति ॥

## भास्करोदयाख्यव्याख्या.

बोध्यमिति भावः । **स एवेति** मूलमवतारयितुमाशङ्कते—**नन्विति** । **स एवेतीति** । योऽयमुक्तदूषणत्रयाभावविशिष्टो धर्मो लक्षणात्मा स एवासाधारणधर्मात्मा, असाधारण्यस्य दूषणत्रयराहित्यरूपत्वात् । मूले असाधारणपदस्य साधारणाभावरूपार्थकत्वं विमुच्यान्यादृशपारिभाषिकार्थान्तरार्थकत्वपुरस्कारे फलजिज्ञासायां तन्निदर्शयितुं पूर्वोक्तदूषणत्रयरहितधर्मो लक्षणमिति ग्रन्थविरोधमाशङ्कते—**नन्विति । अव्याप्त्यादिदोषग्रस्तधर्मेऽपीति** । लक्ष्यालक्ष्यवृत्तित्वरूपसाधारणत्वस्य लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तत्वरूपत्वेन सत्यन्तघटिततया सप्तम्या विशिष्टार्थकत्वेन लक्ष्यवृत्तित्वविशिष्टालक्ष्यव्यावृत्तत्वरूपपर्यवसितार्थकलक्षणस्याव्याप्तिग्रस्तधर्मे गोः कपिलत्वरूपे केवलमलक्ष्यवृत्तित्वेऽपि गोवृत्तित्वविशिष्टं सत्कपिलत्वं गोभिन्नवृत्ति न भवतीति तदभावरूपासाधारणत्वस्यापत्तिरव्याप्तिग्रस्तधर्मे कपिलत्व इति भावः । एवमतिव्याप्तिग्रस्तधर्मे शृङ्गित्वेऽपि एकशफत्वरूपेऽलक्ष्यमात्रवृत्तित्वेनासाधारणत्वं बोध्यम् । लक्षणलक्षणं लक्ष्यतावच्छेदकसमनियतत्वं परिष्करोति—**लक्ष्यतावच्छेदकव्यापकत्वे सति लक्ष्यतावच्छेदकव्याप्यत्वमित्यर्थ इति** । लक्ष्यतावच्छेदकव्यापकत्वं च लक्षणे लक्ष्यतावच्छेदकगोत्ववद्गोनिष्ठात्यंताभावप्रतियोगितावच्छेदकोदासीनघटत्वादिधर्मभिन्नधर्मवत्त्वमस्ति गवासाधारणे शृङ्गित्वे सति सास्नालांगूलरूप इत्यर्थः । लक्ष्यतावच्छेदकव्याप्यत्वं च लक्षणस्य लक्ष्येतरावृत्तित्वम् । तथा च गोर्लक्षणे गोत्वव्यापके सास्नालांगूलवत्त्वरूपे गवेतरमहिषाद्यवृत्तित्वेनासाधारणत्वसमन्वयः । धर्मपदप्रवेशनतात्पर्यं दर्शयति—**धर्मेति** । नन्वस्य पारिभाषिकत्वे स एवासाधारणधर्म इत्येतद्ग्रन्थानुपपत्तिः । दूषणत्रयराहित्यस्यानुपयोगित्वादितितदुपयोगित्वसंगतिं बोधयति— **अत्रेदं बोध्यमिति** । ननु व्यभिचारादिहेतुदोषेषु पंचस्वेषामनन्तर्भावात्कथं दोषत्वमिति शंकायामाह—**एतेषां दूषकताबीजं त्विति । अतिव्याप्तौ व्यभिचार इति** । गौः इतरभिन्ना

व्यावर्तकस्यैव लक्षणत्वे व्यावृत्तावभिधेयत्वादौ चातिव्याप्तिवारणाय तद्भिन्नत्वं

## नीलकण्ठी.

ननु लक्ष्यतावच्छेदकसमनियतत्वस्य लक्षणलक्षणत्वे लक्षणस्य व्यावृत्तिरेव प्रयोजनमिति मते व्यावर्तकस्यैव तादृशलक्षणलक्ष्यतया व्यावृत्त्यादावतिव्याप्तिरित्याशङ्कां तन्मतानुसारेणैव निराकरोति—**व्यावर्तकस्यैवेति** । इतरभेदानुमितिजनकस्यैवेत्यर्थः ॥ इतरभेदविधेयकानुमितिजनकतावच्छेदकविषयताविशेषाश्रयस्यैवेति यावत् ॥ एतेन व्यावहारिकस्य व्यवच्छेदः ।. **लक्षणत्वे** गवादिलक्षणत्वे । उक्तलक्षणलक्षणस्य लक्ष्यत्व इति यावत् । लक्ष्यत्व इति पाठेऽप्ययमेवार्थो बोध्यः । **व्यावृत्ताविति** । गवादीतरभेदे गोत्वादिरूपलक्ष्यतावच्छेदकसमनियतत्वस्य अभिधेयत्वप्रमेयत्वादौ पदार्थत्वसमनैयत्यस्य च सत्त्वेनातिव्याप्तिवारणाय व्यावृत्तिभिन्नत्वमभिधेयत्वादिभिन्नत्वं च लक्षणलक्षणे निवेशनीयमित्यर्थः ॥ यद्यपि व्यावृत्तेरपि व्यावहारिकत्वस्य वक्ष्य-

## भास्करोदयाख्यव्याख्या.

श्रृङ्गित्वादितीतरभेदानुमापके साधने साध्याभाववद्वृत्तित्वरूपातिव्याप्तौ सत्याम् । **व्यभिचारः** । व्यभिचाररूपो दोष इत्यर्थः । बोध्य इति शेषः । एवमन्यत्रापि । एवं चैषां दूषकत्वं व्यभिचारासिद्धिभ्यां, न स्वत इति भावः । व्यावर्तकस्यैव लक्षणत्वे व्यावृत्तावतिव्याप्त्याशङ्कामुपपादयति—**नन्विति** । **लक्षणलक्षणत्व इति** । लक्षणसामान्यलक्षणलक्षणत्व इत्यर्थः । 'व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्' इति श्रुतेर्व्यवहारस्याप्यलक्ष्यतया तस्मिन्शङ्कासमाधानाकरणन्यूनतानिरासाय तन्मताशयं दर्शयति—**व्यावृत्तिरेव प्रयोजनमिति** । एतेन व्यवहारस्य व्यवच्छेदस्तेन न न्यूनतेति भावः । **तन्मतानुसारेणैवेति** । व्यावृत्तिरेव प्रयोजनमिति मतानुसारेणैवेत्यर्थः । **निराकरोतीति** । व्यावृत्तावव्याप्तिं निषेधतीत्यर्थः । **इतरभेदानुमितिजनकस्यैवेत्यर्थ इति** । इतरभेदानुमितिजनकताविषयत्रितयपर्याप्तेस्ततस्तावन्निष्कृष्टार्थमाह—**इतरभेदेत्यादिना** । अत्र विषयताश्रयस्येत्येतावन्मात्रोपादाने पक्षविषयतामादायापत्तेर्वारणाय **विषयताविशेषेति** । तथाप्यमिमतत्वाद्धेतुविषयताविशेषस्यैव ग्रहणान्न दोषः । **व्यावहारिकस्येति** । स्वरूपनिदर्शनपरस्येत्यर्थः । प्रसङ्गानुरोधेनाह—**गवादीति** । लक्षणत्व इत्येतद्विवृणोति—**उक्तलक्षणलक्षणस्य लक्ष्यत्व इति** । उक्तं यल्लक्षणलक्षणं लक्ष्यतावच्छेदकसमनियतत्वरूपं तस्य लक्ष्यत्व इत्यर्थः । निरूपितत्वं षष्ठ्यर्थः । तथाच तन्निरूपितलक्ष्यत्वं व्यावर्तकस्यैवेति पूर्वेणान्वयः । **लक्ष्यत्व इति पाठेऽपीति** । अत्र लक्ष्यत्व इत्यस्य व्यावर्तकस्यैवेत्यनेनान्वयः । ननु व्यावर्तकस्य लक्ष्यत्वं किंनिरूपितमिति निरूपकजिज्ञासायामाह—**अयमेवार्थो बोध्य इति** । लक्षणलक्षणस्येति शेषपूरणेन बोध्यः ज्ञेय इत्यर्थः । अयमेव पाठः सुगमः । **लक्षणलक्षण इति** । लक्ष्यतावच्छेदकसमनियतत्वरूपेत्यर्थः । **निवेशनीयम्** । धर्मविशेषणतयेति शेषः । व्यावृत्त्यादिद्वितयसाधारणातिव्याप्तिपरकग्रन्थस्य पाश्चात्त्योपसंहारग्रन्थैकवाक्यतया प्रातिस्विकेन तत्कथनाशयमुपवर्णितुमादावाशङ्कते—**यद्यपीति** ।

## नीलकण्ठी.

माणतया तेनैव रूपेण सर्वेषां संग्रहसंभवात्पृथगभिधानमनुचितम् । तथापि हेतुसाध्ययोरैक्ये हेतुमत्तानिश्चयकाले साध्यवत्तानिश्चये साध्यसंशयरूपपक्षताया असत्त्वेन नानुमितिरिति प्राचीनमते इतरभेदस्य व्यावर्तकत्वाभावेन तत्रातिव्याप्तिः ॥ सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता इति सिद्धान्तिमते तु व्यावृत्तेरपि व्यावर्तकत्वेन लक्ष्यतया तत्र लक्षणसंगमनस्येष्टत्वेन नातिव्याप्तिरित्यावेदयितुं पृथक्कथनमिति ध्येयम् ॥ ननु किमिदं नाम लक्षणलक्षणलक्ष्यतावच्छेदकं व्यावर्तकत्वं, न तावत्सामान्यतो भेदानुमापकत्वम् । व्यावृत्त्यभिधेयत्वादेरपि यत्किंचित् उभयत्वाद्यवच्छिन्नप्रतियोगिताकभेदानुमापकत्वेन लक्षणलक्षणलक्ष्यतया तत्रातिव्याप्तिकथनासंगतेः ॥

## भास्करोदयाख्यव्याख्या.

**व्यावृत्तेरपि व्यावहारिकत्वस्येति ।** शास्त्रे पदार्थसामान्येऽभिधेयत्वमस्तीति योऽयमस्तित्वप्रकारकाभिधाविषयत्वविशेष्यताको व्यवहारस्तद्विषयत्वस्याभिधेयत्वादाविव व्यावृत्तौ व्यावृत्तिरस्तीति व्यवहारविषयत्वरूपव्यावहारिकत्वस्य सत्वमित्याशयः । **वक्ष्यमाणतयेति ।** व्यावृत्तेरपि व्यवहारसाधनत्वादितिग्रंथेनेति शेषः । **तेनैव रूपेणेति ।** व्यावहारिकत्वेनैव रूपेणेत्यर्थः । **सर्वेषां** व्यावृत्त्यभिधेयत्वादीनां **संग्रहसंभवादिति ।** एकरूपेण सम्यग्ज्ञानसंभवादित्यर्थः । **पृथगभिधानमनुचितमिति ।** व्यावर्तकस्यैव लक्षणत्वेऽभिमते व्यावहारिकेऽतिव्याप्तिरित्युक्त्यैव सामंजस्ये पृथग्व्यावृत्त्यादिक्रमेणातिव्याप्त्यभिधानं मूलकृतोऽनुचितमित्यर्थः । **हेतुसाध्ययोरैक्य इति ।** गौरितरभिन्ना इतरभेदादितीह हेतुसाध्ययोरेकस्वरूपत्वं बोध्यम् । **हेतुमत्तानिश्चयकाल इति ।** पक्षे हेतुवृत्तित्वनिश्चयकाल इत्यर्थः । **साध्यसंशयरूपपक्षताया असत्त्वेनेति ।** साध्यस्य हेतुरूपत्वेन साध्यनिश्चयात्पक्षे तदभावकोटिकज्ञानानुदयेन तद्घटितपक्षताया अभावादिति भावः । **इतरभेदस्य व्यावर्तकत्वाभावेनेति ।** इतरभेदस्येतरभेदानुमितिजनकत्वाभावेनेत्यर्थः । **व्यावर्तकत्वेनेति ।** इतरभेदानुमापकत्वेनेत्यर्थः । इतरभेदविधेयकानुमितिजनकतावच्छेदकविषयताविशेषाश्रयत्वेनेति यावत् । **लक्ष्यतयेति ।** लक्षणलक्षणोद्देश्यतावच्छेदकाक्रांततयेत्यर्थः । **इत्यावेदयितुं पृथक्कथनमिति ।** अयं भावः । व्यावृत्त्यभिधेयत्वादीनां व्यावहारिकत्वेनालक्ष्यत्वेऽपि प्राचीननवीनमतभेदेन लक्ष्यत्वालक्ष्यत्वाभ्यां पाक्षिकालक्ष्यत्वव्यावृत्तेः अभिधेयत्वादीनां तु जगन्मात्रवृत्तितयेतराप्रसिद्ध्या सार्वदिकालक्ष्यत्वमिति सूचयितुं मूले पृथक्कथनमिति । अत्र लक्षणे तत्तद्धर्मावच्छिन्नेतरभेदरूपव्यावृत्त्यादिभिन्नत्वनिवेशनस्य करिष्यमाणसिद्धांतविषयत्वेन तद्व्यवस्थापयितुमादावाशङ्कते—**नन्विति ।** पृच्छति—**किमिदं नाम व्यावर्तकत्वमिति ।** तच्च लक्षणलक्षणलक्ष्यतावच्छेदकव्यावर्तकस्य लक्ष्यतावच्छेदकसमनियतत्वरूपलक्षणलक्षणलक्ष्यत्वात् । **यत्किंचिदुभयत्वाद्यवच्छिन्नप्रतियोगिताकभेदानुमापकत्वेनेति ।** गौः गोमहिषोभयत्वावच्छिन्नप्रतियोगिताकभेदवान् । अभिधेयत्वात् । इति रीत्या भेदानु-

## नीलकण्ठी.

सर्वेषामपि व्यक्तिरेकि (व्यक्ति)धर्माणां यत्किंचिद्व्यावर्तकतया असाधारण्यघटकव्यापकत्वादिवैयर्थ्यापाताच्च ॥ नापि विशिष्य तत्तद्धर्मावच्छिन्नेतरभेदानुमापकत्वम् ॥ तथा सति गोत्वावच्छिन्नेतरभेदानुमापकस्य सास्नादिमत्त्वस्य गोत्वसमनियतत्वं लक्षणमित्येवंरीत्या विशिष्य तत्तल्लक्षणस्य वक्तव्यतया गोत्वादिरूपलक्ष्यतावच्छेदकतत्तद्धर्मसमनैयत्यस्य गोत्वावच्छिन्नेतरभेदादिरूपव्यावृत्तौ सत्त्वेनातिव्याप्तेः संभवेप्यभिधेयत्वादावतिव्याप्त्यलम्भकतापत्तेर्दुर्वारत्वात् गोत्वादिसमनैयत्यस्य तत्रासत्त्वादिति चेत् ॥ मैवम् ॥ यतः सास्नादिमत्त्वं पक्षीकृत्य गोत्वावच्छिन्नेतरभेदानुमापकत्वे साध्ये विशेषव्याप्तावन्वयदृष्टान्तालाभेन यद्यद्धर्मसमनियतं तत्तद्धर्मावच्छिन्नव्यावर्तकमिति रीत्या सामान्यमुखव्याप्तेरभ्युपगन्तव्यतया तत्र सिद्धसाधनाप्रसिद्धिभ्यामव्यावर्तकयोर्व्यावृत्त्यभिधेयत्वयोस्तत्तद्धर्मसमनैयत्यरूपप्रकृतहेतुतुल्यहेतोः सत्त्वेन प्रकृतसाध्यस्य तत्तुल्यस्य वा साध्यस्यासत्त्वेन व्यभिचारः स्यात् । अतस्तद्दोषवारणाय तत्तद्धर्मावच्छि-

## भास्करोदयाख्यव्याख्या.

मापकत्वरूपव्यावर्तकत्वेनेत्यर्थः । व्यावर्तकत्वस्य सामान्यतो भेदानुमापकत्वरूपत्वे दोषांतरमाह—**सर्वेषामित्यादि**ग्रंथेन । **व्यतिरेकिधर्माणाम्** । अव्याप्तिदोषग्रस्तकपिलत्वादिधर्माणाम् । **यत्किंचिद्व्यावर्तकतयेति** । गोत्वावच्छिन्नश्वेतादिव्यावर्तकतया लक्ष्यतावच्छेदकव्यापकत्वे सति लक्ष्यतावच्छेदकव्याप्यत्वरूपलक्ष्यतावच्छेदकसमनियतत्वस्वरूपासाधारण्यघटकव्यापकत्वस्याव्याप्तधर्मव्यावर्तकत्वस्योक्तत्वेन लक्ष्यतया तद्व्यावर्तकसत्यंतव्यापकत्वरूपविशेषणदलस्यालक्ष्यव्यावर्तकत्वाभावेनाजागलस्तनायमानत्वापातादित्येवं समुदितार्थः । लक्षणलक्षणलक्ष्यतावच्छेदकव्यावर्तकत्वमेतदपि नेत्याह—**नापीति** । **विशिष्यतत्तद्धर्मावच्छिन्नेतरभेदानुमापकत्वमिति** । ननु तत्त्वेन सास्नादिमत्त्वे लक्ष्येतरभेदानुमापकत्वे बोधनीये गोत्वादीनां शृङ्गग्राहिकन्यायेन विशेषत एवोपसंग्रहाद्विशिष्येति पदमनर्थकं विशिष्येत्यस्य तत्त्वेनोपसंग्रहतात्पर्यार्थस्य प्रसिद्धत्वादितिचेन्न । तात्पर्यग्राहकतयैवोपयोगो नास्यापूर्वं फलमिति ध्येयम् । **गोत्वादिसमनैयत्यस्य तत्रासत्त्वादिति** । लक्ष्यतावच्छेदकसमनियतत्वरूपलक्षणलक्षणघटकव्याप्यत्वरूपविशेष्यांशकुक्षिनिक्षिप्तेतराप्रसिद्धेरिति भावः । **विशेषव्याप्तावन्वयदृष्टान्तालाभेनेति** । तत्साध्य-तद्धेतु-तत्पक्ष-सदृशपक्षाभावेनेति भावः । **सिद्धसाधनाप्रसिद्धिभ्यामिति** । यथासंख्यमव्यावर्तकत्वं व्यावृत्त्यभिधेयत्वयोर्बोध्यम् । ( अयं भावः । यद्गोवृत्तिव्यावृत्तिः यद्धर्मसमनियतं गोवृत्तिगोत्वरूपधर्मसमनियतं तद्व्यावृत्तिः तदवच्छिन्नव्यावर्तकगोत्वावच्छिन्नगोः व्यावर्तकं गवेतरभेदानुमापकमिति रीत्या व्यावृत्तावितरभेदानुमापकत्वे गोवृत्तिसाधनीये तद्धर्मसमनैयत्यहेतुके पूर्वस्मिन्सिद्धसाधनं परस्मिन्नप्रसिद्धिरिति ॥ ) **तत्तद्धर्मसमनैयत्यरूपप्रकृतहेतुतुल्यहेतोः सत्त्वेनेति** । यथा सास्नादिमत्त्वे साध्ये तद्धर्मसमनियतत्वं हेतुः । एवं व्यावृत्त्यभिधेयत्वयोस्तत्साधने तथाभूतहेतोस्तद्धर्मसमनियतत्वरूपस्य

धर्मविशेषणं देयम्। व्यवहारस्यापि लक्षणप्रयोजनत्वे तु न देयम्। व्यावृत्तेरपि व्यवहारसाधनत्वात् ॥ ननु गुणवत्त्वं न द्रव्यसामान्यलक्षणम् ॥ आद्यक्षणे उत्पन्नविनष्टद्रव्ये चाव्याप्तेरिति चेन्न । गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वस्य

## नीलकण्ठी.

न्नेतरभेदरूपव्यावृत्तिभिन्नत्वमभिधेयत्वादिभिन्नत्वं च तादृशलक्षणे निवेशनीयमित्यभिप्रायकोऽयं ग्रन्थ इति न पूर्वोक्तदोषावसरः। अधिकविचारस्त्वन्यत्रानुसंधेयः ॥ ननु लक्षणस्य व्यवहारोऽपि प्रयोजनम्। तेन रूपेण व्यवहर्तव्यत्वज्ञानं विना तद्रूपावच्छिन्नबोधकशब्दरूपव्यवहारासंभवात् । एवं च व्यावहारिकलक्षणस्यापि लक्ष्यत्वात्तद्भिन्नत्वविशेषणं न देयमित्याह—**व्यवहारस्यापीति** ॥ ननु व्यावृत्तावतिव्याप्तिवारणाय तद्भिन्नत्वमावश्यकम् व्यावृत्तेर्व्यावहारिकत्वाभावादिति भ्रमं वारयति—**व्यावृत्तेरपीति** ॥ अपिना अभिधेयत्वादिपरिग्रहः दृष्टान्तलाभाय ॥ नन्वाद्यक्षणावच्छिन्ने द्रव्ये गुणवत्त्वस्यासत्त्वेऽपि कालान्तरावच्छिन्ने तत्र तत्सत्त्वमक्षतम्। एवं च गुणाश्रयत्वं लक्षणं साधीय इत्यत आह—**उत्पन्नविनष्टेति** ॥ यादृशद्रव्यारम्भकसंयोगजनकक्रियोत्पत्तेः तृतीयक्षणेऽवयवान्तरे तादृशसंयोगनाशिका क्रिया

## भास्करोदयाख्यव्याख्या.

सत्त्वेनेत्यर्थः । **पूर्वोक्तदोषावसर इति**। नन्वित्यारभ्य मैवमित्यंतेनोक्तदोषावकाश इत्यर्थः। **अधिकविचारस्त्वन्यत्रानुसंधेय इति**। अन्यत्र अस्मदीयचिन्तामणिव्याख्यायामभिनवप्रभाख्यायामनुसंधेयः । बुद्धिकुशलैरिति शेषः। लक्षणस्य व्यवहारप्रयोजकत्वमूलाशयं वर्णयति—**लक्षणस्येत्यादिना। तेन रूपेण।** सास्नादिमत्त्वरूपेण । **व्यवहर्तव्यत्वज्ञानम्** । व्यवहारविषयत्वज्ञानं गवादेरित्यादिः । ईश्वरेच्छारूपशक्तिविशेषसंबन्धेन गोत्वादिप्रकारकगवादिविशेष्यकशाब्दबोधीयविषयत्वज्ञानमिति यावत् । तद्रूपावच्छिन्नबोधकशब्दरूपव्यवहारासंभवात्, सास्नालाङ्गूलवल्लक्षणशब्दरूपवर्णाभिव्यक्तिजनकताल्वोष्ठपुटसंयोगानुकूलयत्नरूपव्यापारासंभवादित्यर्थः । **एवं च** लक्षणस्य व्यावहारिकत्वसिद्धौ च । व्यावृत्तेरपीति ग्रंथमवतारयितुमाशङ्कते—**नन्विति। दृष्टान्तलाभायेति** । अभिधेयत्वादीनां घटोऽभिधेय इत्येवमभिधाविषयत्वेन घटादेरभिधेयत्वव्यवहारस्य प्रसिद्धत्वात् प्रसिद्धस्यैव दृष्टांतत्वाभ्युपगमात्तल्लाभायेत्यर्थः। पूर्वदर्शितविषयेऽव्याप्तेर्दुरुद्धरतया स्थलांतरानुधावनं निष्फलमित्याशङ्कां निराकुर्वन् पूर्वस्मिन्दोषं वारयति—**कालान्तरावच्छिन्ने तत्सत्त्वमक्षतमिति** । द्वितीयक्षणे तत्सत्त्वेन द्रव्यत्वावच्छेदेन गुणवत्त्वसत्त्वान्नाव्याप्तिरिति भावः। द्रव्यस्योत्पत्तिविनाशव्यवस्थाप्रकारं दर्शयति—**यादृशद्रव्यारम्भकेत्यादिना । तृतीयक्षणे** संयोगोत्पत्त्यव्यवहितोत्तरक्षणे- **ऽवयवान्तरे** नतु संयोगजनकक्रियोत्पत्त्यधिकरणावयवे। तथैव शास्त्रकृतामनुभवविषयत्वात्। सर्वत्र न तथा क्रिया जायते अदृष्टाभावात्। अदृष्टं द्विविधं। पुण्यरूपं पापरूपं च । तत्र पूर्वं यद्यददृष्टाधीनमिति न्यायेन विषयद्वारा सुखसाक्षात्कारं

विवक्षितत्वात् ॥ नन्वेवमप्येकं रूपं रसात्पृथगिति व्यवहाराद्रूपादावतिव्याप्तिरिति चेन्न । एकार्थसमवायादेव तादृशव्यवहारोपपत्तौ गुणे गुणानङ्गीकारात् ॥

**रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशतिगुणाः ॥**

गुणं विभजते रूपेति ॥ द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः ॥

## नीलकण्ठी.

जाता तादृशे द्रव्य इत्यर्थः ॥ नवीनाः पुनरसमवायिकारणस्य कार्यसहभावेन कारणतामवलंब्योत्पन्नविनष्टं नाङ्गीकुर्वन्ति ॥ गुणादावतिव्याप्तिवारणाय **गुणसमानाधिकरणेति** जातिविशेषणम् । सत्तामादायातिव्याप्तिवारणाय **सत्ताभिन्नेति** ॥ द्रव्यगुणान्यतरत्वमादायातिव्याप्तिवारणाय **जातीति** समवायेन तादृशधर्मवत्त्वतात्पर्यग्राहकम् । अतः कालिकादिसंबन्धेन तद्वत्त्वमादाय नातिव्याप्तिरिति भावः । **एवमपि** । उक्तविवक्षया अव्याप्तिवारणेऽपि ॥ **एकार्थसमवायादेवेति** ॥ एकस्मिन्नर्थे समवायेन सत्त्वादेवेत्यर्थः । **गुणानङ्गीकारादिति** । तथाच क्लृप्तेन समवायघटितसामानाधिकरण्येनैव गुणे गुणवत्ताव्यवहारोपपत्तौ तत्राक्लृप्तगुणवत्त्वकल्पनं न संभवति गौरवादिति भावः ॥ इति द्रव्यविभागः ॥ ॥ **सामान्यवानिति** ॥ सामा-

## भास्करोदयाख्यव्याख्या.

जनयति । अपरं विषयविघटनद्वारा दुःखसाक्षात्कारं जनयतीति । प्रकृते विषयद्वारकजलाहरणनिमित्तकजलतृप्तिसुखविघटनप्रयोजकदुरितादृष्टजन्या उत्पन्नविनष्टावयवक्रियेति ध्येयम् ॥ अथ नवीनमतमुपन्यस्यति—**नवीना इति** । असमवायिकारणस्य संयोगस्य कार्यसहभावेनावयविरूपकार्यसामानाधिकरण्येन कारणत्वमवष्टभ्य नाङ्गीकुर्वन्तीत्यर्थः । जातिघटितलक्षणघटकदलप्रयोजनमाह—**गुणादावित्यादिना** । आदिना कर्मसंग्रहः । **सत्तामादायातिव्याप्तिवारणायेति** । गुणादिकरणद्रव्यवृत्तिसत्ताजातेर्गुणकर्मणोः सत्त्वात्तत्रैवातिव्याप्तिरित्यर्थः । तथाच जातिग्रहणमनर्थकं गुणसमानाधिकरणसत्ताभेदस्य जातावेवाभ्युपगमादित्याशङ्क्य विनिगमनाविरहेण द्रव्यगुणान्यतरत्वधर्मेऽपि सत्त्वात्तस्य गुणे सत्त्वादतिव्याप्तिरित्याशयः । **गुणे गुणानंगीकारादिति** मूलस्य भावार्थमाह—**तथाचेत्यादिना** । क्लृप्तेन समवायघटितसामानाधिकरण्येनै एको नीलघटः घटात्पृथगित्यादौ समवायेन समानाधिकरणवृत्तित्वस्य एकत्वे नीले पृथक्त्वे च क्लृप्ततया तद्दिशैवैतत्प्रतीत्युपपत्तावन्यविषयत्वेन गुणे गुणवत्तावोधनमदृष्टचरत्वेनान्याय्यमित्याशयः । मूले **गुणं विभजत इति** । गुणमिति जात्येकवचनमेकत्वविशिष्टगुणत्वावांतरजात्यवच्छिन्नधर्मिप्रतिपादनानुकूलकृतिमान्ग्रन्थकार इति बोधः । मूले **द्रव्यक-**

१ 'एतत्तत्त्वमन्यत्रानुसंधेयम्' इत्यधिकः पाठः पुस्तकान्तरे. २ स्वसमवायिसमवेतत्वेन.

गुणत्वजातिमान्वा ॥ लघुत्वमृदुत्वकठिनत्वादीनां विद्यमानत्वात् कथं चतुर्विंशति

## नीलकण्ठी.

न्यवत्त्वं समवायेन बोध्यम् ॥ तेन न कालिकादिसंबन्धेन तद्वति ध्वंसे[१]ऽतिव्याप्तिः। **गुण** इति लक्ष्यनिर्देशः ॥ लाघवादाह—**गुणत्वजातिमान्वेति** ॥ यद्यपि लक्षण-लक्ष्यतावच्छेदकयोरभेदः तथापि लक्षणेनेतरभेदे साध्ये हेतौ साध्यसामानाधिकरण्यनिश्चयेऽपि हेतुधर्मितावच्छेदकसाध्यनिश्चयस्यानियतत्वाभिप्रायेणेदमिति संक्षेपः ॥ एवमग्रेऽपि बोध्यम् ॥ गुणत्वजातिसिद्धिस्तु गुणपदशक्यतावच्छेदकतयेति

## भास्करोदयाख्यव्याख्या.

**र्मभिन्नत्वे सति सामान्यवान्गुण इति** । अत्र सत्वंतं न सामान्यान्वयि व्यर्थत्वात् । किंतु द्रव्यकर्मभेदविशिष्टो यः सामान्यवान्स गुण इत्यभिप्रायकोऽयं ग्रन्थः । एतदभिप्रायेणैवोक्तं—**गुण इति लक्ष्यनिर्देश इति**। तत्र सामान्यवत्वस्य समवायविशेषसंबंधविवक्षाफलं दर्शयति—**तेनेत्यादिना** । अयं भावः । ध्वंसस्य स्वस्वरूपेण वृत्तितया ध्वंसे च घटादेरनुपयोगितयैव वृत्तितयानुयोगिताप्रतियोगितान्यतरसंबंधेन समवायाभाववत्त्वाद्ध्वंसवृत्त्यभावत्वं न जातिः । कालिकेन तु सर्वं सर्वस्मिन्निति तेन संबंधेन तद्वृत्त्यापत्तिरिति[२] ॥ एतदग्रे स्वयमेव स्फुटीकरिष्यते । सामानाधिकरण्यसंबन्धेन द्रव्यकर्मभेदविशिष्टसामान्यवांश्च गुण एवेति किं गुणेनेत्याशङ्क्य गुणपदं सार्थकयति—**गुण इति लक्ष्यनिर्देश इति**। यद्यपि जातेस्त्रिष्वेव सत्त्वात्तल्लाभेऽपि लक्षणेनेतरभेदे विधेये उद्देश्यस्य नाम्ना वस्तुसंकीर्तनरूपस्यावश्यकतेत्यभिप्रायेण तत्कथनमिति तद्धृदयं बोध्यम् ॥ अस्मिंश्च लक्षणे सामान्यपदेन प्रमेयत्वादेरेव ग्रहणे गुणत्वस्य गुणपदशक्यतावच्छेदकतया साधनपरदीधितिग्रंथासंगतिरन्यूनानतिरिक्तवृत्तिमत एवावच्छेदकत्वावलम्बनसंगतिश्च भेदाघटितत्वेन लाघवमूलकमेतल्लक्षणमवतारयति—**लाघवादाहेति** । प्रोक्तलक्षणस्य भेदघटिततया गौरवमुद्भाव्य लघु लक्षणमाहेत्यर्थः । **गुणत्वजातिमान्वेतीति** । द्रव्यस्याप्येवं वक्तुं शक्यतया गुणाश्रयत्वं क्रियाश्रयत्वं वेति लक्षणपुरस्कारे गौरवग्रस्त एवेति ध्वनितम् । नन्वेवं सति लक्षणस्य व्यावर्तकत्वबोधनात् प्रकृते गुणाः गुणेतरव्यावृत्ताः गुणत्वजातिमत्त्वादित्येवं गुणत्वजातिहेतुनेतरभेदे साध्ये गुणत्वरूपहेतौ लक्ष्यतावच्छेदकरूपे साध्यसामानाधिकरण्यस्य सिद्धतया तत्साधनमसंगतिकमतो नैतल्लक्षणं मूलकृतो लाघवमूलकं महनीयशोभमित्येवं तात्पर्येण यद्यपीत्याशङ्क्य मूलाशयं वर्णयति—**तथापीति** । **हेतुधर्मितावच्छेदकसाध्यनिश्चयस्यानियतत्वाभिप्रायेणेति**[३] । अयं भावः । साध्यसंदेहरूपप्राचीनोक्तपक्षतासत्त्वान्न लक्षणेनेतरभेदव्याघात इति । **एवमग्रेऽपि बोध्य-**

---

१ सामान्यविशेषसमवायात्यन्ताभावेषु नित्येषु नित्यस्य सामान्यस्य कालिकेन न वृत्तित्वम्. नित्ये कालिकायोगात्, द्रव्यकर्म्मणोस्तु न द्रव्यकर्म्मभेदः प्रागभावश्च न दीधितिकृदादिसम्मतोऽतस्तान्विहायाह ध्वंसे इति. २ द्रव्यत्वादेरपि तत्र सत्त्वात्. ३ गुणत्वरूपहेतुवृत्ति यल्लक्षणत्वरूपधर्मितावच्छेदकं तद्विशिष्टं लक्षणं हेतुधर्मितावच्छेकं तस्मिंल्लक्षणे साध्यनिश्चयस्यावगतेर भेदरूपसाध्यसामानाधिकरण्यनिश्चयस्यानियतत्वात् असत्वात्.

गुणा इति चेत् ॥ न ॥ लघुत्वस्य गुरुत्वाभावरूपत्वात् मृदुत्वकठिनत्वयोरवयव-संयोगविशेषरूपत्वात् ॥

## नीलकण्ठी.

गुणदीधितौ भट्टाचार्याः । न चैवं विभुपदशक्यतावच्छेदकतया विभुत्वमपि जातिः सिद्ध्येदिति वाच्यम् । भूतत्वसंकरस्य बाधकस्य सत्त्वेन तस्य जातित्वासंभवात् । जातित्वाभिमतसंकरस्यैव जातित्वबाधकत्वात् । तथा चोक्तं द्रव्यकिरणावल्यामुदयनाचार्यैः—'व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः । रूपहानिरसंबन्धो जातिबाधकसंग्रहः' इति ॥ **व्यक्तेरभेदः**—स्वाश्रयव्यक्त्यैक्यमाकाशत्वादेर्जातित्वे बाधकम् ॥ **व्यक्तेस्तुल्यत्वं** च—अन्यूनानतिरिक्तव्यक्तिकत्वम् ॥ घटत्वकलशत्वयोर्भिन्नजातित्वे । **संकरः**—परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः । भूतत्वमूर्तत्वादेर्जातित्वे । **अनवस्था**—जातित्वादेः जातित्वे ॥ **रूपहानिः**—स्वतो व्यावर्तकत्वात्मकरूपस्य हानिः विशेषत्वस्य जातित्वे ॥ **असंबन्धः**—असमवेतत्वमभावस्वादेर्जातित्व इति संक्षेपः ॥ लघुत्वादीनां प्रामाणिकत्वेऽपि क्लृप्तेष्वन्तर्भावो न्याय्य इति समाधत्ते—**लघुत्वस्येति** ॥ इति गुणविभागः ॥ संयोगासमवायिका-

## भास्करोदयाख्यव्याख्या.

**मिति** । कर्मापि कर्मत्वजातिमत्त्वेन लक्षयित्वा कर्मत्वरूपलक्षणेन कर्मत्वावच्छिन्नकर्मणि उक्तरीत्या कर्मेतरभेदसाधनं बोध्यमवगन्तव्यमित्यर्थः । गुणत्वजातेर्घटादिरूपादौ संयुक्तसमवेतसमवायेन प्रत्यक्षप्रमितिविषयत्वेऽपि अतीन्द्रियवृत्तिजातेस्तदभावेन तदसिद्धेरनुमानेन या गुणवृत्तिकारणता सा किंचिद्धर्मावच्छिन्ना कारणतात्वाद् घटनिरूपितदण्डनिष्ठकारणतावत् इति तत्सिद्धिरिति न यावद्गुणीयकारणतावच्छेदकस्यैकस्य विरहात् ॥ न च चतुर्विंशतिगुणेषु प्रत्येकं याः कारणतास्तासामेव पक्षतया तादृशसकलकारणता अनुगतद्रव्यकर्मान्यसामान्यवद्वृत्तित्वेनानुगमय्य गुणत्वजातिरिति वाच्यम् । तथा सति पारिमाण्डल्यस्य व्याप्यकारणतया गुणत्वस्यातिप्रसक्ततया कारणतानवच्छेदकत्वाच्च ॥ गुणत्वजातिसिद्धिर्गुणपदशक्यतावच्छेदकतयैव नेतरा गतिरित्यभिप्रायेणाह—**गुणत्वजातिसिद्धिस्त्वत्याद्याचार्यान्तम्** । अथ विनिगमनाविरहाद्विभुपदशक्यतावच्छेदकतया सिद्धं विभुत्वं जातिः स्याद्भूतत्वमेव जातिर्न सिद्ध्येदिति चेदाह—**जातित्वाभिमतसंकरस्यैव जातित्वबाधकत्वादिति** । तस्य जातित्वाभिमतिस्तु वृद्धव्यवहारादेवेति ध्येयम् । न च मूर्तत्वसांकर्यवद्भूतत्वमपि न जातिरिति विभुत्वं जातिः सिद्ध्येदेवेति वाच्यम् । भूतत्वस्य जातित्वमंगीकृत्य मूर्तत्वस्यैव जातित्वास्वीकारात् । विभुत्वस्य जातित्वे युक्त्यंतरमन्यत्राभिहितमीश्वरजीवातिरिक्तस्य विभुत्वे मानाभावेन विभुत्वस्यात्मत्वतुल्यवृत्तितया आत्मत्वातिरिक्तजातित्वे तुल्यव्यक्तिवृत्तित्वरूपजातिबाधकसत्त्वेन विभुत्वस्य जातित्वानंगीकारादिति । न च विनिगमनाविरहाद्विभुत्वस्यैव जातित्वमंगीकुर्वन्तु त्यज्यतामात्मत्वस्य जातित्वमिति वाच्यम् । आत्मत्ववानात्मेत्येवमबाधितप्रतीतिबलात्तत्त्वमिति चेत्कथमीश्वरजीववृत्ति आत्मत्वस्यैकवृत्तित्वात्तत्त्वाभ्युपगम इत्या-

**उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि ॥**

कर्म विभजते उत्क्षेपणेति । संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्म कर्मत्वजातिमद् वा ॥ ननु भ्रमणादेरप्यतिरिक्तस्य कर्मणः सत्त्वात् पञ्चेत्यनुपपन्नमिति चेत् । न । भ्रमणादीनामपि गमनेऽन्तर्भावात् न पञ्चत्वविरोधः ।

**परमपरं चेति द्विविधं सामान्यम् ॥**

सामान्यं विभजते परमिति । परमधिकदेशवृत्ति । अपरं न्यूनदेशवृत्ति ॥ सामान्यादिचतुष्टये जातिर्नास्ति ॥

**नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव ॥**

विशेषं विभजते नित्येति ॥ पृथिव्यादिचतुष्टयस्य परमाणवः आकाशादिपञ्चकम् नित्यद्रव्याणि ।

**समवायस्त्वेक एव ॥**

समवायस्य भेदो नास्तीत्याह समवायस्त्विति ॥

---

## नीलकण्ठी.

रणे संयोगेऽतिव्याप्तिवारणाय **संयोगभिन्नत्वे सतीति** ॥ संयोगसमवायिकारणद्रव्येऽतिव्याप्तिवारणाय **असमवायीति** ॥ **भ्रमणादेरित्यादिना** रेचनस्यन्दनोर्ध्वज्वलनतिर्यग्गमनानां संग्रहः ॥ **गमनेऽन्तर्भावादिति** ॥ नचोत्क्षेपणादीनामपि गमनेऽन्तर्भावोऽस्त्विति शङ्कनीयम् ॥ स्वतन्त्रेच्छस्य नियोगपर्यनुयोगानर्हस्य ऋषेः संमतत्वादिति भावः ॥ इति कर्मविभागः ॥ ॥ **परमित्यादि** ॥ लक्षणमग्रे मूलकृतैव वक्ष्यत इति न न्यूनतेति बोध्यम् ॥ सत्ताया द्रव्यत्वाद्यपेक्षया अधिकदेशवृत्तित्वेन परत्वमेव । घटत्वादीनां न्यूनवृत्तित्वेनापरत्वमेव । द्रव्यत्वादीनां सत्तातोऽपरत्वम् घटत्वादितः परत्वमिति विवेकः ॥ इति सामान्यविभागो विशेषविभागश्च ॥—**समवा-**

## भास्करोदयाख्यव्याख्या.

शङ्कायामात्मपदशक्यतावच्छेदकत्वं विनेश्वरसाधारणात्मत्वजातौ युक्त्यन्तराभावेन तथा व्यपदेशासंगत्यापत्तेः । इदं 'पूर्णाय परमात्मने' इत्यत्रेश्वरव्यपदेशं कुर्वतो दीधितिकृतोऽपि संमतमेव । सांकर्यस्य जातिबाधकत्वे यदाहुर्मानं स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्योभयसंबन्धेन जातिविशिष्टजातित्वावच्छेदेन स्वसमानाधिकरणाभावप्रतियोगित्वाभाव इत्येतन्नियमपक्षं मत्वा सांकर्यस्य जातिबाधकत्वं न क्षमन्ते नवीनाः । एवं विशेषणविशेषाणां स्ववृत्तिधर्मं विना व्यावृत्तत्वमेवं नित्यद्रव्याणामपि विशेषानङ्गीकारेण व्यावृत्तिसंभवादिति संक्षेपः ॥ कर्मलक्षणप्रविष्टसत्यन्तदलप्रयोजनमाह—**संयोगेत्यादिना** । कार्यत्वावच्छिन्नं प्रति द्रव्यस्य समवायिकारणत्वनियमात्तत्प्रत्यासन्नत्वेन संयोगस्य संयोगकार्यकारणत्वाद्धस्तपुस्तकसंयोगे कायपुस्तकसंयोगजनकेऽतिव्याप्तिवारणाय तदिति भावः । सामान्यलक्षणेन सामान्यधर्मप्रकारकज्ञाने सति विशेषधर्मप्रकारकजिज्ञासोदयाद्विभागो युक्तः कथमिदानीं तदनुक्त्या तद्युक्ततेत्याशङ्कां परिहरति—**लक्षणमग्रे मूलकृतैव वक्ष्यत इति** । **रूपसमवाय-**

**अभावश्चतुर्विधः प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति ॥**

अभावं विभजते । अभाव इति ॥

**तत्र गन्धवती पृथिवी । सा द्विविधा नित्याऽनित्या च । नित्या परमाणुरूपा । अनित्या कार्यरूपा ।**

तत्रोद्देशक्रमानुसारेण प्रथमं पृथिव्या लक्षणमाह—गन्धवतीति ॥ नाम्ना

## नीलकण्ठी.

**यस्य भेदो नास्तीति** ॥ न च समवायस्याभेदे स्पर्शसमवायवति वायौ रूपवत्ताप्रतीतिः स्यादिति शङ्कनीयम् ॥ रूपसमवायसत्त्वेऽपि रूपाभावेन तथा प्रतीतेरभावादिति दिक् । इति समवायविभागः ॥ इत्युद्देशग्रन्थः ॥ पृथिवीलक्षणस्य प्राथम्ये बीजमाह—**तत्रेति** ॥ पृथिव्यादिषु मध्य इत्यर्थः । गन्धसमवायिकारणतावच्छेद-

## भास्करोदयाख्यव्याख्या.

**सत्त्वेपि रूपाभावेनेति** । अयं भावः । स्पर्शसमवायः वायौ तदीयरूपसमवायादभिन्नः समवायस्यैकत्वात्तेन रूपेण वायौ रूपसमवायसत्त्वेऽपि न रूपप्रतियोगिकसमवायः रूपाभावादिति । मूले—**अभावं विभजत इति** । अभावत्वावान्तरधर्मावच्छिन्नधर्मिप्रतिपादनानुकूलकृतिमान्ग्रन्थकार इति बोधः ॥ तत्र विनाश्यभावत्वं प्रागभावत्वमित्यादि तत्तल्लक्षणानि सिद्धान्तमुक्तावल्यां स्फुटान्येव । इदं त्वत्रावधेयम् ॥ अथ प्रागभावे किं मानं न तावदध्यक्षं इहेदानीं घटप्रागभाव इति प्रत्यक्षासिद्धेः घटो भविष्यतीति प्रत्यक्षस्य च वर्तमानकालोत्तरकालोत्पत्तिकत्वावलम्बनत्वेनैवोपपत्तेः प्रागभावासाधकत्वात् । नचाभावत्वं विनाशिवृत्ति, पदार्थविभाजकोपाधित्वात् भावत्ववदित्यनुमानात्तत्सिद्धिरिति वाच्यम् । तादृशानुमानस्याप्रयोजकत्वात् । अथ प्रागभावानङ्गीकारे उत्पन्नस्य पुनरुत्पादापत्तिः । नचोत्पन्नपुनरुत्पादस्तदुत्पादोत्तरकालीनस्तदुत्पादः स च नापादयितुं शक्यते अप्रसिद्धत्वादिति वाच्यम् । तद्धटाद्युत्पत्त्युत्तरक्षणादिकं पक्षीकृत्य तत्सामग्र्यव्यवहितोत्तरत्वेन प्रथमक्षणे प्रसिद्धस्य तदुत्पादस्यैवापादनीयत्वात् तदाकारश्चैतद्धटाद्युत्पत्तिद्वितीयक्षणः यद्येतद्धटसामग्र्यव्यवहितोत्तरः स्यात् एतद्धटोत्पादवान्स्यादिति चेन्न । यो यद्धर्मावच्छिन्नसामग्र्यव्यवहितोत्तरक्षणः स तद्धर्मावच्छिन्नोत्पादवानित्येतादृशसामग्रीव्याप्तिरेव नाभ्युपेयते—येन तद्धटाद्युत्पत्तिरापादनीया यो यद्धर्मावच्छिन्नसामग्र्यव्यवहितोत्तरः स तद्धर्मावच्छिन्नवानित्येव सामग्रीव्याप्तेः एतादृशव्याप्तिबलात्तद्धर्मावच्छिन्नवत्त्वे सिद्धेऽर्थत एवाद्यक्षणसंबन्धरूपोत्पत्तेर्निर्वाहात् । उत्पत्त्यनन्तर्भावेण व्याप्त्यभ्युपगमे क्षतिविरहात् । एवं च तद्धटोत्पत्तिद्वितीयक्षणे तदापत्तिरितिचेन्न जन्यद्रव्यत्वावच्छिन्नं प्रति द्रव्यत्वेन प्रतिबन्धकत्वाभ्युपगमात् ॥ तद्व्यक्तित्वावच्छिन्नं प्रति तत्तत्प्रागभावत्वेनानन्तकारणतानामनन्तप्रागभावानां च कल्पनापेक्षया एतादृशप्रतिबध्यप्रतिबन्धकभावकल्पनाया एव न्याय्य-

## भास्करोदयाख्यव्याख्या.

त्वात् । एतद्घटनाशानन्तरं खण्डघटोत्पत्तिकाले एतद्घटोत्पत्तिवारणाय प्रागभावहेतुत्वकल्पनमावश्यकमित्यपि नाशङ्कनीयम् । तत्र यादृशसंयोगनाशात्पूर्वं घटनाशस्तत्संयोगव्यक्तेरेव हेतुत्वोपगमेन तदभावादेव खण्डघटोत्पत्तिकाले तदापत्तिवारणात् । न च यत्र शतसंयोगारब्धघटस्य दशसंयोगनाशानन्तरं नाशः खण्डघटोत्पत्तिकाले तदापत्तिवारणाय विनिगमनाविरहेण दशसंयोगहेतुत्वकल्पनापेक्षया तत्प्रागभावस्यैकस्य हेतुत्वकल्पनमेवोचितमिति वाच्यम् । तत्र तद्घटनाशस्यैव प्रतिबन्धकत्वकल्पनात् । नच तत्तद्घटंप्रति तत्तद्घटाभावस्य जन्यद्रव्यत्वावच्छिन्नंप्रति जन्यद्रव्यत्वावच्छिन्नाभावस्य च सामान्यविशेषरूपेण हेतुद्वयकल्पनापेक्षया तद्घटं प्रति तद्घटप्रागभावहेतुत्वकल्पनमुचितमिति वाच्यम् । यत्र महाघटनाशानन्तरं खण्डघटो नोत्पद्यते आरम्भकसंयोगविरहात्तत्र प्रागभावहेतुत्वकल्पनापेक्षया द्रव्याभावादिहेतुताया एव द्वितीयादिक्षणे तदापत्तिवारणाय क्लृप्तत्वात्तत एवोपपत्तेः प्रकृते तद्धेतुताया अनाधिक्यात् ॥ प्रागभावादेर्हेतुत्वेपि भाविखण्डघटादेरेव तत्तद्घटादिद्वितीयक्षणे आपत्तिवारणाय द्रव्याभावहेतुताया आवश्यकत्वात् । नच भाविखण्डघटादीनां महाघटोत्पत्तिकाल उत्पादवारणाय तत्र महाघटादिनाशस्य हेतुताया आवश्यकत्वात् द्वितीयक्षणे तदापत्तिवारणसंभवात्किं द्रव्याभावहेतुतयेति वाच्यम् । यदा महाघटसत्व एव तदारम्भकाले कपालान्तरसंयोगस्तदनन्तरं घटनाशे अन्तरासंयुक्तकपालसहितं महाघटारम्भककपालैः खण्डघटारम्भस्तत्र महाघटोत्पत्तिकाले खण्डघटहेत्वन्तरोत्पन्नसंयोगविरहेणापत्तिविरहात् । महाघटनाशस्य हेतुताया अनावश्यकत्वात् द्वितीयादिक्षणे आपत्तिवारणाय द्रव्याभावहेतुताया आवश्यकत्वात् । नच द्रव्याभावहेतुत्वमुभयवादिसिद्धं तथापि तत्तद्घटं प्रति तत्तद्घटनाशाभावहेतुत्वापेक्षया प्रागभावहेतुत्वमेवोचितं तत्तद्घटनाशाभावहेतुत्वे तत्तद्घटनाशकालोत्पन्नपदार्थान्तरनाशाभावमादाय विनिगमनाविरहादिति वाच्यम् । तन्मतेऽपि तत्तद्घटसमानकालोत्पन्नपदार्थान्तरप्रागभावमादाय विनिगमनाविरहसंभवादिति ॥ एतेन ज्ञानादिस्थलेप्युत्पन्नस्य पुनरुत्पादो निरस्तः । उत्पत्तिद्वितीयतृतीयक्षणे तदुत्पत्तेस्तत्तद्व्यक्तित्वावच्छिन्नजनकतावच्छेदकीभूततत्तद्व्यक्तित्वावच्छिन्नविशेषणज्ञानविरहेणापादनासंभवात् ॥ प्रागभावहेतुत्वेऽपि तत्तद्व्यक्तेः पूर्वमुत्पादवारणाय विशेषणज्ञानादीनां तत्वेन हेतुताया आवश्यकत्वात् । नच धारावाहिकस्थले निर्विकल्पकस्यैव चतुर्थादिक्षणे आपत्तिवारणाय प्रागभावहेतुत्वमावश्यकम् । तत्र विशेषणज्ञानादीनामहेतुत्वात् चक्षुःसंयोगादीनां तृतीयक्षणेऽपि सत्वादिति वाच्यम् । तत्र तन्नाशाभावस्यापि हेतुत्वोपगमात् । नच तत्तद्व्यक्तित्वावच्छिन्नं प्रति तत्तद्व्यक्तित्वावच्छिन्नाभावस्य नाशत्वावच्छिन्नाभावस्य चोभयकारणत्वकल्पनापेक्षया तत्तद्व्यक्तित्वावच्छिन्नं प्रति तत्तद्व्यक्तिप्रागभावत्वेनैकमेव हेतुत्वमुचितमिति वाच्यम् । प्रागभावहेतुत्वेऽपि अतिरिक्तप्रागभावे तदन्यथासिद्धत्वनियतपूर्ववृत्तित्वयोः कल्पनीयतया क्लृप्तयोः क्लृप्तनियतपूर्ववृत्तित्वयोरन्यथासिद्धत्वकल्पनाया एवोचितत्वात् । अथवा कालिकसंबन्धेन तज्ज्ञानाधिकरणध्वंसस्यैकमेव प्रतिबन्धकत्वं कल्प्यते । अतएव तृतीयक्षणादौ न

## भास्करोदयाख्यव्याख्या.

तदापत्तिः । नच द्वितीयक्षणे तदापत्तिरिति वाच्यम् । उत्पत्त्यन्तर्भावेण सामग्रीव्याप्तेरनभ्युपगमात् तद्वत्त्वस्य च तदानीमिष्टत्वात् । अस्तु वा तादृशध्वंसाभावस्य कार्यसहभावेन हेतुता अत उत्पत्त्यन्तर्भावेण सामग्रीव्याप्तेरभ्युपगमेऽपि द्वितीयादिक्षणे न तदुत्पादापत्तिः । तदधिकरणसमयध्वंसस्य तदानीं सत्वात् । वस्तुतस्तु सामान्यतो निष्प्रकारकतद्विषयकज्ञानत्वावच्छिन्नं प्रति तद्विषयकज्ञानत्वेन प्रतिबन्धकत्वकल्पनात् विशिष्टबुद्ध्यादिक्षणे न तदापत्तिः संभवतीति ध्येयम् ॥ यत्तु उत्पन्नतत्त्वज्ञानस्य धर्माधर्मोत्पादवारणाय अदृष्टत्वावच्छिन्नं प्रति आद्यतत्त्वज्ञानप्रागभावत्वेन हेतुतया प्रागभावप्रसिद्धिः । आद्यत्वं च न स्वसमानाधिकरणतत्त्वज्ञानाधिकरणसमयध्वंसासमानकालीनत्वं स्वत्वाननुगमात् । भेदकूटनिवेशे चात्यन्तगौरवात् । किं तु स्वसामानाधिकरण्य—स्वाधिकरणसमयध्वंसवत्त्वोभयसंबन्धेन तत्त्वज्ञानवद्भिन्नत्वम् । वस्तुतस्तु स्वसामानाधिकरण्य-कालिकविशेषणतावच्छिन्नस्ववृत्तित्वोभयसंबन्धेन तत्त्वज्ञानवदन्यत्वं प्रागभाव एव विशेषणीयम् । तदप्यसत् । तत्त्वज्ञानध्वंसप्रतिबन्धकतामभ्युपगम्य तत्त्वज्ञानवतामदृष्टवारणसंभवात् । अथैवं तत्त्वज्ञानोत्पादक्षणे तद्द्वितीयक्षणे चादृष्टोत्पत्त्यापत्तिः । नच तत्त्वज्ञानोत्पत्तिकाले भवन्मतेऽपि तदुत्पादप्रसङ्ग इति वाच्यम् । तादृशप्रागभावस्य कार्यसहभावेन हेतुत्वोपगमादिति चेन्न । तत्त्वज्ञानध्वंसस्येव तत्त्वज्ञानस्य प्रतिबन्धकत्वोपगमात् । एवमपि पूर्वोक्तरीत्या कल्पनालाघवसंभवात् । तादृशतत्त्वज्ञानत्ववदन्यत्वज्ञानप्रागभावत्वादिना हेतुत्वे तत्त्वज्ञानवदन्यत्वप्रागभावयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण कारणतात्रस्य भवन्मतेप्यावश्यकत्वाच्च । वस्तुतस्तु अदृष्टत्वावच्छिन्नंप्रति वासनात्वेनैव हेतुत्वं कल्प्यते । अतो न तत्त्वज्ञानं विना धर्माद्यनुत्पत्तिः । तत्त्वज्ञानेन वासनानाशात् । वासनात्वं च मिथ्याज्ञानगतो जातिविशेषः । नच पटुतरत्वजात्या सांकर्यमिति वाच्यम् । तादृशजातौ मानाभावात् । एवं च तत्त्वज्ञानाभावहेतुतापि न स्वीक्रियते वासनायाः कार्यसहभावेनैव हेतुत्वोपगमात् । तत्त्वज्ञानोत्पत्तिद्वितीयक्षणेऽदृष्टोत्पत्तिसंभवात् । प्रथमक्षणेऽदृष्टोत्पादाभ्युपगमे क्षतिविरहात् । नच तत्त्वज्ञानिनां वासनोत्पादवारणाय वासनां प्रत्येवाद्यतत्त्वज्ञानप्रागभावत्वेन हेतुत्वमावश्यकमिति वाच्यम् । मिथ्याज्ञानरूपकारणविरहेणैव तत्त्वज्ञानिनां वासनानुत्पादात् । मिथ्याज्ञानं प्रत्यपि वासनान्तरस्य हेतुतयोत्पन्नतत्त्वज्ञानस्य मिथ्याज्ञानानुत्पादादिति । यत्तु—आत्मविशेषगुणानां क्षणिकतावारणाय विभुसमवेतयोग्यविशेषगुणनाशत्वावच्छिन्नं प्रति स्वानन्तरोत्पन्नगुणस्य हेतुता वाच्या । तत्र च तादृशगुणत्वेन हेतुत्वं न संभवति । स्वत्वाननुगमात् । अतः पूर्वत्वसंबन्धेन स्वत्वेन गुणत्वेन वा हेतुता वाच्या । स्वपूर्वत्वं च न स्वोत्पत्तिक्षणवृत्तिध्वंसप्रतियोगिसमयवृत्तित्वम् । उत्पत्त्यादेरननुगतत्वात् । किंतु कालिकविशेषणतया प्रागभावत्वमित्येतादृशयुक्त्या प्रागभावः सेत्स्यतीति । तदप्यसत् । प्रतियोगितासंबन्धेन तादृशनाशत्वावच्छिन्नं प्रति स्वप्रतियोगित्वसंबन्धेन तत्त्वेन हेतुताकल्प-

पदार्थसंकीर्तनमुद्देशः ॥ उद्देशक्रमे च सर्वत्रेच्छैव नियामिका ॥ ननु सुरभ्यसुरभ्यवयवारब्धे द्रव्ये परस्परविरोधेन गन्धानुत्पादादव्याप्तिः । नच तत्र गन्धप्रती-

## नीलकण्ठी.

कतया पृथिवीत्वजातिसिद्धिरिति बोध्यम् ॥ **नाम्नेति** ॥ अत्र तृतीयार्थोऽभेदः संकीर्तनपदार्थे प्रतिपादकशब्देऽन्वेति ॥ तथा च वस्तुप्रतिपादकनाममात्रमुद्देश इति लक्षणं पर्यवस्यति ॥ अत्र घट इति लौकिकपदेऽतिव्याप्तिवारणाय वस्तुपदं लक्षणीयवस्तुपरम् । लक्षणीयस्य पृथिव्यादेः सामान्यतः प्रतिपादके प्रमेयपदेऽतिव्याप्तिवारणाय नामपदं लक्ष्यतावच्छेदकावच्छिन्नपरम् । लक्षणवाक्ये नामसत्त्वादतिव्याप्तिरतो मात्रपदमिति ध्येयम् ॥ **आरब्धे** जन्ये ॥ **परस्परविरोधेनेति** ॥

## भास्करोदयाख्यव्याख्या.

नात् । पदार्थमात्रस्यैव क्षणिकतावारणसंभवात् । ज्ञानानन्तरोत्पन्नस्वविशेषणगुणस्य योग्यविशेषगुणनाशकत्वानभ्युपगमात् । यत्तु प्रागभावानभ्युपगमे पाकजरूपरसगन्धस्पर्शानां सामग्रीभेदाभावादभेदापत्तिः । सामग्र्यभेदस्य कार्याभेदप्रयोजकत्वात् । प्रागभावहेतुत्वेन तु स्वप्रागभावस्य स्वसामग्रीघटकतया तद्भेदादेव सामग्रीभेद इति । तदप्यसत् । रूपरसादिकं प्रति रूपरसात्यन्ताभावस्य हेतुत्वात्तद्भेदेनैव सामग्रीभेदात् । नच रसात्यन्ताभावस्य रूपादिहेतुतामादाय विनिगमनाविरहादिति वाच्यम्, यस्मिन्यस्मिन्यस्य यस्यात्यन्ताभावस्तस्य तस्यैव तं तं प्रति हेतुताभ्युपगमेनोक्तदोषवारणादतिरिक्तप्रागभावाङ्गीकारे फलविशेषादर्शनात्प्रागभावाङ्गीकारो न युक्तिसह इत्याकलनीयं तर्ककर्कशविचारचातुरीधुरीणैरिति ॥ **अत्र तृतीयार्थोऽभेद इति** । प्रकृत्यादिभ्य इत्यर्थसामान्यविधायकसर्वविभक्त्यपवादकानुशासनविहिततृतीयार्थोऽभेद इत्यर्थः । फलितार्थमाह—**तथाचेति** । भक्षितेऽपि लशुनन्यायेन घटरूपवस्तुप्रतिपादकाभिन्ननाममात्रत्वाद्घटपदेऽतिव्याप्तेस्तादवस्थ्यादाह—**वस्तुपदं लक्षणीयवस्तुपरमिति** । नन्वेवं कम्बुग्रीवादिमत्त्वमपि घटस्य लक्षणमिति तत्तादवस्थ्यमितिचेन्न । प्रकृतलक्षणीयवस्तुपरत्वाद्वस्तुपदस्य, वस्तुतस्त्विष्यत एव तयोर्लक्ष्यलक्षणभावे चिकीर्षित इति संक्षेपः ॥ नामपदं सार्थकयति—**प्रमेयपदे इति** । भक्षितेऽपिन्यायेन प्रकृतलक्षणीयपृथिव्यादिवस्तुप्रतिपादकनामाभेदात्प्रमेयपदेऽतिव्याप्तितादवस्थ्यादाह—**नामपदं लक्ष्यतावच्छेदकावच्छिन्नपरमिति** । लक्ष्यतावच्छेदकावच्छिन्नबोधकमित्यर्थः । मात्रपदं सार्थकयति—**लक्षणवाक्य इति** । अस्य चावधारणमर्थः । तथाच प्रकृतलक्षणीयवस्तुप्रतिपादकाभिन्नलक्ष्यतावच्छेदकावच्छिन्ननाममात्रमुद्देश इति फलितम् । एवंच लक्षणवाक्ये लक्षणबोधकनामसत्वात्तद्व्यवच्छेदः । परस्परविरोधे नैकमपि सिध्यतीतिन्यायेन सुरभिगन्धस्यासुरभिगन्धस्य वा न भानमतोऽव्याप्त्यर्थकं मूलं

१ सुन्दोपसुन्दन्यायेन यथा सुन्दोपसुन्दनामानावसुरौ सोदर्यौ परस्परं स्थिरप्रेमाणौ गौरीहरणलालसौ युवयोर्मध्ये योऽधिकबलः स्यात्तमहं वरिष्य इति गौर्याऽभिहितौ परस्परं युध्यमानौ कालधर्ममुपगताविति पौराणिकी कथानुसन्धेयात्र ।

त्यनुपपत्तिरिति वाच्यम् । अवयवगन्धस्यैव तत्र भानसंभवेन चित्रगन्धानङ्गीकारात् । किंचोत्पन्नविनष्टघटादावव्याप्तिरिति चेन्न ॥ गन्धसमानाधिकरणद्रव्यत्वापरजातिमत्त्वस्य विवक्षितत्वात् ॥ ननु जलादावपि गन्धप्रतीतेरतिव्याप्तिरिति चेन्न । अन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव तत्र भानाङ्गीकारात् । ननु तथापि कालस्य सर्वाधारतया सर्वेषां लक्षणानां तत्रातिव्याप्तिरिति चेन्न । सर्वा-

## नीलकण्ठी.

सुरभिगन्धं प्रति असुरभिगन्धस्यासुरभिगन्धं प्रति सुरभिगन्धस्य प्रतिबन्धकत्वेनेत्यर्थः ॥ **प्रतीत्यनुपपत्तेरिति** ॥ अतश्चित्रगन्ध एवाप्रतिबध्यः स्वीकर्तव्य इति भावः ॥ **अवयवगन्धस्यैवेति** ॥ स्वाश्रयसमवेतत्वसंबन्धेनेत्यादिः ॥ तुष्यतु दुर्जन इति न्यायेनाङ्गीकृत्याह—**किंचेति** ॥ जलत्वादिकमादायातिव्याप्तेर्वारणाय **गन्धसमानाधिकरणेति** ॥ सत्तावारणाय **द्रव्यत्वापरेति** ॥ द्रव्यत्वन्यूनवृत्तीत्यर्थकम् । तेन द्रव्यत्वव्युदासः ॥ **गन्धप्रतीतेरिति** ॥ सुरभि जलमित्यादिप्रतीतेरित्यर्थः ॥ **पृथिवीगन्धस्यैवेति** ॥ स्वाश्रयसंयुक्तत्वसंबन्धेनेत्यादिः ॥ **तत्र** जलादौ ॥ यथाश्रुतग्राही कश्चन शङ्कते—**ननु तथापीति** ॥ अनुगतरूपेण लक्षणताघटकसंबन्धाप्रिवेश्यकालादावतिव्याप्तिं वारयति—**सर्वा-**

## भास्करोदयाख्यव्याख्या.

विवृणोति—**सुरभिगन्धं प्रतीति** ॥ **अप्रतिबध्य इति** । अतिरिक्तचित्रगन्धस्वीकारे परस्परविरोधरूपप्रतिबन्धकाभावादिति भावः ॥ **स्वाश्रयसमवेतत्वसंबन्धेनेत्यादिरिति** । आदिः पूरणीय इति शेषः । अवयवगन्धस्यावयविनि सत्त्वे संबन्धविशेषाकाङ्क्षितत्वेन तदनुक्तौ स्पष्टप्रतिपत्तिर्न भवतीत्येतत्प्रतिपत्तये तदादिपूरणमावश्यकमित्याशयेन तदुक्तिरिति निष्कर्षः । अत्रोत्पन्नविनष्टद्रव्यस्य नव्यमतेऽनङ्गीकारस्योक्तत्वेन तत्राव्याप्तिकथनं मूलकृतोऽनुपपन्नं तथापि प्राचीनानुरोधेन मूलकृतोऽप्यभिमतत्वादित्याशयेन 'किंचेति' मूलमवतारयति—**तुष्यत्विति** ॥ **द्रव्यत्वन्यूनेति** ॥ तथाच, गन्धाधिकरणपृथिवीवृत्तिद्रव्यत्वन्यूनवृत्तिर्जातिर्हि पृथिवीत्वजातिरेव तामादाय नाव्याप्तिरित्यर्थः । नचैवमपि गन्धाधिकरणवृत्तिद्रव्यत्वन्यूनवृत्तिघटजातिमादाय सुवर्णघटेऽतिव्याप्तितादवस्थ्यमिति वाच्यम् । प्राचीनमते पृथिवीत्वजात्या सांकर्याद्घटत्वस्य जातित्वानभ्युपगमात् ॥ सांकर्यस्य जातिबाधकत्वानभ्युपगन्तृनव्यमते तु साक्षाद्द्रव्यत्वन्यूनवृत्तित्वरूपार्थपरत्वेन दोषवारणसंभवात् ॥ **स्वाश्रयसंयुक्तत्वसंबन्धेनेत्यादिरिति** । स्वं गन्धः तदाश्रयः पृथिवी तत्संयुक्तत्वं जले अनेन संबन्धेनेत्यर्थः । अत्रापि पूरणीय इति शेषः । **अनुगतरूपेणेति** । लक्षणताघटकसंबन्धानां यथायथं समवायादीनामनुग्राहकं रूपं सर्वाधारताप्रयोजकसंबन्धभिन्नत्वं न तु समवायत्वादिकं । तत्तद्रूपेण लक्षणताघटकत्वेऽननुगतत्वेन गौरवात् । सर्वाधारताप्रयोजककालिकेन कालस्य लक्ष्यतया वातिव्याप्तिरिति भावः । लक्षणं हि समवायत्वाद्यवच्छिन्नसमवायादिनैव चिकीर्षितम् । अन्यथा अनुल्लेख्यप्रतीतिस्थले

धारताप्रयोजकसंबन्धभिन्नसंबन्धेन लक्षणस्याभिमतत्वात् ॥ पृथिवीं विभजते— सा द्विविधेति ॥ नित्यत्वं ध्वंसाप्रतियोगित्वम् ॥ ध्वंसप्रतियोगित्वमनित्यत्वम् ॥

**पुनस्त्रिविधा–शरीरेन्द्रियविषयभेदात् ॥ शरीरमस्मदादीनाम् । इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्ति ॥ विषयो मृत्पाषाणादिः ॥**

प्रकारान्तरेण विभजते । पुनरिति ॥ आत्मनो भोगायतनं शरीरम् ॥ यदवच्छिन्नआत्मनि भोगो जायते तद्भोगायतनम् । सुखदुःखान्यतरसाक्षात्कारो भोगः ॥

## नीलकण्ठी.

**धारतेति** ॥ वस्तुतस्तु समवायादीनां समवायत्वादिनैव संसर्गतया तेनैव रूपेण तत्संबन्धस्य तत्तल्लक्षणघटकत्वं बोध्यम् । नित्यपृथिवीत्वादिरूपलक्षणगतनित्यत्वादि प्रदर्शयति—**नित्यत्वमिति** ॥ **प्रकारान्तरेणेति** ॥ पृथिवीमित्यनुषज्यते ॥ अत्र नित्यपृथिव्याः शरीरेन्द्रियभिन्नत्वरूपविषयलक्षणाक्रान्तत्वेन विषयान्तर्गतत्वमिति पृथिव्यास्त्रिविधत्वम् । अत एव मूले **पुनस्त्रिविधे**त्युक्तिः संगच्छत इति ध्येयम् ॥ केचित्तु अनित्यपृथिव्या एव त्रैविध्यं वर्णयन्ति । उद्देशक्रमानुसारेण प्रथमं शरीरलक्षणमाह—**आत्मन इति** ॥ **आयतनमवच्छेदकम्** । तथा च यादृशं लक्षणं संपन्नं तादृशमाह—**यदवच्छिन्न इति** ॥ सुखदुःखान्यतरसाक्षात्कारावच्छेदकमिति यावत् ॥ अत्रान्त्यावयवित्वे सतीति विशेषणं देयम् । तेन पादादीनामवच्छेदकत्वेऽपि तत्र नातिव्याप्तिः । यथा शरीरत्वं तु न जातिः पृथिवीत्वादिना संकरात्, तथा इन्द्रियत्वं न जातिरित्याशयेनाह—**शब्देतरोद्भूतेति** ॥ आत्मादावतिव्याप्तिवारणाय सत्यन्तम् । श्रोत्रेऽव्याप्तिवार-

## भास्करोदयाख्यव्याख्या.

तत्तद्रूपेण संसर्गत्वायोगात्तत्तद्रूपेण तत्तल्लक्षणघटकत्वे कालेऽतिव्याप्तिः सुपरिहार्येवेत्याशयेनाह—**वस्तुतस्त्विति** ॥ **नित्यपृथिवीत्वादिरूपलक्षणेति** ॥ नच गन्धवत्त्वरूपस्योक्तत्वान्नित्यत्वानित्यत्वाभ्यां विभागमात्रत्वेन च विरुद्धमिति वाच्यम् ॥ स्वरूपलक्षणत्वाभिमानात् ॥ **पृथिवीमित्यनुषज्यत इति** ॥ विभजनस्य सकर्मकत्वेन प्रकारान्तरपदस्वारस्यात्सामान्यानुषङ्ग एव न्याय्य इत्यभिप्रेत्यात्रार्थे मूलमपि प्रमाणयति—**मूलेति** ॥ **केचित्त्विति** । अत्रारुचिबीजं तु परमाणुरूपाया नित्यायाः साक्षादुपभोगसाधनत्वरूपविषयत्वासंभवः । नित्यानित्योभयसाधारणपृथिवीत्वावच्छेदेन त्रैविध्यकथनं व्याख्यामूलयोः प्रकारान्तरपुनःपदयोः स्वारस्यादिति बोध्यम् । **पादादीनामवच्छेदकत्वेऽपीति** । पादे मे सुखं शिरसि मे वेदनेत्यबाधितसार्वजनीनप्रतीतेर्यदवच्छेदेन सुखदुःखानुभवस्तदवच्छेदकत्वेऽपीति भावः । **न जातिरिति** । किं तु चेष्टाश्रयत्वं चेष्टा च हिताहितप्राप्तिपरिहारानुकूला क्रिया तदाश्रयत्वात्स्थावरजंगमादिषु शरीरव्यपदेशः । **तथेन्द्रियत्वमिति** । शरीरत्वं न जातिर्यथा तथे-

शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम् इन्द्रियत्वम् ॥ शरीरेन्द्रियभिन्नो विषयः ॥ एवं च गन्धवच्छरीरं पार्थिवशरीरम्,

## नीलकण्ठी.

णाय **शब्देतरेति** ॥ चक्षुरादौ विशेषगुणस्यानुद्भूतरूपादेः सत्त्वेनाव्याप्तिवारणायोद्भूतेति ॥ उद्भूतत्वं न जातिः । शुक्लत्वादिना संकरात् । नच शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम् ॥ चाक्षुषादावुद्भूतरूपत्वादिना कारणत्वानुपपत्तेः । किं तु यच्छुक्लत्वादिव्याप्यमनुद्भूतत्वं नाना तत्तदभावकूटवत्त्वमुद्भूतत्वम् । तच्च संयोगादावपि । तथा च शब्देतरोद्भूतगुणं संयोगमादायासंभवस्य वारणाय **विशेषेति** ॥ कालादावतिव्याप्तिवारणाय विशेष्यदलम् ॥ तत्रैवातिव्याप्तिवारणाय **ज्ञानकारणेति** ॥ प्राचीनमते विषयावयवेन्द्रियावयवसंयोगस्य प्रत्यक्षजनकतया तदाश्रयस्य इन्द्रियावयवस्य, नवीनमते कालादौ रूपाभावप्रत्यक्षे संनिकर्षघटकतया कारणीभूतचक्षुस्संयोगाश्रयस्य कालादेश्च वारणाय **मनः**पदम् । न चात्मान्यत्वे सतीत्यनेनैवात्मन्यतिव्याप्तिवारणसंभवे किं पुनर्गुरुतरेण शब्देतरोद्भूतेत्यादिविशेषणेनेति वाच्यम् ॥ तथा सति चर्ममनःसंयोगस्य ज्ञानमात्रं प्रति हेतुत्वमते तत्रातिव्याप्तेरित्यलमतिविस्तरेण ॥ **एवंचेति** ॥ तत्तदर्थस्य शरीरादिसामान्यलक्षणत्वे

## भास्करोदयाख्यव्याख्या.

त्यर्थः । नवीनमते शरीरत्वरूपजातेरेव परिचायकरूपमिदमिति बोध्यम् । उद्भूतत्वस्य नानात्वे तत्तदुद्भूतरूपत्वेनैव कारणता कल्पनीया स्यात् । तथाचानुगतकारणतावच्छेदकत्वाभावादेकरूपेण कारणत्वानुपपत्तेः किं तदुद्भूतत्वमित्याशङ्क्य परिहरति— **किंत्विति** ॥ **तच्च संयोगादावपीति** । संयोगस्य प्रत्यक्षत्वादिति भावः । **असंभववारणायेति** । सर्वेषामेवेन्द्रियाणां शब्देतरोद्भूतविषयेन्द्रियसंयोगरूपसामान्यगुणाश्रयत्वाद्विशेषेति पदं लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वरूपासंभवरूपदोषवारणायेत्यर्थः । सर्वाधारतानियामकसंबन्धभिन्नसंबन्धेन लक्षणस्य चिकीर्षिततया लक्षणघटकीभूतविशेषणादिदलानामपि यथायथं क्लृप्तसंबन्धेनैव सत्त्वं विवक्षितमिति कालेऽतिप्याप्तिवारकविशेष्यदलप्रयोजनकथनं बोध्यम् । अन्यथा कालस्य जगदाधारतया शब्देतरोद्भूतविशेषगुणाश्रयतया च तदसंगतिरिति सर्वत्रैवं योजनीयम् ॥ **तत्रैवेति** ॥ काल एवेत्यर्थः । जगदाधारतया कालस्य मनःसंयोगाश्रयत्वेऽपि न ज्ञानकारणत्वं सर्वदैव ज्ञानोत्पत्तेरपि तु विषयेन्द्रियसंयोग एवेत्यर्थद्योतकं ज्ञानकारणेतीति । **कालादाविति** । काले रूपाभावप्रत्यक्षं संयुक्तविशेषणतयैवेति चक्षुःसंयुक्तविशेषणतासंनिकर्षघटकचक्षुःसंयोगाश्रयतया अभावप्रत्यक्षज्ञानकारणसंयोगाश्रयत्वेन काले तदापत्तिवारणाय मनःपदमित्यर्थः । लाघवमभिप्रेत्य शङ्कते— **नचेति** । एवं सति चर्ममनःसंयोगस्य जन्यज्ञानत्वावच्छिन्नं प्रति कारणत्वाङ्गीकर्तृनये चर्मण्यापत्तेरुक्तविशेषणे तु स्पर्शरूपविशेषगुणत्वान्नापत्तिः । केचित्त्वक्संयोगस्य शरीरसंयोगस्य च कारणत्वमाहुः ॥ ॥ **अथ त्वङ्मनोवादः** ॥ ॥ इदं त्ववधेयम् । त्वङ्म-

## भास्करोदयाख्यव्याख्या.

नोयोगस्य ज्ञानत्वावच्छिन्नं प्रति जन्यज्ञानत्वावच्छिन्नं प्रति वा हेतुत्वे मानाभावः। अथ स्वापोत्तरं द्वितीयादिक्षणे ज्ञानोत्पत्तिवारणाय जन्यज्ञानमात्रं प्रति त्वङ्मनोयोगस्य हेतुत्वमावश्यकम्, आत्मनो विभुत्वेन पुरीतति मनःसंयोगात्मकसुषुप्त्युत्पत्तिसमये पुरीतत्यवच्छेदेनात्ममनःसंयोगस्याप्युत्पत्तेः आत्ममनःसंयोगं विना श्वासप्रश्वासहेतुजीवनयोनियत्नानुत्पत्तेश्च । एतेनात्ममनःसंयोगस्यात्ममनःसंयोगत्वेन मनःसंयोगत्वेन वा नासमवायिकारणत्वं गौरवादपितु वैजात्येन सुष्वापकालीनात्ममनोयोगे च नैतादृशं वैजात्यं तस्य फलबलकल्प्यत्वात् । अतः सुषुप्तौ न ज्ञानोत्पत्तिरित्यपि परास्तम् । विजातीयात्ममनःसंयोगस्यासमवायिकारणस्य कार्यतावच्छेदकं न जन्यज्ञानत्वं, किंतु लाघवाज्ज्ञानेच्छादिसाधारणं जन्यात्मविशेषगुणत्वं, तथाच श्वासप्रश्वासहेतुजीवनयोनियत्नान्यथानुपपत्त्या विजातीयमनःसंयोगस्यापि तदानीमावश्यकत्वात् । त्वङ्मनःसंयोगश्च तदा नास्ति यदा मनस्त्वचमपि परिहृत्य पुरीततिमनुविशति तदा सुषुप्तिरित्यभिधानात् । नच सुषुप्तिदशायां ज्ञानोत्पादवारणाय जन्यज्ञानमात्रं प्रति प्राणमनःसंयोग एव कारणमभ्युपेयते नतु त्वङ्मनःसंयोग इति वाच्यम् । त्वक्त्वप्राणत्वयोरुभयोरेव जातिरूपतया विनिगमकाभावादिति । मैवम् । सुषुप्तिदशायां कीदृशं ज्ञानमापाद्यते । न वा तच्चाक्षुषादि, चक्षुरादिमनःसंयोगविरहादेव तदानीं तदनुत्पत्तेः । नाप्यनुमित्यादि, परामर्शादीनामभावात् । नापि स्मृतिः, उद्बोधकस्य फलबलकल्प्यत्वात् । न चात्ममनःसंयोगस्य सत्त्वादात्मादिमानसापत्तिः, तद्वारणाय जन्यज्ञानत्वावच्छिन्नं प्रति मानसत्वावच्छिन्नं प्रति वा त्वङ्मनोयोगस्य हेतुत्वमावश्यकमिति वाच्यम् ॥ ज्ञानाद्यात्मकविशेषगुणाविषयकात्मादिमानसस्यालीकतया सुषुप्त्युत्पत्तिकाले ज्ञानादिविरहादेव सुषुप्त्यनन्तरमानसानुत्पत्तेः । सुष्वापप्रयोजकमनःक्रियोत्पत्तिकाले तादृशमनःपूर्वदेशविभागोत्पत्तिकाले वा जातस्य ज्ञानादेराशुविनाशितया सुषुप्तिसमयेऽसत्वात्, सुषुप्त्युत्पत्तिकाले चात्ममनःसंयोगस्यासमवायिकारणस्य पूर्वमभावादेव तादृशज्ञानाद्यनुत्पत्तेः । नच मनःपूर्वदेशविभागकालोत्पन्नस्यापेक्षाबुद्ध्यात्मकज्ञानस्य सुषुप्त्युत्पत्तिकालेऽवस्थानं संभवतीति वाच्यम् । तदानीमपेक्षाबुद्ध्यात्मकज्ञानोत्पादे मानाभावात् । अपेक्षाबुद्धेरपि क्षणत्रयावस्थायित्वे मानाभावाच्च । नच सुष्वापप्रयोजकमनःपूर्वदेशसंयोगनाशकालोत्पन्नज्ञानादेः सुष्वापोत्पाददशायामवस्थानं संभवतीति वाच्यम् । असमवायिकारणस्य कार्यसहभावेन हेतुतया मनःपूर्वदेशसंयोगनाशदशायां ज्ञानोत्पादासंभवात् । नच यस्यासमवायिकारणनाशात्कार्यनाशस्तस्यैव कार्यसहभावेन हेतुतया मनःसंयोगस्य कार्यसहभावेनासमवायिकारणत्वे मानाभाव इति वाच्यम् । त्वङ्मनोयोगस्यातिरिक्तकारणत्वापेक्षया तावन्मात्रस्य कल्पनाया लघुत्वात् ॥ नचात्ममनःसंयोगस्यात्ममनःसंयोगत्वेन मनःसंयोगत्वेन वा नासमवायिकारणत्वम् । किं तु लाघवात्संयोगत्वेन । तथाच यत्किंचित्संयोगस्य कार्यसहवृत्तित्वमस्त्येवेति वाच्यम् । त्वङ्मनोयोगस्यातिरिक्तकारणत्वकल्पनामपेक्ष्यात्ममनःसंयोगत्वेनात्ममनःसंयोगवृत्तिवैजात्येन वा कार्यसहवृत्तितयाऽसमवायिकारणत्वमात्रकल्पनाया लघुत्वात् ॥ न चात्ममनःसंयोगस्य कार्यसहवृत्तितया हेतुत्वेऽपि यत्र मनःक्रियया न पुरी-

## भास्करोदयाख्यव्याख्या.

तति मनःसंयोगात्मकसुषुप्त्युत्पादः किंतु पूर्वदेशसंयुक्त एव मनसि क्रियया पुरीतति संयोगरूपः सुप्त्यापस्तत्र स्वापोत्पत्तिप्राक्काले ज्ञानोत्पत्तिसंभव इति वाच्यम्। तादृशपुरीतति संयोगस्य सुषुप्तित्वविरहात्। यदा मनस्त्वचमपि परिहृत्य पुरीततिमनुविशति तदा सुषुप्तिरित्यभिधानात्॥ केचित्तु स्वापानन्तरं ज्ञानोत्पादवारणाय जन्यज्ञानत्वावच्छिन्नं प्रति आत्ममनःसंयोगस्यैव स्वापकालीनमनःसंयोगव्यावृत्तवैजात्येन हेतुत्वमुपेयते न तु त्वङ्मनोयोगस्य। न च विनिगमकाभावात्त्वङ्मनोयोगस्यापि वैजात्येन हेतुत्वं दुर्वारम्। ज्ञानेच्छादिसाधारणजन्यात्मविशेषगुणत्वावच्छिन्नं प्रति आत्ममनःसंयोगस्य पृथगसमवायिकारणतायास्त्वयाप्यावश्यकत्वादिति वाच्यम्। आत्ममनःसंयोगस्य वैजात्येन हेतुत्वे समवायस्य प्रत्यासत्तितया प्रत्यासत्तिलाघवात्। त्वङ्मनोयोगस्य हेतुत्वेऽवच्छेदकस्यैव प्रत्यासत्तित्वेन प्रत्यासत्तिगौरवात्। कर्मसंयोगजन्यतावच्छेदकव्याप्यवैजात्यद्वयस्याधिकस्य कल्पने गौरवापत्तेश्चेत्याहुः। तदसत्। उक्तक्रमेणैव सुषुप्त्यनन्तरं ज्ञानोत्पत्तिवारणसंभवेनात्ममनःसंयोगस्याप्यतिरिक्तकारणत्वेन कल्पने मानाभावात्। **मिश्रास्तु** सुषुप्त्यनन्तरं ज्ञानोत्पत्तिवारणाय चर्ममनःसंयोग एव ज्ञानसामान्ये हेतुरभ्युपेयते नतु त्वङ्मनोयोगः। नच विनिगमनाविरहः, जन्यज्ञानसामान्ये त्वङ्मनोयोगस्य हेतुत्वे रसादिसाक्षात्कारकाले त्वचा द्रव्यसाक्षात्कारापत्तेः। सामान्यसामग्र्या त्वङ्मनोयोगस्यावश्यकत्वात्। रसादिसाक्षात्कारसामग्र्याः प्रतिबन्धकत्वोपगमेऽतिगौरवादित्याहुः। तदसत्। रसादिसाक्षात्कारकाले द्रव्येण समं त्वक्संनिकर्ष एव मानाभावेन तदभावादेव त्वचा द्रव्यसाक्षात्कारापत्तेरभवात्। तावता मानसत्वावच्छिन्नं प्रति त्वङ्मनोयोगस्य हेतुत्वे बाधकाभावात्। उक्तक्रमेणैव सुषुप्त्यनन्तरं ज्ञानोत्पत्तिवारणसंभवे चर्ममनःसंयोगस्यापि हेतुत्वे मानाभावाच्च। केचित्तु सुषुप्त्यनन्तरं ज्ञानोत्पत्तिवारणाय शरीरमनःसंयोग एव जन्यज्ञानसामान्ये मानससामान्ये वा हेतुरुपेयते नतु त्वङ्मनःसंयोगः। शरीरसंयोगस्य त्वक्संयोगव्याप्यतया सुषुप्तिदशायां त्वङ्मनोयोगस्येव शरीरमनोयोगस्याप्यभावात्। नच शरीरत्वमपेक्ष्य त्वक्त्वस्य जातिरूपतया लघुत्वेन त्वङ्मनोयोग एव हेतुरुचित इति वाच्यम्। शरीरमनःसंयोगस्य हि शरीरमनःसंयोगत्वेन न हेतुत्वं येन शरीरत्वप्रवेशः। अपितु शरीरनिष्ठतया मनःसंयोगत्वेन समवायावच्छेदकत्वघटितसामानाधिकरण्यं प्रत्यासत्तिः। कारणदिशि समवायः कार्यदिशि अवच्छेदकत्वम्। यद्वा संयोगसंबन्धेन शरीरनिष्ठतया मनस्त्वेन हेतुत्वं कार्यतावच्छेदकसंबन्धश्चावच्छेदकत्वं, त्वङ्मनोयोगस्य हेतुत्वे त्वक्त्वक्संयोगत्वयोरवच्छेदककोटिप्रवेशस्यावश्यकतया गौरवात्। नच त्वङ्मनोयोगस्यापि त्वङ्मनोयोगत्वेन न हेतुत्वमपितु वैजात्येन। अतो न त्वक्संयोगत्वयोः प्रवेश इति वाच्यम्। तथाप्यतिरिक्तवैजात्यकल्पनामपेक्ष्य मनस्त्वेनैव हेतुताया लघुत्वादिति प्राहुः। तदसत्। स्वापोत्तरं ज्ञानोत्पादप्रसङ्गस्योक्तक्रमेणैव वारणसंभवात् शरीरमनःसंयोगस्यापि अतिरिक्तकारणत्वे मानाभावादिति संक्षेपः॥ **इति त्वङ्मनोवादः**॥ *॥ पृथिव्याः गन्धवत्त्वलक्षणत्वात्तस्या एव शरीरत्वादिभेदेन भेदात्तल्लक्षणेनैव तल्लक्षणनिर्वाहे ग्राहकपदं

गन्धवदिन्द्रियं पार्थिवेन्द्रियम्, गन्धवान् विषयः पार्थिवविषयः इति तत्तल्लक्षणं बोध्यम्। पार्थिवं शरीरं दर्शयति—शरीरमिति ॥ इन्द्रियं दर्शयति—इन्द्रियमिति ॥ गन्धग्राहकमिति प्रयोजनकथनम्। घ्राणमिति संज्ञा। नासाग्रेत्याश्रयोक्तिः। एवमुत्तरत्र ज्ञेयम् ॥ पार्थिवविषयं दर्शयति—मृत्पाषाणेति ॥

**शीतस्पर्शवत्य आपः ॥ ता द्विविधाः नित्या अनित्याश्च। नित्याः परमाणुरूपाः। अनित्याः कार्यरूपाः। पुनस्त्रिविधाः–शरीरेन्द्रियविषयभेदात् ॥ शरीरं वरुणलोके। इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति। विषयः सरित्समुद्रादिः ॥**

अपां लक्षणमाह—शीतेति ॥ उत्पन्नविनष्टे जलेऽव्याप्तिवारणाय शीतस्पर्शसमानाधिकरणद्रव्यत्वापरजातिमत्त्वे तात्पर्यम् ॥ 'शीतं शिलातलम्' इत्यादौ जलसंबन्धादेव शीतस्पर्शभानमिति नातिव्याप्तिः ॥ अन्यत्सर्वं पूर्वरीत्या व्याख्येयम्।

**उष्णस्पर्शवत्तेजः ॥ तद्द्विविधम्–नित्यमनित्यं च। नित्यं परमाणुरूपं। अनित्यं कार्यरूपम्। पुनस्त्रिविधम्–शरीरेन्द्रियविषयभेदात् ॥ शरीरमादित्यलोके। इन्द्रियं रूपग्राहकं**

---

## नीलकण्ठी.

चेत्यर्थः ॥ ननु गन्धवत्त्वप्रवेशेनैव तल्लक्षणस्य सामञ्जस्ये गन्धग्राहकत्वनिवेशनमनुचितम्। एवं च 'इन्द्रियं गन्धग्राहकम्' इति मूलमनुपपन्नमित्याशङ्कां परिजिहीर्षुस्तन्मूलं तत्प्रयोजनकथनपरतया व्याचष्टे—**गन्धग्राहकमिति** ॥ उत्तरत्र 'इन्द्रियं रसग्राहकम्' इत्यादौ ॥ इति पृथिवी ॥ * ॥ **शीतस्पर्शसमानाधिकरणेति** ॥ तत्र विशेषणप्रयोजनं पूर्वोक्तरीत्या ऊह्यम् ॥ जलत्वजातिसिद्धिस्तु स्नेहजनकतावच्छेदकतयेति बोध्यम् ॥ **अन्यत्सर्वं पूर्वरीत्येति** ॥ नित्यत्वादिकम् ॥ जलशरीरादि-

## भास्करोदयाख्यव्याख्या.

सार्थकयितुं प्रवृत्तं मूलमवतारयितुमाशङ्कते—**नन्विति**। **गन्धवत्त्वप्रवेशेनैवेति**। गन्धवत्त्वलक्षणलक्षितत्वेनैवेत्यर्थः। **पूर्वोक्तरीत्येति**। गन्धसमानाधिकरणेत्यादिलक्षणोक्तपदप्रयोजनवदित्यर्थः। स्नेहजनकतावच्छेदकतयेति। ननु चूर्णादिपिण्डीभावहेतुगुणरूपस्नेहस्य जलमात्रवृत्तित्वेन जलवृत्तिसांसिद्धिकद्रवत्वेनैव चूर्णादिपिण्डीभावसंभवे स्नेहस्यानावश्यकतया कथं तदवच्छेदकतया जलत्वजातिसिद्धिरिति चेन्न। स्निग्धमित्यबाधितप्रतीतिविषयत्वेनावश्यकतेत्यभिप्रायात्। यत्तु जलस्यैव पिण्डीभावहेतुत्वे सांसिद्धिकद्रवत्वमेव निःप्रयोजनं येन भवान् शङ्केत स्नेहो नेति तदतीव रभसात्। करकादीनामपि जलस्वरूपत्वेन तैश्चूर्णादिपिण्डीभावापत्तेः, किंच द्रवत्ववदित्यबाधितप्रती-

**चक्षुःकृष्णताराग्रवर्ति ॥ विषयश्चतुर्विधः भौमदिव्योदर्याकरजभेदात् । भौमं वह्न्यादिकम् । अविन्धनं दिव्यं विद्युदादि । भुक्तस्य परिणामहेतुरुदर्यम् ॥ आकारजं सुवर्णादि ॥**

तेजसो लक्षणमाह—उष्णस्पर्शवदिति ॥ 'उष्णं जलम्' इति प्रतीतेस्तेजःसंबन्धानुविधायित्वात् नातिव्याप्तिः ॥ विषयं विभजते—भौमेति ॥ ननु 'सुवर्णं पार्थिवम् पीतत्वाद्गुरुत्वात् हरिद्रावत्' इति चेत् । न । अत्यन्तानलसंयोगे सति

---

## नीलकण्ठी.

लक्षणं च गन्धवत्त्वस्थाने शीतस्पर्शवत्त्वं निवेश्य पृथिवीनिरूपणोक्तरीत्येत्यर्थः ॥ एवमग्रेऽप्यूह्यम् ॥ इति जलम् ॥ * ॥ मूले **अविन्धनमिति** ॥ आप एव इन्धनमुद्दीपनं यस्य तदित्यर्थः ॥ **भुक्तस्येति** ॥ भुक्तस्यौदनादेः परिणामः परिपाकः । तत्र हेतुरित्यर्थः ॥ **आकरजमिति** ॥ आकरः खनिस्तत्र जातमित्यर्थः ॥ सुवर्णस्य तैजसत्वं व्यवस्थापयितुं शङ्कते दीपिकायां—**नन्विति** ॥ पार्थिवत्वसाधकं पीतत्वहेतुमुक्त्वा तैजसत्वाभावसाधकं हेतुमाह—**गुरुत्वादिति** ॥ एतेन सुवर्णरूप-

## भास्करोदयाख्यव्याख्या.

तेश्च द्रवत्वगुणाङ्गीकारमन्तेरणासंभवात् । द्रवत्वविशिष्टजलस्यैव चूर्णादिपिण्डीभावहेतुत्वाभ्युपगमेन करकादिभिस्तदापत्तेर्वारणीयत्वात् । ननु तथापि चूर्णादिपिण्डीभावहेतुत्वं घृतादेरपीति चेन्न । घृतादावपि जलांशस्य सत्वात् स्नेहोत्कर्षेण च न दाहकत्वव्याघात इत्यलम् ॥ संग्रहस्थमविन्धनपदं षष्ठीतत्पुरुषमिति भ्रमं निरससितुं कर्मधारयसमासतात्पर्यकत्वेन विवृणोति—**आप एवेति** । नन्वपां कथमुद्दीपत्वं श्रुतौ 'अग्नेरापः' इत्यग्नेरेवोद्दीपकत्वं श्रूयत इति चेन्न तच्छ्रुतेः सृष्टिक्रमविषयत्वात् । एवमपि कथमुद्दीपकत्वम् । अपां तेजोनाशकत्वप्रसिद्धेरिति चेदित्थम् । भौमतैजसो भौमान्वारब्धत्वेऽपि फलबलाद्वैजात्यपुरस्कारेण दोषवारणमिति । अतएव वडवानलस्याप्स्थानत्वसंगतिः । आदिपदादशनिसंग्रहः । **पार्थिवत्वसाधकं पीतत्वहेतुमुक्त्वेत्यादि** । क्त्वाप्रत्ययस्य लाघवात्प्रागभावे शक्तिः कर्तरि निरूढलक्षणा प्रागभावश्च कालीनत्वसंबन्धेन आधेयता संबन्धेन वा प्रकृत्यर्थस्य विशेष्यतया प्रतियोगितासंबन्धेनोत्तरक्रियायाश्च विशेषणतयान्वेति । कर्ता चोत्तरत्र क्रियायां कर्तृतासंबन्धेन विशेषणतयान्वेति प्रकृत्यर्थश्च पक्त्वेत्यादाविव तदेकदेशे कर्तृत्वे विशेषणतयान्वेति । इत्थं च पार्थिवत्वसाधकाभिन्नपीतत्वहेतुविषयकवचनकर्तृकर्तृकं यत्पार्थिवत्वसाधकपीतत्वहेतुवचनकालीनप्रागभावप्रतियोगि पार्थिवत्वसाधकपीतत्वहेतुवचनवृत्तिप्रागभावप्रतियोगि वा यत्तैजसत्वाभावसाधकहेतुवचनं तदनुकूलकृतिमान्मूलकार इति विशिष्टबोधः ॥ प्रसंगादेतदग्रे विशदन्निरूपयिष्यामः । **एतेनेति** । व्यतिरेकसाधकगुरुत्वादिहेत्वन्तरोपन्यासेनेत्यर्थः ॥ **गुरुत्वस्याप्रत्यक्षत्वेनेति** । पार्थिवसंयोगादेव गुरुत्वं न साक्षात्तेजसीति वृद्धव्य-

घृतादौ द्रवत्वनाशदर्शनेन, जलमध्यस्थघृते द्रवत्वनाशादर्शनेन, असति प्रतिबन्धके पार्थिवद्रवत्वनाशाग्निसंयोगयोः कार्यकारणभावावधारणात् । सुवर्णस्य अत्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वेन पार्थिवत्वानुपपत्तेः । तस्मात् पीतद्रव्यद्रवत्वनाशप्रतिबन्धकतया द्रवद्रव्यान्तरसिद्धौ नैमित्तिकद्रवत्वाधिकरणतया जलत्वानुपपत्तेः रूपवत्तया वाय्वादिष्वनन्तर्भावात् तैजसत्वसिद्धिः ॥ तस्योष्णस्पर्शभास्वररूपयोरुपष्टम्भकपार्थिवरूपस्पर्शाभ्यां प्रतिबन्धात् अनुपलब्धिः ॥ तस्मात् सुवर्णं तैजसमिति सिद्धम् ॥

## रूपरहितस्पर्शवान् वायुः ॥ स द्विविधः—नित्योऽनित्यश्च ।

### नीलकण्ठी.

तेजसि विजातीयपीतरूपं स्वीक्रियते 'पीतं सुवर्णम्' इत्यबाधितप्रत्यक्षप्रतीतिबलात् । एवं च तैजसत्वस्य निर्बाधतया पृथिवीत्वं न सिध्यतीति कस्यचिद्भ्रान्तिर्निरस्ता । गुरुत्वस्याप्रत्यक्षत्वेन तथा वक्तुमशक्यत्वादिति दिक् । सुवर्णस्य पीतिमगुरुत्वाश्रयतोऽतिरिक्तत्वं व्यवस्थापयिष्यन् वक्ष्यमाणानुमानेऽप्रयोजकत्वशङ्कावारणाय कार्यकारणभावमनुकूलतर्कं व्यवस्थापयति—**अत्यन्तानलेति** । **सुवर्णस्येत्यादिः** । अनुमानप्रयोगस्त्वित्थमवसेयः । 'सुवर्णमपार्थिवम्, असति प्रतिबन्धके अत्यन्तानलसंयोगे सति अनुच्छिद्यमानद्रवत्वाधिकरणत्वात् यन्नैवं तन्नैवं यथा पृथिवी' । जलमध्यस्थघृतादौ व्यभिचारवारणाय 'असति प्रतिबन्धके' इति । अग्निसंयोगासमानाधिकरणद्रवत्ववति घृतादौ व्यभिचारवारणाय अत्यन्तानलसंयोगे सतीति । **द्रवद्रव्यान्तरसिद्धाविति** । 'अत्यन्तानलसंयोगि पीतिमाश्रयः द्रवत्वनाशप्रतिबन्धकद्रवद्रव्यान्तरसंयुक्तः अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वे सति गुरुत्वाज्जलमध्यस्थघृतादिवत्' इत्यनुमानेन तत्सिद्धिर्द्रष्टव्या । जलादिकमादायानुमानपर्यवसानं वारयति—**नैमित्तिकेति** । ननु 'उष्णस्पर्शभास्वररूपयोरुपलब्ध्यभावेन सुवर्णस्य तैजसत्वमनुपपन्नम्' इत्यत आह—**तस्येति** ।

### भास्करोदयाख्यव्याख्या.

व्यवहारेणेत्यर्थः ॥ केवलस्य तेजसो गुरुत्वेन प्रत्यक्षाविषयत्वादित्यर्थः । **दिगिति** । दिगर्थमेवाग्रे स्वयं फलितमूलाशयवर्णनानुमानाकारनिर्दर्शनेन विशदयिष्यति—**वक्ष्यमाणानुमानेति** । सुवर्णपक्षकपार्थिवत्वाभावसाधकासतीत्यादिहेतुकानुमानेत्यर्थः । तत्र हेतुरस्तु । साध्यं मास्तु । इत्येवं याऽप्रयोजकत्वशङ्का तस्याः कार्यकारणभावानुकूलतर्केतरानाश्यत्वात् यथा यदि वह्निर्धूमव्यभिचारी स्यात्तर्हि वह्निजन्यो न स्यादित्येतद्रीत्या कार्यकारणभावावधारणात् ॥ मूलं प्रकृते प्राप्ताप्रयोजकत्वशङ्कावारकमिति व्याचष्टे—**अप्रयोजकत्वशङ्केत्यादि** । अनलसंयोगेऽत्यन्तत्वविशेषणं तु यत्किंचिदनलसंयोगसमानाधिकरणद्रवत्ववति घृतादौ व्यभिचारनिरासायेति बोध्यम् । **द्रवद्रव्यान्तरसिद्धावितीति** ॥ अयं भावः । सुवर्णे पार्थिवभागोपष्टम्भेन तत्र चात्यन्तानलसंयोगे सति तदीयद्रवत्वस्यानुच्छिद्यमानत्वेन तत्प्रतिबन्धकीभूतद्रवद्रव्यान्तरकल्पनामन्तरेणोक्तकार्यकारणभावकल्पनानुपपत्तेः । तद्घटकमुक्तहेतुकं द्रवद्रव्यान्तरं

नित्यः परमाणुरूपः ॥ अनित्यः कार्यरूपः ॥ पुनस्त्रिविधः—शरीरेन्द्रियविषयभेदात् ॥ शरीरं वायुलोके ॥ इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवर्ति ॥ विषयो वृक्षादिकम्पनहेतुः ॥ शरीरान्तःसंचारी वायुः प्राणः ॥ स चैकोऽप्युपाधिभेदात् प्राणापानादिसंज्ञां लभते ॥

वायुं निरूपयति—रूपरहितेति ॥ आकाशादावतिव्याप्तिवारणाय स्पर्शवानिति ॥ पृथिव्यादावतिव्याप्तिवारणाय रूपरहितेति ॥ ननु प्राणस्य कुत्रान्तर्भाव इत्यत आह—शरीरेति ॥ स चेति । एक एव प्राणः स्थानभेदात् प्राणापानादिशब्दैर्व्यवह्रियत

---

## नीलकण्ठी.

**प्रतिबन्धादिति** । दोषविधयेत्यादिः । इति तेजः ॥ * ॥ **शरीरेतीति** । तथा च

## भास्करोदयाख्यव्याख्या.

तैजसमङ्गीकार्यमिति ॥ अतएव सुवर्णस्यासाधारणोष्णस्पर्शभास्वररूपयोरसत्वादित्याशङ्क्य पार्थिवभागोपष्टम्भेन समाधत्ते मूले ॥ **दोषविधयेत्यादिरिति** ॥ पार्थिवभागोपष्टम्भ एवात्र दोषो ध्येयः । अत्र द्रवत्वनाशप्रतिबन्धिका भगवदिच्छैवातस्तत्सिद्धिः । तत्कल्पने प्रमाणम् 'अग्नेरपत्यं प्रथमं हिरण्यं तेजः सुवर्णं सुवर्ण घर्मोऽसि' इत्याद्यागमोऽनुसन्धेयः ॥ ॥ **सुवर्णवादप्रारम्भः** ॥ इदं त्वत्रावधेयम् । अथ सुवर्णं तैजसमिति निखिलवैशेषिकैकवाक्यतया नैयायिका वदन्ति । तदपरे न क्षमन्ते मानाभावात् । नहि सुवर्णं तेज इति कश्चित्साक्षात्करोति । अथ सुवर्णं तेजः अत्यन्ताग्निसंयोगानुच्छिद्यमानद्रवत्ववत्त्वाद्यन्नैवं तन्नैवं यथा घृतम्, यथा वा आकाशा इति व्यतिरेक्यनुमानम् । नच सुवर्णपदेन पीतरूपाश्रयस्य पक्षत्वे बाधः अतिरिक्तव्यक्तिविशेषपक्षत्वे पक्षाप्रसिद्धिरिति वाच्यम् । दहनमध्यवर्त्यनुभूयते यो द्रवत्वविशेषः समवायेन तद्वतः पक्षत्वादिति चेन्न । द्रवत्वतारतम्यानुभवे तत्र तादृशद्रवत्वासिद्धेः । नच तत्राश्रयनाशादेव पूर्वद्रवत्वनाशस्तत्कालोत्पन्ने च सुवर्णान्तरे प्रकृष्टं द्रवत्वमुत्पद्यत इति वाच्यम् । यदेव द्रुतमासीत्तदेवेदानीं द्रुततरमिति प्रत्यभिज्ञानात् । प्रत्यभिज्ञानस्य तज्जातीयत्वावगाहित्वं वदतां वैशेषिकाणां नये नेदमनुमानमिति चेदस्तु तावदेवमापाततस्तथापि घृतादौ व्यभिचारः । सुवर्णारम्भकाः परमाणव एव पक्षीकरणीया इति चेन्न, स्वरूपासिद्धितादवस्थ्यात्, द्रुततरैः सुवर्णारम्भकैः परमाणुभिरेव द्रुततमसुवर्णारम्भादप्रयोजकत्वाच्च । नचाश्रयनाशाजन्यपृथिवीद्रवत्वं प्रति पार्थिवाणुद्रवनाशं प्रति वाऽग्निसंयोगस्य हेतुत्वादनुभूयमानद्रवत्वस्य पार्थिवत्वेऽग्निसंयोगादुच्छेदापत्तेर्नाप्रयोजकत्वमिति वाच्यम् । एतावता पृथिव्यन्यत्वसिद्धावपि तेजस्त्वासिद्धेः । नच पृथिवीजलान्यरूपत्वेन तेजस्त्वं साध्यम् । अप्रयोजकत्वात् । अस्तु तर्हि दशमं द्रव्यमिति चेन्न । अग्निसंयोगेन सुवर्णद्रवत्वोच्छेदस्य दर्शितत्वात् । बहुतरसुवर्णतद्गुणादिकल्पनापेक्षया तादृशद्रवत्वनाशप्रयोजकतया सुव-

## भास्करोदयाख्यव्याख्या.

र्णाग्निसंयोगव्यावृत्ताग्निसंयोगजजलसंयोगनिष्ठवैजात्यकल्पनाया एव लघुत्वाच्च । जलसंयोगेन सुवर्णद्रवत्वनाशस्य त्वयाप्यभ्युपगमात् । अत एव पृथिवीपीतरूपवत्सुवर्णद्रवत्वस्याग्निसंयोगादनाशेनाग्निसंयोगाद्रवत्वनाशप्रतिवन्धकं पार्थिवसुवर्णसंयुक्तं द्रुतं द्रव्यान्तरं सिध्यति, तादृशद्रवत्वनाशं प्रति प्रतिवन्धकतया जलमध्यवर्तिघृतादौ कल्पनादित्यपि मतमपास्तम् । तथापि तारतम्यानुभवेन सुवर्णद्रवत्वानुच्छेदस्य सुवर्णादेर्जातिविशेषेण प्रतिवन्धकत्वादेव द्रवत्वानुच्छेदस्य वक्तुं शक्यत्वाच्च । सुवर्णसंयुक्तघृतादेर्द्रवत्वानुच्छेदप्रसङ्गेन चाग्निसंयोगद्रवत्वनाशं प्रति जलत्वेन तादृशसुवर्णनाशं प्रति च द्रवत्वेन च प्रतिवन्धकतायास्त्वयापि वाच्यत्वात् । यच्च केनचिदुक्तम् । अनुभूयमानद्रवत्वाधिकरणं तेजः पृथिवी, भिन्नं वा । समानाधिकरणद्रवत्वसामग्र्यसमवधानक्षणोत्पत्तिकाग्निसंयोगजन्यध्वंसप्रतियोग्यवृत्तिजातिमद्द्रवद्रव्यत्वात् यन्नैवं तन्नैवं यथा घृतम् । अस्ति हि वह्निसंयोगेन सुवर्णद्रवत्वनाशोत्पत्तिदशायां द्रवत्वान्तरसामग्रीनियमः । अव्यवधानेन द्रवत्वतारतम्यानुभवात् । अग्निसंयोगेन घृते द्रवत्वनाशोत्पत्तिसमये तत्र कदाचिद्द्रवत्वसामग्रीसत्वेऽपि न तथा नियमः । अग्निसंयोगेन चरमघृतद्रवत्वनाशोत्पत्तिसमये द्रवत्वसामग्रीविरहात् । जलसंयोगजन्यचरमसुवर्णद्रवत्वनाशस्य तादृशक्षणोत्पत्तिकत्वादसिद्धिः स्यादत उक्तमग्निसंयोगजन्येति । सुवर्णस्य द्रवत्वे तु घृतद्रवत्वव्यावृत्तजातिरनुभवसिद्धेति नासिद्धितादवस्थ्यम् । अस्तु जातिविशेषवद्द्रवत्वमेव हेतुरिति । तदपि न । अप्रयोजकत्वात्, घृतेऽग्निसंयोगजद्रवत्वनाशोत्पत्तिदशायां कदाचिद्द्रवत्वसामग्रीसमवधानवत्सुवर्णे नियतम्, तथा समकालं विलक्षणाग्निसंयोगस्य द्रवत्वोत्पादकत्वादेव चरमघृतद्रवत्वनाशोत्पत्तेरनन्तरं न तत्र द्रवत्वोत्पत्तिः । नच तादृशविलक्षणद्रवत्वस्य पृथिवीवृत्तित्वे घृतेऽपि तादृशद्रवत्वापत्तिः तेजोवृत्तित्वे वह्न्यादावपि तदापत्तेस्तुल्यत्वात् । तादृशद्रवत्वं प्रति जातिविशेषसमवधानस्यापि हेतुतायाः समानत्वात् पार्थिवसुवर्णेनावश्यं द्रवद्रव्यसंयुक्तेन भवितव्यम् । कथमन्यथा दग्धपीतपटादौ रूपपरावृत्तिप्रतिवन्धकतया क्लृप्तजातीयं द्रवद्रव्यमन्तरेण तत्र रूपपरावृत्तिरुपपद्यते । नच रूपपरावृत्तिः पूर्वरूपनाशरूपान्तरोत्पत्ती इति चेद् भवत एव पीततारतम्यानुभवादिति वाच्यम् । पीतेतररूपस्य रूपपरावृत्तिपदार्थत्वादिति । मैवम् । पीतेतररूपापादकाभावात् । नहि पीतेतररूपत्वेनाग्निसंयोगजन्यत्वम् किंतु रूपत्वव्याप्यजातिभेदेन । नच तदाश्रय एव, पीतेतरत्वादेस्तदाश्रयस्य तदोत्पादोपगमात् । अथ तादृशजातिभेदोऽपि नीलत्वानियतो नानाविध एव । अन्यथा नीलत्वादिना संकरप्रसङ्गात् । एवं च पीतेतररूपं शुक्लत्वादिजातिभेदेनापादनीयमिति चेदस्तु तावदेषा गौरवपराहताऽपि सिद्धान्तसरणिः, तथापि घटादावग्निसंयोगादेकविधरूपोत्पत्तिदशायामन्यविधरूपानुत्पत्तेस्तत्र तत्र भिन्नजातीयाग्निसंयोगहेतुतावश्यकत्वेनैव सर्वसामञ्जस्यात्, किंतु जलत्वेनैवेति । नच पीतेतरसुवर्णरूपं प्रति तद्रूपेण पृथग्विरोधित्वं कल्पनीयम् । पीतेतरसुवर्णरूपाप्रसिद्धेः । उपष्टम्भकविलक्षणसंयोगेन पीतेतररूपं प्रति द्रवद्रव्यं विरोधी-

इत्यर्थः ॥ स्पर्शानुमेयो वायुः ॥ तथा हि—'योयं वायौ वाति सति अनुष्णाशीत-स्पर्शो भासते, स स्पर्शः क्वचिदाश्रितः गुणत्वात् रूपवत्'। न चास्य पृथिवी आश्रयः,

## नीलकण्ठी.

प्राणस्य विषयेऽन्तर्भावः । **स्थानभेदादिति** । हृदि प्राण[1] इत्यादिकोशोक्तस्थानभेदादित्यर्थः । स्वमतं दर्शयति—**स्पर्शानुमेय इति** । **अस्येति** । उपलभ्यमान-

## भास्करोदयाख्यव्याख्या.

त्यपि न सांप्रतम् । रजते शुक्लेतरानुत्पत्तिप्रसङ्गात् । तेजस्त्वव्याप्यसुवर्णत्वेन तद्विरोधोपगमे पृथिवीत्वव्याप्यसुवर्णत्वेनैव तादात्म्येन प्रतिबन्धकत्वौचित्यात् । नच पृथिवीपरमाणौ तदा रूपपरावृत्तिश्च स्यात्सुवर्णस्य परमाणावभावात् । अन्यथा भस्मारम्भके तत्र रूपपरावृत्तेरनुत्पत्तेरिति वाच्यम् । समवायसंबन्धेनापि तेन रूपेण प्रतिबन्धकताया वक्तव्यत्वात् । त्वयापि तैजससुवर्णं प्रति तदवयवादेः कारणान्तरस्य वक्तव्यत्वात् कल्प्यतां वा सुवर्णतदारम्भकपरमाणुद्रवत्वेष्वेव पीतेतररूपप्रतिबन्धकतावच्छेदकतया जातिविशेषः । वस्तुतस्तु । पीतादितररूपं प्रति पीतादिरूपस्य, नीलादिरूपं प्रति नीलादिभिन्नरूपस्य वा प्रतिबन्धकत्वात्प्रतिबन्धकाभावस्य कार्यसहभावेन हेतुत्वात् न पीतोत्पत्तिसमये तदितररूपोत्पत्तिः । एवं चैकेनैव वैजात्येनाग्निसंयोगस्य नीलपीतादिजनकत्वमवच्छिद्यते, इति न काप्यनुपपत्तिः । 'अग्नेरपत्यं प्रथमं हिरण्यम्' इत्यागमः सुवर्णस्य तैजसत्वसाधक इति व्यामोहमात्रम् । नहीदमग्निसमवायिकारणकत्वं बोधयति । असामर्थ्यात् । प्रकृते बाधाच्च । किंतु वह्निजन्यत्वमात्रम् । सुवर्णादेस्तैजसत्वसाधकागमस्तु तेजोविकारतयोपपादनीयः । तेजः सुवर्णमित्याकारकागमो यदि सन् तदा तेजःपदं दीप्यमानपरं वा, तस्मादनुभूयमानतद्द्रवत्वाधिकरणं पृथिवी पीतरूपात् । काठिन्यसंयोगान्नैमित्तिकद्रवत्ववत्वाच्च तत्र पृथिवीत्वेन समवायिनः कारणत्वात् । नचेदमसिद्धम् । पीतं द्रुतमिति प्रतीतिर्न परम्परासंबन्धावगाहिनी । साक्षात्संबन्धेन बाधकाभावात् द्रव्यान्तरे मानाभावाच्चेति संक्षेपः ॥ इति **सुवर्णवादः** ॥*॥ **स्थानभेदादिति** । स्थानभेदेन तद्भेदस्य कोश एव प्रसिद्धेरौपाधिको भेदव्यवहारो न वास्तविक इति भावः । **स्वमतं दर्शयतीति** । स्वेनैवाग्रे प्रत्यक्षत्वस्य निरस्यमानत्वतात्पर्येणेदम् । ननु स्पर्शाश्रयत्वेन तत्सिद्धिः स्पर्शस्यातिरिक्तानाश्रयत्व एव तत्कथमित्याशङ्कां दूरीकुर्वंतो मूलस्याशयमन्वयं च दर्शयति—**उपलभ्यमानस्पर्शस्येति** । विजातीयस्येत्यादिः । अत एवोद्भूतस्पर्शवत्पार्थिवस्योद्भूतरूपवत्त्वनियमात्पृथिव्यास्तद्द्रव्यत्वनिराकरणं मूले । अन्यथाऽसंगतिः स्पष्टैव, अन्वयप्रदर्शनं च स्पष्टप्रतिपत्त्यर्थम् ।

---

१ हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।
उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः ॥

इति । मुखनासिकाभ्यां निष्क्रमणप्रवेशनात्प्राणः । मलादीनामधोनयनाद् अपानः । आहारेषु पाकार्थं वह्नेः समुन्नयनात्समानः । ऊर्ध्वनयनादुदानः । नाडीमुखेषु विततनाद्व्यानः ॥

उद्भूतस्पर्शवतःपार्थिवस्योद्भूतरूपवत्त्वनियमात्। न जलतेजसी, अनुष्णाशीतत्वात्। न विभुचतुष्टयम्, सर्वत्रोपलब्धिप्रसङ्गात्। न मनः, परमाणुस्पर्शस्यातीन्द्रियत्वात्। तस्माद् यः प्रतीयमानस्पर्शाश्रयः स वायुः ॥ ननु 'वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् घटवत्' इतिचेत्। न। उद्भूतरूपवत्त्वस्योपाधित्वात् ॥ 'यत्र द्रव्यत्वे

## नीलकण्ठी.

स्पर्शस्य आश्रयः। पृथिवी न चेत्यन्वयः। **चतुष्टयमिति**। इदमाकाशादिप्रत्येकभेदसाधनाभिप्रायेण। **सर्वत्रोपलब्धिप्रसङ्गादिति**। स्पर्शस्येत्यादिः। आकाशादीनां विभुत्वादिति भावः। **प्रत्यक्षः** बहिरिन्द्रियजन्यप्रत्यक्षविषयः ॥ अनुद्भूतस्पर्शाश्रये त्वगिन्द्रिये व्यभिचारवारणाय **प्रत्यक्षेति**। **उपाधित्वादिति**। तथा च हेतावुपाधिव्यभिचारेण साध्यव्यभिचारोन्नयनसंभवात् न प्रत्यक्षत्वसिद्धिरिति भावः। ननु तादृशप्रत्यक्षत्वस्य गुणादावपि सत्वेन तत्रोद्भूतरूपाभावेन साध्याव्यापकत्वात्कथं तस्योपाधित्वमित्यत आह—**यत्रेत्यादिना**। तथा च पक्ष-

## भास्करोदयाख्यव्याख्या.

**इदमाकाशादिप्रत्येकभेदसाधनाभिप्रायेणेति**। चतुष्टयपदस्वारस्यात्प्रत्येकाभिप्रायकमिति भावः। **सर्वत्रोपलब्धिप्रसङ्गादितीति**। अत्रैवमाकाशात्मविभुद्रव्यसमवेतशब्दज्ञानयोर्दण्डादिसंयोगात्ममनःसंयोगजन्यत्वेनैव प्रसिद्धेस्तयोरव्याप्यवृत्तित्ववदस्यापि तथात्वोपगमसंभवेन सर्वत्रानुपलब्धेः। सर्वत्रोपलब्धिप्रसङ्गोक्तिस्तु स्पर्शस्य द्रव्यसंयोगजन्यत्वेन विभुद्रव्यसंयोगस्य सार्वकालिकत्वेन सर्वत्र तत्स्पर्शस्य सर्वत्र सर्वदा भानप्रसङ्ग इत्यर्थिका। अथ पदार्थखण्डनदीधितौ भट्टाचार्याः। स्पर्शोऽपि चाव्याप्यवृत्तिः। अन्यथा सुकुमारकठिनाभ्यामारब्धेऽवयविनि सुकुमारावयवावच्छेदेन त्वक्संयोगे कठिनस्याप्युपलब्धिप्रसङ्ग इति। नचैवमप्यव्याप्यवृत्तिस्पर्शाङ्गीकारेऽपि सुकुमारकठिनारब्धावयविन्युक्तसुकुमारावयवावच्छेद्यत्वक्संयोगे काठिन्योपलब्धिप्रसङ्गरूपदोषो दुर्वार एवेति वाच्यम्। स्पार्शनत्वक्संयोगयोः समानदेशावच्छेदेन कार्यकारणभावाभ्युपगमात्। नचैव व्याप्यवृत्तिनयेऽपि कठिनस्पर्शवत्त्वावच्छिन्नं प्रति कठिनस्पर्शादिमदवयवावच्छेदेन त्वक्संयुक्तसमवायत्वेन त्वक्संयोगस्य हेतुत्वकल्पनान्नानुपपत्तिरिति वाच्यम्। गौरवापत्तेः। व्याप्यवृत्तित्वोपगमवैयर्थ्यापत्तेर्व्याप्यवृत्तेरनवच्छेदकत्वाच्चेत्यास्तां तावत्। एवं पृथिव्यपां गन्धरसयोरव्याप्यवृत्तित्वमन्यथा सुरभ्यसुरभ्यवयवारब्धे घटेऽतिक्तमधुरावयवारब्धे वस्तुनि चैकावच्छेदेनोक्तदिशा तत्प्रत्यक्षापत्तेरवयववृत्तेरेव समुदाये प्रत्ययः। ननु तैश्चित्रगन्धश्चित्ररसश्चोत्पद्यतामितिचेन्न गौरवात्तदनङ्गीकारात्समुदायो निर्गन्धो नीरसश्चेति स्थितम्। **उपाधित्व एवेतीति**। एतदुक्तेरुक्तहेतोर्न प्रत्यक्षानुमापकत्वमेतदाशयादित्याह—**तथाचेति**। **हेतावुपाधिव्यभिचारेणेत्यादि**। उद्भूतरूपवत्त्वरूपोपाधिना प्रत्यक्षस्पर्शाश्रयत्वहेतौ पृथिव्याद्यन्तर्भावेण व्यभिचारेण प्रत्यक्षत्वरूपसाध्यासिद्धिरूपव्यभिचारस्योन्नयनसंभवादित्यर्थः। हेतावुपाधिवैशिष्ट्यं च सामानाधिकरण्यसंबन्धेन। अतोहेतोर्व्याप्यत्वासिद्ध-

सति बहिरिन्द्रियप्रत्यक्षत्वं, तत्र उद्भूतरूपवत्त्वम्' इति घटादौ साध्यव्यापकत्वम्। पक्षे साधनाव्यापकत्वम्॥ न चैवं तप्तवारिस्थतेजसोऽप्यप्रत्यक्षत्वापत्तिः। इष्टत्वात्। तस्मात् रूपरहितत्वात् वायुरप्रत्यक्षः॥ इदानीं कार्यरूपपृथिव्यादिचतुष्टयस्योत्पत्तिविनाशक्रमः कथ्यते॥ ईश्वरस्य चिकीर्षावशात् परमाणुषु क्रिया जायते। ततः परमाणुद्वयसंयोगे सति द्व्यणुकमुत्पद्यते॥ त्रिभिर्द्व्यणुकैः त्र्यणुकम्। एवं चतुरणुकादिक्रमेण महापृथिवी, महत्य आपः, महत् तेजः, महान्वायुः उत्पद्यते॥ एवमुत्पन्नस्य कार्यद्रव्यस्य संजिहीर्षावशात् क्रियया परमाणुद्वयविभागे सति द्व्यणुकस्य नाशः, ततस्त्र्यणुकस्य, ततश्चतुरणुकस्य इत्येवं पृथिव्यादिनाशः। असमवायिकारणनाशाद् द्व्यणुकनाशः। समवायिकारणनाशात् त्र्यणुकनाश इति संप्रदायः॥ सर्वत्र असमवायिकारणनाशाद् द्रव्यनाश इति नवीनाः॥ किं

## नीलकण्ठी.

धर्मावच्छिन्नसाध्यव्यापकोयमुपाधिरिति भावः॥ **एवं** प्रत्यक्षस्पर्शाश्रयस्याप्युद्भूतरूपाभावेन प्रत्यक्षत्वानङ्गीकारे॥ **अप्रत्यक्षत्वापत्तिः**। तत्र उद्भूतरूपाभावादिति भावः॥ इति वायुः॥ * ॥ ननु परमाणुपुञ्जस्यैव घटादिरूपत्वेन अतिरिक्तावयविनोऽसत्त्वात्पृथिव्यादिचतुष्टयस्य नित्यत्वानित्यत्वाभ्यां विभागकथनमनुपपन्नम् इत्याशङ्कां वारयति—**इदानीमिति**॥ पृथिव्यादिचतुष्टयनिरूपणानन्तरमित्यर्थः॥ **द्व्यणुकस्य नाशः** इत्यस्य परमाणुद्वयसंयोगनाशादित्यादिः॥ **सर्वत्रेति**॥ जन्यद्रव्यसामान्य इत्यर्थः॥ सर्वत्र

## भास्करोदयाख्यव्याख्या.

त्वेन हेत्वाभासत्वान्न साध्यसाधकत्वमिति भावः। **पक्षधर्मावच्छिन्नसाध्यव्यापकेत्यादि**। द्रव्यत्वरूपपक्षधर्मावच्छिन्नाधिकरणतानिरूपकाधेयताकप्रत्यक्षत्वस्य साध्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवानयमुद्भूतरूपवत्त्वरूपोपाधिरिति समुदितार्थः। यदाहुर्वायुर्गुरुत्ववानिति तदतीव तुच्छतरम्। तदीयप्रत्ययस्य भ्रमत्वात्। ननु सर्वसाधारणप्रतीतेर्भ्रमत्वकल्पने तवैवं[1] किं न भ्रमत्वमिति चेत्स्वीकुरु गन्धवत्त्वमपि। पार्थिवपरमाणुसंयोगोपाधिक एव गन्धप्रत्यय इति चेत्किं तेऽपराद्धं मया न सहसे गुरुत्वस्य तत्त्वमन्यथा परोक्षज्ञानिनां महर्षीणां तत्तन्निबन्धनवैपरीत्ये मनुतां यथेष्टं वायौ गन्धं गुरुत्वं चन्द्रकिरणरत्नकिरणयोरनौष्ण्यत्वादतेजस्त्वमित्यादि किमनल्पदोषगणनविचारचातुरीविजृम्भणेनेति। पृथिव्यादिविभजनस्य प्रतिज्ञेयत्वेन क्रमप्राप्ताकाशनिरूपणमकृत्वोत्पत्तिविनाशक्रमकथनमसंगतमित्याशङ्कां दूरीकर्तुं शङ्कितुराशयं वर्णयन्मूलमूलमवतारयितुमाशङ्कते—**नन्विति**। **परमाणुपुञ्जस्यैव घटादिरूपत्वेनेति**। अनतिरिक्तावयवित्वे घटादेरप्रत्यक्षापत्तेरतीन्द्रियसमुदायस्यापि प्रत्यक्षानङ्गीकारादित्यादि प्रसिद्धं न्यायसिद्धान्तमुक्तावल्याम्। **नित्यत्वानित्यत्वाभ्यामित्यादि**। परमाणुपुञ्जरूपस्य नित्यत्वेनानित्यत्वाभावाद्वाभ्यां विभागकथनमनुपपन्नमिति भावः। त्र्यणुकादेर्द्व्यणुकत्रयादिसंयुक्तत्वेनासमवायिकारणतत्संयोगनाशप्रयुक्तजन्यद्रव्यनाशसंभवेनानुगतकार्यकारणभावमुपेक्ष्य संप्रदायानुसरणं यथाश्रुतग्राहिप्रतिपन्नपेक्षमे-

१ 'तव प्रतीतेरेव' इति पाठ उचितः।

पुनः परमाणुसद्भावे प्रमाणम् । उच्यते । जालसूर्यमरीचिस्थं सूक्ष्मतमं यद् दृश्यते तत्सावयवं चाक्षुषद्रव्यत्वात् पटवत् ॥ त्र्यणुकावयवोपि सावयवः महदारम्भकत्वात् तन्तुवत् ॥ यो द्व्यणुकावयवः स एव परमाणुः । स च नित्यः । कार्यत्वेऽनवस्थाप्रसङ्गात् । तथा च मेरुसर्षपयोरपि तुल्यपरिमाणापत्तेः ॥ सृष्टिप्रलयसद्भावे 'धाता यथापूर्वमकल्पयत्' इति श्रुतिः प्रमाणम् 'सर्वकार्यद्रव्यध्वंसोऽवान्तरप्रलयः ॥ सर्वभावकार्यध्वंसो महाप्रलयः' इति विवेकः ॥

## नीलकण्ठी.

एकरीतिरेवोचितेति भावः ॥ **चाक्षुषद्रव्यत्वादिति** ॥ चाक्षुषत्वे सति द्रव्यत्वात् इत्यर्थः ॥ रूपादौ आत्मनि च व्यभिचारवारणाय विशेष्यविशेषणे ॥ न चेदमप्रयोजकमिति शङ्क्यम् ॥ चाक्षुषं प्रति कारणस्य महत्त्वस्य त्रुटावपेक्षिततया सावयवत्वं विना अवयवसंख्याजन्यस्य तस्य स्वीकर्तुमशक्यत्वादिति संक्षेपः ॥ यत्किंचिद्द्रव्यध्वंसस्येदानीमपि सत्त्वात्—**सर्वेति** ॥ नित्यद्रव्याणां ध्वंसासंभवात् । **कार्येति** ॥ परमाणुनिष्ठरूपादीनां तदानीमपि सत्त्वात् । **द्रव्येति** ॥ ध्वंसानां ध्वंसासंभवेन महाप्रलयेऽपि सत्त्वात् **भावेतीति** दिक् ॥ इति कार्योत्पत्तिविनाशक्रमः ॥ * ॥ 'शब्दगु-

## भास्करोदयाख्यव्याख्या.

वेत्याशयकनवीनमतौचित्यं दर्शयति—**सर्वत्रैकरीतिरिति** । **तस्येति** महत्त्वस्येत्यर्थः ॥ * ॥ **परमाणुवादारम्भः** ॥ इदं त्वत्रावधेयम् ॥ परमाणुद्व्यणुकयोः स्वीकारे मानाभावः । नचावयवधारायाः क्व विश्रामः त्रुटावेव विश्रामात् । नच द्व्यणुकतदवयवसाधकग्रन्थाः कथं समर्थ्येरन् समवायिसमवायित्वादिभिरनवस्थितपरम्परासिद्धिप्रसङ्गेन तत्सामर्थ्यानवधारणात् । नचाणुव्यवहारस्य स्थूलद्रव्यालम्बनत्वाभावेन तद्भिन्नद्रव्यविषयकत्वमावश्यकमेवं द्व्यणुकमपीति वाच्यम् । तद्व्यवहारस्योत्कृष्टमहत्त्वाश्रयद्रव्यावधिकापकृष्टमहत्त्वाश्रयद्रव्यविषयकत्वेनैवोपपत्तेर्महापण्डितपण्डितवत् ॥ अथ परमाणुद्व्यणुकानङ्गीकारे द्रव्यचाक्षुषे संयोगस्य द्रव्यसमवेतरूपादिचाक्षुषे संयुक्तसमवायस्य च हेतुत्वकल्पनया गौरवम्, तदभ्युपगमे तु समवेतचाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवेतसमवायरूपतृतीयसंनिकर्षेणैव गतार्थत्वात्प्रथमयोर्द्वयोरनावश्यकतया लाघवम्, त्रसरेण्वादिरूपादेश्चक्षुःसंयुक्तपरमाण्वादिसमवेतसमवायेनैव चाक्षुषत्वोपपत्तेः । त्रसरेणुप्रत्यक्षमपि चक्षुःसंयुक्तपरमाणुसमवेतद्व्यणुकसमवायस्य तत्र सत्वेन वोध्यम् । त्रसरेणोर्द्व्यणुकसमवेतत्वादिति चेन्न, अतीन्द्रियघटितसन्निकर्षाद्रूपत्वादिचाक्षुषवारणाय द्रव्यान्यसमवेतचाक्षुषे चक्षुःसंयुक्तसमवेतचाक्षुषवन्निरूपितसमवायत्वेनैव हेतुत्वकल्पनाया आवश्यकत्वादेवं च त्रुटेश्चक्षुःसंयुक्तपरमाणुसमवेतद्व्यणुके चाक्षुषत्वाभावात्तन्निरूपितसमवायत्वेन प्रत्यक्षाप्रसक्त्या संयोगरूपप्रथमसन्निकर्षावश्यकत्वादितिचेदस्तु द्रव्यान्यसमवेतचाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवेतो यश्चाक्षुषविषय-

१. त्रुटिस्त्र्यणुकत्रसरेणुरित्यनर्थान्तरम् ।

**शब्दगुणकमाकाशम् । तच्चैकं विभु नित्यं च ॥**

आकाशं लक्षयति—शब्दगुणकमिति । ननु किं आकाशं पृथिव्यादिवन्नाना ? नेत्याह—तच्चैकमिति ॥ भेदे प्रमाणाभावादित्यर्थः ॥ एकत्वादेव सर्वत्रोपलब्धे-

## नीलकण्ठी.

णकम्' इत्यत्र शब्दवदिति वक्तव्ये तथा कथनम् 'आकाशे शब्द एव विशेषगुणः' इति सूचनाय ॥ घटाकाशो मठाकाश इत्यादिव्यवहारस्योपाधिकृतत्वेनासाधकत्वादाकाशस्यानेकत्वे प्रमाणं नेत्याह—**भेद इति** ॥ **एकत्वादिति** ॥ आकाशस्येत्यादिः॥ नन्वेकत्वेप्यविभुत्वमस्त्वत आह—**सर्वत्रेति** ॥ सर्वदिगवच्छेदेनेत्यर्थः ॥ **परि-**

## भास्करोदयाख्यव्याख्या.

स्तन्निरूपितसमवायत्वेन द्रव्यचाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयोगत्वेन त्रुटेःप्रत्यक्षान्यथानुपपत्त्या प्रथमतृतीयसन्निकर्षावश्यकत्वेऽपि संयुक्तसमवायरूपद्वितीयसन्निकर्षनैष्फल्यं त्रसरेणौ द्रव्यत्वादिचाक्षुषानुरोधेन द्व्यणुकसिद्धेश्चावश्यकत्वमिति चेत्पुनरत्र वदन्ति । द्व्यणुकाभ्युपगमे तद्घटितसन्निकर्षाद्रूपत्वादिचाक्षुषवारणाय चक्षुःसंयुक्तसमवेतसमवायहेतुतायां समवेतांशे चाक्षुषविषयताया निवेशस्यावश्यकतया कारणतावच्छेदकप्रविष्टयोर्मिथोविशेषणविशेष्यभावे विनिगमनाविरहेण कारणताद्वयकल्पनापत्तिरवच्छेदकगौरवं चेति । तस्मात्तयोरङ्गीकारेऽपि न यत्किंचित्सन्निकर्षाकल्पनाप्रयुक्तलाघवमतो द्रव्यान्यस्मिन्वर्तते यस्तद्विषयकचाक्षुषत्वावच्छिन्नं प्रति तृतीयसन्निकर्षसिद्धेर्द्रव्यसमवेतचाक्षुषत्वावच्छिन्नं प्रति द्वितीयसन्निकर्षसिद्धेर्द्रव्यचाक्षुषत्वावच्छिन्नंप्रति प्रथमसन्निकर्षसिद्धेश्च कल्पनं समुचितमेवेति चेद् भवन्मतेऽपि वायुघटितसन्निकर्षात्संयोगत्वसंख्यात्वादिप्रत्यक्षवारणाय चाक्षुषविषयतानिवेशस्यावश्यकतयोक्तसमवेततचाक्षुषत्वयोर्मिथो विशेष्यविशेषणभावविनिगमनाविरहप्रयुक्तकारणताद्वयकल्पनापत्तेर्यश्चोभयोरिति न्यायान्नास्माकमेष दोष इतिचेत्पुनरत्र वदन्ति । वायुघटितसन्निकर्षात्संयोगत्वप्रत्यक्षवारणाय संयुक्तांशे रूपनिवेशेनैव वारणादत एव पाकादिना निरूपघटितसन्निकर्षान्न संयोगत्वसंख्यात्वादिप्रत्यक्षप्रसक्तिरतो न दोष इतिचेत्पुनराक्षिपन्ति । चक्षुरिन्द्रियघटितसन्निकर्षाद्रूपत्वादिचाक्षुषवारणायानुद्भूतरूपाभावादिनिवेशापेक्षया चाक्षुषविषयतावश्यकत्वादिति चेदनुद्भूतरूपस्य दीधितिकृतैव निरसितत्वान्न दोष इत्याहुरित्यलं पल्लवितेनाधिकं त्वन्यत्रानुसन्धेयम् ॥ **परमाणुवादः समाप्तः** ॥ * ॥ इदानीं मूलमूलस्थं मूलेनाविवृतं क्वचिदुपकाराय व्याकर्ता शब्दस्य गुणत्वेन गुणपदस्याव्यावर्तकतया तस्य वैफल्यमाशङ्क्य गोबलीवर्दन्यायेन शब्दरूपविशेषगुणबोधकतया शब्दगुणकपदं व्याकरोति—**शब्देत्यादिना** । सर्वत्र शब्दोपलब्धेरिति हेत्वन्तरं सार्थकयितुमाशङ्कते—**नन्विति** । **एकत्वेऽपीत्यादि** । एकत्वमात्रं न विभुत्वप्रयोजकं जातेस्तदभावादिति भावः । ननु तावतैवालं किंपूर्वेणेति चेन्न । धूलीपटलस्थपरमा-

---

१ यश्चोभयोः समो दोषः परिहारस्तयोः समः ।

विभुत्वमङ्गीकर्तव्यमित्याह—विभ्विति ॥ सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम् । मूर्तत्वम् परिच्छिन्नपरिमाणवत्त्वं क्रियावत्त्वं वा ॥ विभुत्वादेव आत्मवत् नित्यत्वमित्याह—नित्यं चेति ॥

**अतीतादिव्यवहारहेतुः कालः । सचैको विभुर्नित्यश्च ॥**

---

## नीलकण्ठी.

**च्छिन्नपरिमाणवत्त्वमिति** ॥ यदि 'परिच्छिन्नत्वस्यापकर्षाश्रयत्वात्मकतया परमाणोरणुतरत्वेन द्व्यणुकपरिमाणापेक्षया परमाणुपरिमाणस्यापकृष्टत्वाभावात् परमाणुष्वव्याप्तमिदं लक्षणम्' इत्युच्यते तदाप्याह—**क्रियावत्त्वमिति** ॥ वस्तुतस्तु 'लाघवमेवोत्तरकल्पनानुसरणबीजम्' इति ध्येयम् ॥ इत्याकाशम् ॥ * ॥ **'अतीतादिव्यवहारहेतुः कालः'** इति मूले आदिना अनागतादिपरिग्रहः । **अतीतत्वं** वर्तमान-

## भास्करोदयाख्यव्याख्या.

त्वादीनां सर्वदिगवच्छेदेनोपलब्धेस्तन्निरासाय तत् अमूर्तत्वे सतीत्यर्थतात्पर्यग्राहकम् । परमाणूनामनेकत्वाच्च तद्व्यावृत्तिः । क्रियावत्त्वरूपलक्षणान्तरानुसरणबीजं वर्णयति—**यदीत्यादिना । अपकृष्टत्वाभावादिति** । अपि तूत्कृष्टत्वादित्यर्थः । द्व्यणुकपरिमाणस्याणुद्वयपरिमाणत्वेनैकाणुपरिमाणस्य ततोऽपकर्षाश्रयत्वादव्याप्तिं मनसिकृत्याह—**वस्तुतस्त्विति । लाघवमेवेति** । परिच्छिन्नपरिमाणस्य विशेषणविशिष्टस्य लक्षणकरणापेक्षया केवलस्य क्रियामात्रस्य लक्षणे लघुत्वाल्लक्षणान्तरानुसरणमिति भावः । **इदंत्वत्रावधेयम्** । शब्दसमवायिकारणमाकाशमतिरिक्तद्रव्यमङ्गीकर्तृजीर्णमतमसहिष्णुर्नैयायिकशिरोमणिर्निमित्तकारणत्वेन क्लृप्तेश्वरस्यैतत्समवायिकारणत्वमात्रकल्पनेनातिरिक्तद्रव्यान्तरविरहप्रयुक्तलाघवमनुसंदधाति । ननु जीवानां तत्त्वापादनेन विनिगमनाविरह इति चेन्न । जीवानां नानात्वस्यैव विनिगमकत्वात् । नच जीवानां प्रत्येकव्यक्तिमादाय विनिगमनाविरहः दुष्परिहर एवेति वाच्यम् । सुखादीनामिव शब्दस्यापि स्वात्मसमवायित्वादहं सुखादिमानितिवदहं शब्दवानिति प्रतीत्यापत्तेरेव विनिगमकसद्भावात् । नच तदनभ्युपगमे भूतपञ्चकत्वानुपपत्तिः । यो भूतत्वेन व्यवहारविषय आकाशनामा स ईश्वर एव नातिरिक्तः । आकाशत्वेन नाकाशनामाङ्गीक्रियत इत्याशयात् । नन्वेवमपि शब्दो गुणः क्वचिदाश्रितो गुणत्वाद्रूपवत् इत्यनुमानेनैवेतरबाधेनाकाशवदीश्वरसिद्धौ अनुमानान्तरानुसरणं व्यर्थमेवेति चेन्न । नासूया कर्तव्या यावताप्रमाणेनेष्टसिद्धिस्तावन्ति प्रमाणानि प्रयोक्तव्यानीत्यभ्युपगमात् । अथ कार्यमात्रं प्रतीश्वरस्य समवायिकारणत्वापत्त्या समवायिकारणनाशाद्द्रव्यनाश इति मते तन्नाशानापत्तिः । आकाशस्वीकर्तृभिः समवायिकारणनाशाद्द्रव्यनाशस्यैवेदानीमप्यङ्गीकारेण वारणीयत्वात् । नच संस्कारादीनामिव शब्दस्यापि मनसोऽयोग्यतया न मानसापत्तिरिति वाच्यम् । सामग्रीसत्वे कार्यावश्यंभावात् संस्का-

---

१ तन्नाशाभावाद्द्रव्यनाशानापत्तिरिति भावः ।

कालं लक्षयति ॥ अतीतेति ॥ सर्वाधारः कालः सर्वकार्ये निमित्तकारणं च ॥

**प्राच्यादिव्यवहारहेतुर्दिक् ॥ सा चैका विभ्वी नित्या च ॥**

दिशो लक्षणमाह ॥ प्राचीति ॥ दिगपि कार्यमात्रे निमित्तकारणम् ॥

## नीलकण्ठी.

ध्वंसप्रतियोगित्वम् ॥ **वर्तमानत्वम्** इह शब्दप्रयोगाधिकरणकालवृत्तित्वम् ॥ **भविष्यत्त्वं** च वर्तमानप्रागभावप्रतियोगित्वम् ॥ अत्र सर्वत्र कालस्य घटकतया शब्दप्रयोगरूपातीतादिव्यवहारहेतुत्वं तस्येति बोध्यम् ॥ न च तादृशव्यवहारः सूर्यपरिस्पन्दादिरूपोपाधिमादायापि संभवतीति वाच्यम् ॥ अनुगतव्यवहारस्यानुगतविषयं विनाऽसंभवेनातिरिक्तकालस्वीकारादिति दिक् ॥ **सर्वाधार इति** ॥ 'कालिकसबन्धेन' इत्यादिः ॥ अत्र विभिन्नकालिकयोराधाराधेयभावविरहात् क्रियादेः सर्वाधारत्वशङ्कैव नावतरतीति भावः ॥ इति कालः ॥ * ॥ **प्राच्यादिव्यवहारहेतु-**

## भास्करोदयाख्यव्याख्या.

रादीनामनायत्त्या तादात्म्यप्रत्यासत्त्या प्रत्यक्षं प्रति प्रतिवन्धकत्वाभ्युपगमात् । तद्वच्छेदस्य प्रतिवन्धकत्वकल्पने तु तत्कल्पनागौरवमेव विनिगमकमित्याशयात्, ईश्वर एवैतदाश्रय इति निरुपमम् । अत्र संस्कारादीनामात्मसमवेतत्वेनात्ममानसवारणायात्मसमवेतगुणमानसत्वावच्छिन्नं प्रति विजातीयगुणत्वेन हेतुत्वमुत प्रतिवन्धकत्वमिति विनिगमनाविरहेऽपि कतिपयगुणानामेव मानसापत्तिवारणाय वैजात्यकल्पनाधिक्यादपि न जीवात्मसमवेतत्वमपि तु परमात्मसमवेतत्वमेव युक्तमिति स्थितम् । **परेतु** भेर्यादीनामेव गुणः शब्दः भेर्यां शब्द इति प्रतीतिवलादवच्छेदकत्वाख्यस्वरूपसंवन्धस्यासत्वादवच्छेदकतासंवधेन भेर्यां शब्दोत्पत्तौ भेरीदंडसंयोगादीनां हेतुत्वाभ्युपगमादिति वदन्ति ॥ **केचित्तु** शब्दोऽसमवेत एव भेर्यां अवच्छेदकत्वमात्रं भावकार्यस्य समवेतत्वनियमे मानाभावादिति वदन्तीत्यलं पल्लवितेन ॥ उपकाराय मूलमूलं विवृणोति— **मूलेति** । अतीतत्वादिकमिह द्विविधं कालगतं कालवृत्तिगतं च । प्रकृते तु न कालगतातीतत्वादिकं लक्ष्यम् । अन्यथा कालस्य घटकतयेत्युक्तिरसंगता स्यादिति भावः । घटादिगतं वर्तमानत्वं परिष्करोति—**वर्तमानत्वमित्यादिना** । शब्दप्रयोगाधिकरणकालेनाम इह घटोऽस्तीत्यादिरूपो यः शब्दप्रयोगस्तदधिकरणः यः काल इत्यर्थः । इहत्वस्य वर्तमानकालवाचकत्वात्प्रारब्धापरिसमाप्तक्रियाश्रयत्वं तत्त्वमिति केचित् । करोमीत्येतादृशविषयताशालिज्ञानाश्रयत्वमित्यन्ये । व्यवहारस्य भिन्नभिन्नत्त्वेन भेदाच्चोपाधिः सूर्यपरिस्पन्द एवाङ्गीक्रियतां, यथैतत्सूर्यस्पन्दसंबद्धोऽयं घटो वर्तमानः । एवं पूर्वोत्तरसूर्यस्पन्दसंवद्धत्वेनातीतानागतत्वव्यवहारे किं कालकल्पनयेत्याशङ्क्यानुगतव्यहारस्येति समाहितम् । **तस्यायमर्थः** । सूर्यस्पन्दानामविशेषेणोपलब्धेरनुगतोपाधित्वासंभवात्कालस्वीकारे तेषामनुगतोपाधिकत्वेऽपि कालोपाधिकत्वेनैव व्यवहारोपपत्तौ व्यवहारे तेषामप्युपाधित्वे मानाभाव इति । **दिगर्थस्तु** घटादीनां सूर्यस्पन्दसंवन्धो न संयोग-

**ज्ञानाधिकरणमात्मा ॥ स द्विविधः-परमात्मा जीवात्मा चेति ॥ तत्रेश्वरः सर्वज्ञः परमात्मैक एव ॥ जीवात्मा प्रतिशरीरं भिन्नो विभुर्नित्यश्च ॥**

---

## नीलकण्ठी.

**रिति** मूले आदिना प्रतीच्यादिपरिग्रहः ॥ उदयाचलसंनिहितमूर्तावच्छिन्ना दिक् **प्राची** । तद्व्यवहितमूर्तावच्छिन्ना च **प्रतीची** । मेरुसन्निहितमूर्तावच्छिन्ना दिक् **उदीची** । तद्व्यवहितमूर्तावच्छिन्ना तु **दक्षिणा** ॥ इति दिक् ॥ * ॥

## भास्करोदयाख्यव्याख्या.

समवयादिरिति काल एव संवन्धघटकः कल्पनीय इति । ननु सर्वाधारत्वं सूर्यस्पन्दानामेवास्त्विति चेदाह—**अत्रेत्यादि** । अत्र शास्त्रे । विभिन्नकालिकयोराधाराधेयभावविरहादित्यादेः समुदितस्यायमर्थः । कालस्याखण्डस्य विभिन्नभूतभविष्यद्वर्तमानसर्वाधारत्वसंभवेऽपि सूर्यस्पन्दानां सखण्डत्वेन तेषांतेषांतत्तदाधारत्वेऽपि न सर्वाधारत्वप्रसक्तिःकदाऽपीति । उपकारायैव विवृणोति—**मूलेति** । उदयाचलसन्निहितादिगित्येव वक्तव्ये मूर्तावच्छिन्नत्वविशेषणदानस्येदंवीजंवोध्यम् । प्रयागात्काशी पूर्वा प्रयागश्च मथुरातः पूर्व इत्येवं तत्तत्पाश्चातिकदेशनिरूपितपूर्वत्वस्य तत्र तत्र व्यवहारविषयत्वेन प्रयागादावुदयाचलासन्निहितदिगुपाधिकत्वात्पूर्वत्वव्यवहारानुपपत्त्या यदपेक्षयोदयगिरिसन्निहितं मूर्तं तदवधिनामा ततः प्राचीत्यर्थं आवश्यकः । एवं च प्रयागापेक्षयोदयगिरिसन्निहितं मूर्तं तद्वृत्तिः काशीति प्रयागावधिकपूर्वत्वविशिष्टा काशीत्युच्यते । एवं मथुरातः पूर्वः प्रयाग इत्यत्रापि वोध्यम् । उदयगिरिसन्निहितत्वं च मूर्तौ तदसंयुक्तसंयोगापेक्षयाल्पतरोदयगिरिसंयुक्तसंयोगवत्त्वं, तथाच प्रयागात्काशी पूर्वेत्यत्र प्रयागनिष्ठोदयगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्याप्यसंख्यापर्याप्ताधिकरणोदयगिरिसंयुक्तसंयोगवन्मूर्तवृत्तिः काशीति वोधः । एवं काशीतः प्रतीच्यां प्रयाग इत्यत्र काशीनिष्ठोदयगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्यापकसंख्यापर्याप्त्यधिकरणोदयगिरिसंयुक्तसंयोगवन्मूर्तवृत्तिः प्रयाग इति वोधः । एवंरीत्या तत्तत्प्राचीप्र तीचीव्यवहारोपपत्तिः । द्वयोर्भ्रात्रोः कूलयोश्च द्वयोरन्यतरपूर्वापरव्यवहारासाधारणकारणतया कालदिशोः सिद्धिरास्थेया, इदं त्वत्रावधेयम् । दिक्कालौ नेश्वरादतिरिच्येते मानाभावात् । अथेश्वरस्य विभुत्वादेकत्वाच्चेदानीं घटस्तदानीं घटः पूर्वस्यां प्रतीच्यां घट इति भेदव्यवहारानुपपत्तिरितिं चेन्न । परेषां नये कालदिशोरेकत्वेऽपि यदुपाधिभेदाद्भिन्नभिन्नव्यवहारास्तत्तदुपाधिभेदेनेश्वरभेदकल्पनयास्माकमपि भिन्नभिन्नव्यवहारसंभवः ॥ **केचित्तु** जीवस्वरूपत्वं तयोरुतेश्वरस्वरूपत्वमिति विनिगमनाविरहादतिरिक्तैव तयोरिति वदन्ति । तदतिस्थवीयः । कालस्य सर्वाधारत्वनियमो हीश्वरस्य तत्त्वे उपपद्यते जीवस्य तत्त्वे परिच्छिन्नत्वान्नोपपद्येतेत्यादिकं वहुतरमूहनीयम् । उपकाराय मूलमूलं विवृणोति-**ज्ञानाधिकरणमिति** । विष-

आत्मनो लक्षणमाह—ज्ञानेति । आत्मानं विभजते—स द्विविध इति ॥ परमात्मनो लक्षणमाह—तत्रेति ॥ नित्यज्ञानाधिकरणत्वं ईश्वरत्वम्॥नन्वीश्वरस्य सद्भावे-

## नीलकण्ठी.

**ज्ञानाधिकरणमिति** ॥ समवायेन ज्ञानवदित्यर्थः ॥ **तत्र** तयोर्मध्ये ॥ दीपिकायाम् **नित्यज्ञानाधिकरणत्वमिति** ॥ न च 'नित्यं ज्ञानमानन्दं ब्रह्म' इति श्रुत्या विरोध इति वाच्यम् ॥ आनन्दपदस्यानन्दवदर्थकताया इव विज्ञानपदस्यापि विज्ञानवदर्थकतायाः स्वीकारेणाविरोधात् ॥ नचानन्दस्यैव तादृशार्थकत्वमसिद्धमिति वाच्यम् । अर्शआद्यजन्तत्वाङ्गीकारेण तादृशार्थसिद्धेः ॥ अन्यथा नपुंसकत्वानुपपत्तेः ॥ अत्रानन्दो भारापगमे 'सुखी संवृत्तोऽहम्' इतिवद् दुःखाभावे उपचर्यते ॥

## भास्करोदयाख्यव्याख्या.

यतासंबन्धेन विषयस्यापि तत्त्वादाह—**समवायेन ज्ञानवदित्यर्थ इति** । सप्तम्यास्त्रलो विधानादेकवचनवहुवचनार्थव्यावृत्तये द्विवचनार्थत्वेन व्याकरोति—**तयोर्मध्ये इति** । यद्यपि पूर्वं द्विधैव विभजनाद्विभक्तयोर्द्वयोरेवतच्छब्दपरामृश्यमाणत्वेनासंदेहस्तथापि स्पष्टप्रतिपत्तये एतद्व्याख्यानं बोध्यम् ॥ मूलमूलमुपकाराय व्याकर्ताऽसंदेहाय मूलेत्युक्त्वा पुरा व्याकरोति स्म । इदानीं तु तदनुक्त्वैव व्याकरणाद्दीपिकायां पाठभ्रमः स्यादिति अर्वाचीनस्य मूलमूलत्वं बोधयितुमाह—**दीपिकायां नित्यज्ञानाधिकरणत्वमितीति** ॥ अथेदानीं वेदान्तिनये ब्रह्मणो विज्ञानाश्रयत्वे निर्गुणत्वबोधकवादविरोधाद्विज्ञानस्वरूपत्वं सिद्धान्तितं कथंतद्वत्त्वमिति, नच निर्गुणवादानां प्राकृतहेयगुणनिषेधविषयत्वेन सङ्गमनान्न दोष इति वाच्यम् । तेषां सामान्याभावबोधकत्वे प्रमाणानामसति बाधके सामान्ये पक्षपातन्यायादर्धजरतीयस्यानौचित्यादिति चेन्न । कालिकाव्याप्यवृत्तिगुणशून्यत्वबोधपरत्वाङ्गीकारादत एवानुपदं वक्ष्यमाणं नित्यसुखाश्रयत्वरूपं नव्यमतसिद्धलक्षणं सङ्गच्छते । नन्वेवं सति ईश्वरीयचिकीर्षाया अपि नित्यत्वाज्जगतो विलोपानापत्तिरिति चेन्न । तस्याः प्राण्यदृष्टोपाधिकत्वेन तदुपपत्तेः । तथा सति कालिकाव्याप्यवृत्तित्वप्रसङ्ग इति चेदनौपाधिककालिकाव्याप्यवृत्तित्वशून्यत्वस्याभिमतत्वेनादोष इत्यलमतिविस्तरेण । **अन्यथेति** । अर्शादिगणपाठेनार्शआदिभ्योऽजिति मत्वर्थीयाजनङ्गीकारे इत्यर्थः । **नपुंसकत्वानुपपत्तेरिति** । अयंभावः । आनन्दशब्दस्य नित्यपुंस्त्वाद्विशेष्यनिघ्नत्वाभावान्मत्वर्थीयत्वे विशेष्यीभूतनपुंसकलिङ्गकब्रह्मबोधकत्वान्नसिध्यतीतिपुंसकलिङ्गत्वमपि—**अत्रेति** । **अत्र** ब्रह्मणि । आनन्दस्य दुःखासम्भिन्नत्वबोधनायाह—**भारापगम इत्यादि** ॥ यथा दुःखहेतुभारोपाध्यपगमप्रयुक्तयथास्थितसुखावस्थानं तद्वदानन्दोऽत्र दुःखाभावबोधक उपचारात् । ननूक्तदृष्टान्तेन जीववदौपाधिकदुःखित्वं ब्रह्मणः स्यादिति चेन्न, अदृष्टरूपकारणाभावाद्दृष्टान्तप्रदर्शनं ब्रह्मणि न दुःखस्यौपाधिकत्वबोधनाय किंतु सुखस्य नित्यत्वबोधनायैवेति तत्त्वम् ॥ नवीनमतमुपन्यस्यति—

१ व्याख्यानात् ।

किं प्रमाणं न तावत् प्रत्यक्षम् । तद्धि वाह्यं आभ्यन्तरं वा । नाद्यः, अरूपिद्रव्य-

## नीलकण्ठी.

नवीनास्तु नित्यसुखमीश्वरस्याङ्गीकुर्वन्तीत्यलमधिकजल्पनेन ॥ अरूपिद्रव्यत्वा-

## भास्करोदयाख्यव्याख्या.

नवीनास्त्विवति । नित्यसुखाश्रयत्वमीश्वरस्याङ्गीकुर्वन्तीति । अङ्गीकृत्य तद्रूपमेवेश्वरस्य लक्षणं कुर्वन्तीत्यर्थः । अत्र नित्येत्यव्यावर्तकम् । उक्तयुक्तेरदृष्टाभावाच्च श्रुतौ तदघटितत्वाचेति संक्षेपः ॥ दीपिकायां प्रत्यक्षप्रमाणातिरिक्तप्रमाणशून्यवादी लोकायतः शङ्कते—नन्वीश्वरसद्भावे किं प्रमाणमिति । एष एवमत्र प्रष्टव्यः । प्रथममिदं ते वाक्यं प्रमाणमप्रमाणं वेति । नाद्यः प्रतिज्ञाहानेः । न द्वितीयः निग्रहस्थानत्वेनास्माकमेव विजयोत्पत्तेरित्यादिकमस्मदीयराधामाधवविलासाख्यशृङ्गारप्रबन्धे लोकायतमतप्रस्तावखण्डनेऽधिकजिज्ञासुभिर्द्रष्टव्यम् ॥ किंच किंप्रमाणमिति ते प्रश्नवाक्यस्थकिंशब्दस्याक्षेपार्थकत्वं कुत्सितार्थकत्वं विकल्पार्थकत्वं प्रश्नार्थकत्वं वा अन्यतमार्थकत्वमवलम्ब्य भवाञ्छङ्केत तदेव न संभवति । तथाहि आक्षेपो नाम निषेधः तत्र किंशब्दस्य शक्तिः अत एवास्तिप्रमाणमिति निषेधप्रतिप्रसवे सदुत्तरं प्रयुज्यते समभिव्याहृतपदोपस्थाप्यतावच्छेदकप्रतिवादितात्पर्यविषयात्मोपलक्षितधर्मावच्छिन्नस्योद्देश्यतयोपस्थितिः प्रवृत्तिनिमित्तम् । एवं चेश्वरसद्भावे किंप्रमाणमित्यतः प्रमाणत्वावच्छिन्नोद्देश्यतानिरूपितविधेयतावान्निषेध इति बोधः । एवं च वचनमात्रेण कार्यसिद्धेर्हेत्वादिकं वक्तव्यं तदुक्तौ चानुमानं प्रमाणान्तरं स्वीकृतं भवतीति परस्पराश्रयविरोधस्य दुष्परिहरत्वं दोषः । अत एव न द्वितीयोऽपि कुत्सा निन्दा तत्र किंशब्दस्य शक्तिः प्रवृत्तिनिमित्तं च समभिव्याहृतपदोपस्थाप्यतावच्छेदकप्रतिवादितात्पर्योपलक्षितधर्मावच्छिन्नोद्देश्यतयोपस्थितिः पूर्ववत् । बोधश्च किं प्रमाणमित्यतः प्रमाणत्वावच्छिन्नोद्देश्यतानिरूपितविधेयतावती निन्देति । अत्रापि वचनमात्रात्तदसिद्धेर्हेत्वाद्युपन्यासे पुरोक्तमनुसर्तव्यम् । नापि वितर्कार्थस्तृतीयोऽपि वितर्को नाम पक्षद्वयकोटिकः संशयः । तत्र च किंशब्दस्य शक्तिः । अन्यत्सर्वं पूर्ववत् । अतोऽत्र पक्षान्तरं वक्तव्यम् । ईश्वरसद्भावे किंप्रमाणमुतान्यदिति । तदनुक्त्वा च न्यूनत्वात् । नापि प्रश्नार्थकश्चतुर्थोऽपि । किंशब्दस्य जिज्ञासिते शक्तिः । अत एव स्वीयजिज्ञासाज्ञापनार्थं किंशब्दघटितं प्रश्नवाक्यं प्रयुज्यते । तत्रोद्देश्यवाचककिंशब्दस्य समभिव्याहृतपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितो धर्मः प्रवृत्तिनिमित्तम् । एवं च कः पचतीत्यतः पाककृतित्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन जिज्ञासितो यो धर्मस्तद्वान्पचतीत्याकारकोऽन्वयबोधः । प्रकृतेऽपीश्वरसद्भावे किंप्रमाणमित्यतः प्रमाणत्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन जिज्ञासितो यो धर्मस्तद्वत्प्रमाणमित्यन्वयबोधो बोध्यः ॥ सा च प्रमाणपदसमभिव्याहारात्प्रमाणविषयिणी प्रतीयते । सा च ज्ञातुमिच्छा । सा च नाज्ञाते भवत्यतिप्रसङ्गात् । तस्मादीश्वरविषयं प्रमाणं ज्ञातुमिच्छतां तत्र स्वज्ञानमिच्छा-

त्वात् । नान्त्यः आत्मसुखादिव्यतिरिक्तत्वात् । नाप्यनुमानम् लिङ्गाभावात् । नाप्यागमः तथाविधागमाभावात् इति चेत् । न ॥ 'क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वात् घटवत्'इत्यनुमानस्य प्रमाणत्वात् ॥ उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वम् ॥ उपादानं समवायिकारणम् ॥ सकलपरमाण्वादिसूक्ष्मदर्शित्वात् सर्वज्ञत्वम् ॥ 'यः सर्वज्ञः स सर्ववित्' इत्यागमोऽपि प्रमाणम् ॥ जीवस्य लक्षणमाह—

---

## नीलकण्ठी.

**दिति** ॥ बाह्यप्रत्यक्षं प्रति उद्भूतरूपस्य हेतुत्वादिति भावः ॥ **आत्मसुखादिव्यतिरिक्तेति** ॥ विजातीयात्ममनःसंयोगादिरूपस्य मानसप्रत्यक्षहेतोरीश्वरेऽभावादिति भावः ॥ **प्रमाणत्वादिति** ॥ नचेदमप्रयोजकमिति शङ्क्यम् । कार्यत्वावच्छिन्नं प्रति कृतित्वावच्छिन्नस्य हेतुत्वेनाप्रयोजकत्वाभावादिति दिक् ॥ **उपादानगोचरेति** ॥ यद्यपि कर्तृत्वं कृतिमत्त्वमेव संभवति ॥ तथाप्यपरोक्षज्ञानादेश्चिकीर्षादिकं प्रति कारणत्वप्रदर्शनाय तथोक्तिरित्यवधेयम् ॥ **सर्वविदिति** ॥ विदधात्वर्थो

## भास्करोदयाख्यव्याख्या.

कारणीभूतं वक्तव्यं तदतथाभूतार्थं तथाभूतार्थं वा स्यात् । यथार्थं चेत्तेनैव स्वकीयो विषयः प्रमाणमुपस्थाप्यते । विषये प्रमाणप्रवृत्तिमन्तरेण तदीययथार्थत्वस्य वक्तुमशक्यत्वात्तेन प्रमाणेन स्वगोचर ईश्वरसद्भाव उपस्थाप्यते इत्यनायासेन सिद्धोऽस्माकमीश्वरसिद्धिमनोरथः । अथायथार्थं तत् तस्मिन्नयथार्थज्ञानविषये यद्ययथार्थमेव ज्ञानमुत्पादनीयमिति भवतः पृच्छतो वाञ्छितं तदा केयं स्वाधीनेऽर्थे परापेक्षा भवानेवायथार्थज्ञानकुशलो यथैकमिथ्याज्ञानमजीजनत्तथापरमप्युपादयतु । वयं पुनर्यथार्थज्ञानस्योत्पादयितारो मिथ्याज्ञाने सर्वत्रैवाकृतिनः किमिह नियुञ्ज्महेऽतस्ते ईश्वरसद्भावविषयकप्रमाणविषयकप्रश्न एवानर्थकः । अथ मन्यसे किमिह प्रमाणमिति पृच्छतोऽयमभिप्रायः । अत्रार्थेऽनुमानं प्रमाणमितरद्वेति । तदेवावधेह्युत्तरमस्माकमित्याहाङ्कुरादिकमित्यनुमानमीश्वरसद्भावगोचरं प्रमाणमिति ॥ **अरूपिद्रव्यत्वादितीति** । रूपिद्रव्यस्यैव प्रत्यक्षविषयत्वनियमाङ्गीकारेणाकाशवन्न ग्राह्यप्रत्यक्षमित्यर्थः । तथाच परमाणोः प्रत्यक्षापत्तिः रूपिद्रव्यत्वादिति मनसि कृत्वाह—**बाह्यप्रत्यक्षेत्यादि** । **विजातीयेत्यादि** । स्वसमवायिसमवेतत्वरूपवैजात्यावच्छिन्नसंबन्धाधिकरणत्वस्य सुखादाविवात्मन्यभावादित्यर्थः । कार्यत्वमस्त्वङ्कुरादौ कर्तृजन्यत्वं मास्त्वित्येवमप्रयोजकत्वशङ्कानिवर्तकमत्र तर्कं कार्यत्वेन कर्तृत्वेनासावीश्वरमनुममौ तत्कथमस्मत्कर्तृत्वस्यैव सहकारिकारणसमवधानासत्तिसिद्धेः तत्सिद्धिरिति चेदस्मस्थमैक्यादिरूपकार्यकृतेस्तदितरासंभवेन तत्सिद्धिरिति हृदयम् ॥ **दीपिकायामुपादानगोचरेत्यादि** । अयंभावः । ज्ञायमानस्यैव कारणस्य कार्ये हेतुत्वमसता कारणेन कार्यानुत्पत्तेरङ्कुरादिरूपकार्यमात्रकारणभूतपरमाणुज्ञानजन्यचिकीर्षया कार्यमात्रोत्पादकत्वादीश्वरस्येत्येवमाशयेनैतावद्घटितं कर्तृत्वलक्षणमावश्यकमिति । सर्ववित्त्वमपि सर्वमिति सर्वसामान्यविषयकत्वेनास्मदादीना-

जीवेति ॥ सुखादिकं जीवलक्षणम् ॥ ननु 'मनुष्योऽहं ब्राह्मणोऽहम्' इत्यादौ सर्वत्राहंप्रत्यये शरीरस्यैव विषयत्वाच्छरीरमेवात्मेति चेत् ॥ न ॥ शरीरस्य करपादादिनाशे शरीरनाशादात्मनोऽपि नाशापत्तेः ॥ नापि इन्द्रियाणामात्मत्वम् । तथात्वे'योऽहं घटमद्राक्षं सोऽहम् इदानीं स्पृशामि' इत्यनुसन्धानाभावप्रसङ्गात् ॥ अन्यानुभूतेऽ-

## नीलकण्ठी.

विशेषरूपेण ज्ञानम् ॥ **लक्षणमाहेति** । स्वरूपमाहेत्यर्थः ॥ मूले **जीवः प्रतिशरीरं भिन्न इति** ॥ न च अवयवोपचयापचयाभ्यां तत्तच्चैत्रादिशरीराणां विभिन्नत्वेऽपि जीवभेदाभावादिदमसंगतम् । एवं कायव्यूहस्थलेऽपीति वाच्यम् ॥ समानकालिकयोगजधर्मजन्यशरीरभेदस्यैव विवक्षितत्वेनादोषात् । एवं चैतच्छरीरावच्छिन्नभोगवान् समानकालिकयोगाद्यजन्यशरीरावच्छिन्नभोगवद्भिन्न इति रीत्या प्रतिशरीरं जीवभेदः साध्य इत्यलम् ॥ **शरीरस्यैवेति** ॥ अन्यथा मनुष्यत्वादीनां शरीरधर्मत्वेन तथा प्रत्ययस्यैवासंगतिरित्यभिमानः ॥ **नाशापत्तेरिति** ॥ समवायिकारणनाशस्य द्रव्यनाशकत्वादिति भावः ॥ **योऽहमिति** ॥ भूतकालिकदर्शनवति

## भास्करोदयाख्यव्याख्या.

मपि संभवतीत्यतो विशेषरूपेण ज्ञानार्थकत्वं विदेरङ्गीकरोति—**विदेत्यादिना** । **लक्षणमाहेतीति** । गौरवात्तत्तच्छरीरावच्छिन्नाकाशेऽतिप्रसक्तेश्चातः स्वरूपमाहेत्यर्थ इति । उपकाराय मूलमूलं विवृणोति—**मूले जीवः प्रतिशरीरं भिन्न इतीति** । जीवस्य प्रतिशरीरभेदवत्त्वं स्वरूपं न संभवतीत्याशङ्कते—**नचेति** । समाधत्ते—**समानकालिकेत्यादि** । समानकालिकश्च योगजधर्मजन्यश्च यः शरीरभेदस्तेनेत्यर्थः । अवयवोपचयापचयाभ्यां शरीरभेदो हि न समानकालिकोऽपि तु विभिन्नकालिकः । अत्र समानकालिकत्वंच शरीरभेदे स्वाधिकरणक्षणप्रतियोगिकभेदाधिकरणक्षणावृत्तिकत्वमेतत्फलितलक्षणं निष्कृष्य वदति—**एवं चैतदित्यादि** । शङ्कग्राहिकया चैत्रशरीरावच्छिन्नभोगवाञ्जीवः समानकालिकयोगाद्यजन्यं यदन्यं मैत्रशरीरं तदवच्छिन्नभोगवान्यो जीवस्तद्भिन्न इति रीत्या प्रकारेण प्रतिशरीरं यज्ञमित्रादिशरीरं शरीरं प्रति जीवभेदः । व्यापकत्वं द्वितीयार्थः । तत्तच्छरीरव्यापकत्वेन जीवभेदः साध्यः तत्तत्सुखाद्युपलब्धिसाधनमनोभेदादिति हेतुना सिद्धिविषयः कर्तव्य इति शेष इत्यक्षरार्थः ॥ दीपिकायां शरीरात्मवादी चार्वाकः शङ्कते—**नन्विति** स्वोच्चारयितर्यस्मदः शक्तेरुच्चारयितृत्वस्यात्मवृत्तित्वान्मनुष्यत्वब्राह्मणत्वयोः शरीरवृत्तिधर्मत्वात्तत्सामानाधिकरण्यप्रतीतिरस्मन्मते शरीरवृत्तिधर्मारोपेणैव निर्वाच्यैवमेतन्मतेऽस्मच्छक्यार्थोच्चारयितृत्वस्य शरीरारोपेऽपि सम्भवति तुल्ययुक्त्या साधु निर्वचनम् । तथापि नायं चार्वाकः शरीरेऽहंशब्दस्य प्रयोगस्य भाक्तत्वमिच्छत्यतिरिक्तात्मानङ्गीकारात्, तदाह—**शरीरस्यात्मत्व इति** । **करपादादिनाशेत्यादि** । तूष्णीं शरीरनाशेत्येव वक्तव्ये करपादादिनाशेत्युक्तिः शरीरस्य करपादाद्यवयवविशिष्टस्यैव शरीरत्वाश्रयत्वबोधिका ॥ शरीरस्यात्मत्वेऽधिकदोषगणनमन्यत्रानुसन्धेयम् ॥ इन्द्रियाणामात्मत्वं निरस्यति दीपिकायां **नापीति** । तत्तज्ज्ञानाश्रयत्ववदात्मनस्तत्तदिन्द्रियरूपत्वेन भेदात्सामानाधिकरण्यासंभवा-

न्यस्यानुसंधानायोगात् । तस्माद्देहेन्द्रियव्यतिरिक्तो जीवः सुखादिवैचित्र्यात् प्रतिशरीरं भिन्नः । स च न परमाणुपरिमाणः शरीरव्यापिसुखाद्यनुपलब्धिप्रसङ्गात् । न मध्यमपरिमाणः तथा सति अनित्यत्वप्रसङ्गेन कृतहानाकृताभ्यागमप्रसङ्गात् । तस्मान्नित्यो विभुर्जीवः ॥

**सुखाद्युपलब्धिसाधनमिन्द्रियं मनः ॥ तच्च प्रत्यात्मनियतत्वादनन्तम् परमाणुरूपं नित्यं च ॥**

मनसो लक्षणमाह— सुखेति । स्पर्शरहितत्वे सति क्रियावत्त्वं मनसो लक्षणम् । मनो विभजते—तच्चेति । एकैकस्यात्मन एकैकं मन आवश्यकमित्यात्म-

---

## नीलकण्ठी.

वर्तमानकालिकस्पार्शनवत्त्वं प्रत्याख्यते, तच्च भवतां मते न संभवति चाक्षुषस्पार्शनवतोर्भेदादितिभावः ॥ **अनुसन्धानायोगादिति** ॥ अन्यथा चैत्रेणानुभूतस्य वस्तुनो मैत्रेण स्मरणापत्तेरिति भावः ॥ ननु सर्वशरीरावच्छेदेनात्मनि सुखादिसाक्षात्कारोपपत्तये सर्वशरीरव्यापित्वम् आत्मनोस्तु तथाऽपि विभुत्वाङ्गीकारे प्रयोजनाभाव इत्याशयेनाशङ्कते **न मध्यमेति । अनित्यत्वप्रसङ्गेनेति** ॥ 'यत् मध्यमपरिमाणं तदनित्यम्' इति व्याप्तेरिति भावः ॥ **कृतेति** । 'कृतस्य यागादिना संपादितस्य धर्मादेर्हानं नाशः' अकृतस्याभ्यागमः प्राप्तिस्तत्प्रसङ्गादित्यर्थः । कर्तुरात्मन उत्तरजन्मनि असत्त्वात् अकर्तुश्च सत्त्वात् इति भावः ॥ ननु जीवस्याऽणुत्वमेवास्ताम् तावता नोक्तदोषः सूक्ष्मस्य दीपस्य सर्वगृहावच्छेदेनेवाणुरूपस्यापि जीवस्य सर्वशरीरावच्छेदेन प्रभाप्रसरणाङ्गीकारादिति चेत् ॥ न ॥ तथा सति कायव्यूहस्थले सुखादिसाक्षात्कारानुत्पत्तेरिति दिक् ॥ ॥ इत्यात्मा ॥ * ॥

मनःसंयोगाद्यतिव्याप्तिवारकेन्द्रियत्वघटितमूलोक्तलक्षणापेक्षया लघुलक्षणमाह— **स्पर्शरहितत्वे सतीति ॥ एकैकं मन इति** ॥ सर्वात्मनामेकस्य मनस

## भास्करोदयाख्यव्याख्या.

योऽहमित्याद्यनुसन्धानासंभवादिति भावः । दीपिकायां **स च न परमाणुरित्यादि** । तदस्वरूपत्वेऽणोरणीयानिति[1] श्रुतिविरोधप्रसक्तेरतिसूक्ष्मत्वबोधनद्वारा मनोऽविषयत्वबोधकत्वपरतया व्याख्येयत्वादप्रसक्तिरिति ध्येयम् ॥ **अन्यथेति** । अन्यानुभूतस्यानुसन्धानाङ्गीकारे इत्यर्थः । **यन्मध्यपरिमाणमिति** । द्व्यणुकमित्यर्थः । **कर्तुरात्मन इत्यादि** । तथाच स्वर्गकामेत्यादिविधिजातवैयर्थ्यं स्यादिति भावः । **कायव्यूहस्थलेत्यादि** । अयंभावः । दीपो हि प्रभाद्वारा प्रभासंयुक्ताव्यवहितदेशं प्रकाशयति न कुड्यादिव्यवहितम् । तथा तत्तच्छरीरावच्छेदेनैव सुखाद्युपलब्धिप्रसङ्गो योगिनां न कायव्यूहैरिति । **दिगिति** । विभुत्व एव युगपत्सर्वेन्द्रियप्रकाशकत्वोपपत्तिरित्यर्थः । मूलोक्तलक्षणं परित्यज्य लक्षणान्तरानुसरणे बीजमाह **मनःसंयोगाद्यतीत्यादि** ।

---

१ अणोरणीयान्महतो महीयान् ।

नामनेकत्वान्मनसोप्यनेकत्वमित्यर्थः ॥ परमाणुरूपमिति ॥ मध्यमपरिमाणवत्त्वे अनित्यत्वप्रसङ्गादित्यर्थः ॥ ननु मनो विभु स्पर्शरहितद्रव्यत्वात् आकाशादिवदिति चेत् । न । मनसो विभुत्वे आत्ममनःसंयोगस्याऽसमवायिकारणस्याभावाज्ज्ञानानुत्पत्तिप्रसङ्गात् ॥ न च विभुद्वयसंयोगोऽस्त्विति वाच्यम् ॥ तत्संयोगस्य नित्यत्वेन सुषुप्त्यभावप्रसङ्गात् पुरीतद्व्यतिरिक्तप्रदेशात्ममनःसंयोगस्य सर्वदा विद्यमानत्वात् । अणुत्वे तु यदा मनः पुरीतति नाड्यां प्रविशति, तदा सुषुप्तिः । यदा निःसरति, तदा ज्ञानोत्पत्तिरित्यणुत्वसिद्धिः ॥

**चक्षुर्मात्रग्राह्यो गुणो रूपम् ॥ तच्च शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात् सप्तविधम् ॥ पृथिवीजलतेजोवृत्ति ॥ तत्र पृथिव्यां सप्तविधम् ॥ अभास्वरशुक्लं जले । भास्वरशुक्लं तेजसि ॥**

---

## नीलकण्ठी.

स्वीकारे एकस्य ज्ञानदशायामपरस्य तदनुपपत्तिः तस्याणुत्वेन सकलेन्द्रियैरेकदा संयोगाभावादिति भावः ॥ **विभ्विति** ॥ तथाच तस्य परममहत्परिमाणवत्त्वेनपूर्वोक्तदोषानवकाशः ॥ **अभावादिति** ॥ विभुद्वयसंयोगानभ्युपगमादिति भावः ॥ **ज्ञानानुत्पत्तीति** ॥ भावकार्यस्यासमवायिकारणजन्यत्वरनियमादिति भावः ॥ **विभुद्वयसंयोगोस्त्विति** ॥ तस्य नित्यत्वेनासमवायिकारणक्रियाद्यसत्वेपि न क्षतिरिति भावः ॥ इति द्रव्यनिरूपणम् ॥

## भास्करोदयाख्यव्याख्या.

ननु किमस्मिंल्लाघवं पूर्ववत्सत्यन्तगर्भत्वेन विशेषणविशेष्योभयघटितत्वेन समत्वादिति चेदिन्द्रियत्वस्य मनःसंयोगादृष्टाद्यतिव्याप्तिवारकस्य विलक्षणपरिष्कृतस्य घटकतयाऽपेक्षितत्वेन गौरवाभिमानेनेदं बोध्यम् ॥ अत्र चाकाशवाय्वोरतिप्रसङ्गवारणाय विशेषणविशेष्ये ॥ **सकलेन्द्रियैरिति** । सकलानामिन्द्रियाणि सकलेन्द्रियाणीति षष्ठीतत्पुरुषः । न तु सकलानि च तानीन्द्रियाणीति कर्मधारयः, प्रसङ्गविरोधात् । **तस्येति** । विभोरित्यर्थः । **पूर्वोक्तदोष इति** । एकस्य ज्ञानदशायामपरस्य तदनुपपत्तिरूपोक्तदोष इत्यर्थः । **असमवायिकारणक्रियाद्यसत्वेऽपीति** ॥ ज्ञानासमवायिकारणात्ममनःसंयोगकारणविभुद्वयक्रियाया अस्वीकारेऽपीत्यर्थः । इदंत्वत्रावधेयम् । मनोनातिरिक्तं द्रव्यम् कल्पनागौरवात् किंतु भूतमेतच्च प्राचां मतेऽणुरूपम् । नव्यमते त्रुटिरूपम् । नन्वनतिरिक्तत्वे मनसस्त्रुटेर्महत्त्वेन युगपदनेकेन्द्रियसंयोगमादाय घटादेर्युगपच्चाक्षुषत्वाचप्रत्यक्षापत्तिरिति चेन्न अण्वतिरिक्तमनोऽभ्युपगन्तॄणां नयेऽदृष्टविशेषनियामकत्वान्न यौगपद्यं तथाभूतस्वरूपमनोङ्गीकर्तॄणामपीत्यदोषात् । केचिदतिरिक्तवादिमतपक्षपातिनो ब्रुवते—मनसः परमाणुरूपत्वे त्रुटिरूपत्वे वा विनिगमनाविरहान्नानापरमाणुनानात्रुटिरूपत्वेन तत्संयोगावच्छेदकत्वस्यानेकस्य तेषु कल्पनागौरवमपि च तादृशमनःसंयोगजन्यमानसप्रत्यक्षंप्रति तादृशमनसः कारणत्वेनैतन्मते कारणवा-

रूपं लक्षयति—चक्षुरिति ॥ संख्यादावतिव्याप्तिवारणाय मात्रपदम् । रूपत्वेऽतिव्याप्तिवारणाय गुणपदम् ॥ रूपं विभजते—तच्चेति । नन्वव्याप्यवृत्तिनीलादिसमुदाय एव चित्ररूपमिति चेत् ॥ न ॥ रूपस्य व्याप्यवृत्तित्वनियमात् ॥ ननु चित्रपटे अवयवरूपस्य प्रतीतिरस्त्विति चेत् । न । रूपरहितत्वेन पटस्याप्रत्यक्षत्वप्रसङ्गात् ॥ नच रूपवत्समवेतत्वं प्रत्यक्षत्वप्रयोजकम् । गौरवात् ।

---

## नीलकण्ठी.

# अथ गुणनिरूपणम् ।

**मात्रपदमिति** । यद्यपि चक्षुर्मात्रग्राह्यत्वं चक्षुरितराग्राह्यत्वेसति चक्षुर्ग्राह्यत्वम् । तच्च रूपे न संभवति । तथापि त्वगिन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वं तदिति ध्येयम् ॥ **गुणपदमिति** ॥ नचैवमपि प्रभाभित्तिसंयोगेऽतिव्याप्तिरिति वाच्यम् । त्वगग्राह्यचक्षुर्ग्राह्यगुणविभाजकधर्मवत्त्वे पर्यवसानेनादोषात् । अत एव न परमाणुरूपादावव्याप्तिरिति बोध्यम् ॥ **समुदाय एवेति** । एवकारेणातिरिक्तचित्ररूपव्यवच्छेदः ॥ **व्याप्यवृत्तित्वेति** ॥ दैशिकव्याप्यवृत्तित्वेत्यर्थः ॥ इदमुपलक्षणम् ॥ एकैकचित्ररूपस्थलेऽनेकरूपाणामेकैकतत्तत्प्रागभावादिस्थले च अनेकप्रागभावादीनां कल्पनेन, अनेकरूपेषु 'चित्रः' इत्याकारकप्रतीतिविषयत्वकल्पनेन, च गौरवमिति ॥ **रूपरहितत्वेनेति** । समवायेनेत्यादिः । **प्रसङ्गादिति** ॥ द्रव्यचाक्षुषं प्रति समवायेनैव रूपस्य कारणत्वादितिभावः ॥ **रूपवत्समवेतत्वं** स्वाश्रयसमवेतत्वसंबन्धेन रूपम् ॥ **प्रत्यक्षत्वप्रयोजकमिति** । प्रत्यक्षविषयत्वप्रयोजकमस्तु इत्यर्थः ॥ **गौरवादिति** । साक्षात्संबन्धेन कारणत्वापेक्षया गौरवादित्यर्थः ॥ चित्रावयवकपालैरार-

## भास्करोदयाख्यव्याख्या.

**हुल्यमिति** ॥ अनतिरिक्तवादिनव्यमतपक्षपातिनस्त्वित्थं सामान्यतः द्रव्यलौकिकप्रत्यक्षत्वावच्छिन्नं प्रति विजातीयसंयोगत्वेनेन्द्रियसंयोगस्य हेतुत्वकल्पनयाऽणुरूपत्वे त्रुटिरूपत्वे वा नोक्तदोषावसर इति वदन्ति ॥ **मात्रपदमितीति** । अस्य चेतरव्यवच्छेदोऽर्थः तत्फलितमर्थमादाय शङ्कते-**यद्यपीति** । **रूपे न सम्भवतीति** । रूपस्य चक्षुरितरविषयेन्द्रियसंयोगग्राह्यत्वादिति भावः ॥ अतोऽर्थान्तरं पुरस्कृत्याव्याप्तिं परिहरति **तथापीति** । अत्र मात्रपदं त्वगिन्द्रियपरम् । यदीतरपदस्य तद्बोध्यव्यवच्छेद इत्यर्थस्तात्पर्यबलात्तद ग्राह्यपदस्य त्वगिन्द्रियाग्राह्यरूपार्थग्राहकमिति भावः । **अदोषादिति** । प्रभाभित्तिसंयोगत्वं न गुणविभाजको धर्मः किन्तु संयोगत्वमात्रमिति भावः । **अत एवेति** । जातिघटितलक्षणाङ्गीकारादेवेत्यर्थः । **अव्याप्तिरिति** । अमहत्वाच्चक्षुर्ग्राह्यत्वाभावादिति भावः । **दैशिकव्याप्यवृत्तित्वेत्यर्थ इति** । कालिकाव्याप्यवृत्तित्वं त्वस्त्येवेति भावः । अतिरिक्तचित्ररूपानङ्गीकारे स्वयं दूषणमाह-**इदमुपलक्षणमिति** । **तत्प्रागभावादिस्थल इति** । चित्ररूपप्रागभावादिस्थल इत्यर्थः । **अनेकप्रागभावादीनामिति** । आदिना अनेकध्वंससंग्रहः । **गौरवमिति** ।

तस्मात् पटस्य प्रत्यक्षत्वानुपपत्त्या चित्ररूपसिद्धिः ॥ रूपस्याश्रयमाह—पृथिवीति । आश्रयं विभज्य दर्शयति—तत्रेति ॥

## नीलकण्ठी.

ब्धघटस्य चाक्षुषत्वानुरोधेन स्वसमवायिसमवेतत्वसंबन्धेनैव रूपस्य तत्प्रयोजकत्वमङ्गीकर्तव्यम् ॥ एवं च त्रुटेश्चाक्षुषत्वानुपपत्तिरपि द्रष्टव्या ॥ **प्रत्यक्षत्वानुपपत्त्येति** ॥ एतेन चित्ररूपवत् चित्ररसोपि सिध्येदिति शंका निरस्ता ॥ द्रव्यलौकिकरासनस्याप्रसिद्ध्या तदनुपपत्त्यभावेन चित्ररसासिद्धेरिति संक्षेपः ॥ इति रूपम् ॥ * ॥

## भास्करोदयाख्यव्याख्या.

तस्मादतिरिक्तं चित्रमङ्गीकार्यमित्यर्थः । इदंत्वत्रावधेयम् । रूपं चाव्याप्यवृत्ति एवं व्याप्यवृत्तित्वमते सार्वजनीनप्रतीतिः पक्वघटो रक्तोनीलश्चेति प्रात्यक्षिकी कथमुपपद्यताम् ॥ एकस्मिन्घटे उपलभ्यमानयोरेककालावच्छेदेन रक्तनीलयोरवच्छेदकमेदं विनाऽनुपपन्नतयाऽवच्छेदककल्पनस्यावश्यकतया किमवशिष्टमव्याप्यवृत्तित्वे । तस्मान्नानाजातीयरूपवदवयवारब्धघटादौ समानाधिकरणविजातीयरूपसमुदायादेव चित्ररूपव्यवहारोपपत्तेरतिरिक्तचित्ररूपाङ्गीकारोऽपि निर्मूल एव । नीलादेर्नीलाद्यतिरिक्तरूपाजनकत्वाच्च गौरवमपि न दोषावहमिति । तर्हि किंप्रमाणमवलम्ब्य प्राचीनमतानुसृतं मूलमिति चेदित्थं बोध्यम् । विजातीयनानारूपवदवयवारब्धेऽवयविनि पटादावव्याप्यवृत्तिनानारूपाङ्गीकारे नीलावयवावच्छेदेन पीतादिवारणायावच्छेदकतासम्बन्धेनपीतादिकं प्रति समवायादिना पीतादीनां षट्कार्यकारणभावकल्पने गौरवम् । अतिरिक्तचित्ररूपवादिनां मते तु सर्वनीलादिस्थले चित्रापत्तिवारणाय चित्रत्वावच्छिन्नं प्रति कार्यकालवृत्तितया चित्रेतररूपाभावत्वेनैकहेतुत्वकल्पने स्फुटमेव लाघवम् । परंच नीलादेर्नीलाद्यतिरिक्तरूपजनकत्वे प्रत्येकं स्वातिरिक्ततत्तद्रूपजनकत्वापत्तेरप्रत्यूहत्वादहेतुत्वे निर्हेतुकरूपानुत्पत्तेरुत्पत्तिकाल एवावयवरूपाक्रमेण रूपान्तरोत्पत्त्यापत्तेस्तदुपगमेऽवयवरूपसमुदायरूपत्वेनैव चित्राङ्गीकारः समीचीन इत्याशयेनाहुर्भट्टाचार्याः 'चित्रमपि नातिरिक्तम्' इत्यलम् ॥ **रूपरहितत्वेनेतीति** । ननु कथं रूपरहितत्वं कालिकेन रूपरहितत्वादित्यत आह **समवायेनेत्यादिरिति** । अन्यथा अतिप्रसङ्गादिति भावः ॥ **रूपस्य कारणत्वादिति** । उद्भूतस्येत्यादिः । **स्वाश्रयेत्यादि** ॥ तथाच पूर्वं समवायेनेति स्वाश्रयसमवेतत्वसंबन्धोपलक्षणमिति भावः । **प्रत्यक्षत्वप्रयोजकमितीति** । प्रत्यक्षत्वंच ज्ञानवृत्तिधर्मः, नहि तत्प्रयोजकं भवितुमर्हति । रूपमिति मूलस्य न्यूनतापरिहाराय प्रत्यक्षत्वपदं प्रत्यक्षविषयत्वेन विवृणोति-**प्रत्यक्षेत्यादि** । घटादौ प्रत्यक्षविषयता रूपप्रयोज्यैव रूपाभावे तदनुत्पत्तेर्मीमांसकमते ज्ञाततायाएवोत्पत्तिरिति बोध्यम् । **त्रुटेश्चाक्षुषानुपपत्तिर्द्रष्टव्येति** । पूर्वोक्तसंबन्धेन चित्ररूपस्य त्रुटावेव सत्वादिति भावः । **एतेनेति** । चित्ररूपाङ्गीकारे प्रत्यक्षत्वानुपपत्तेरिति हेतुनिदर्शनेनेत्यर्थः । हेतौ तृतीया । **शङ्कानिरस्तेति** । निरासे हेतुमाह-**द्रव्ये-**

**रसनग्राह्यो गुणो रसः ॥ स च मधुराम्ललवणकटुकषाय-तिक्तभेदात् षड्विधः ॥ पृथिवीजलवृत्तिः ॥ पृथिव्यां षड्विधः । जले मधुर एव ॥**

रसं लक्षयति–रसनेति ॥ रसत्वेऽतिव्याप्तिवारणाय गुणपदम् ॥ रसस्याश्रयमाह–पृथिवीति ॥ आश्रयं विभज्य दर्शयति–पृथिव्यामिति ॥

**घ्राणग्राह्यो गुणो गन्धः ॥ स च द्विविधः सुरभिरसुरभिश्च ॥ पृथिवीमात्रवृत्तिः ॥**

गन्धं लक्षयति—घ्राणेति ॥ गन्धत्वेऽतिव्याप्तिवारणाय गुणपदम् ॥

**त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः ॥ स त्रिविधः—शीतोष्णानुष्णाशीतभेदात् ॥ पृथिवीजलतेजोवायुवृत्तिः ॥ तत्र शीतो जले उष्णस्तेजसि अनुष्णाशीतः पृथिवीवाय्वोः ॥**

स्पर्शं लक्षयति–त्वगिति ॥ स्पर्शत्वेऽतिव्याप्तिवाराय गुणपदम् ॥ संयोगादावतिव्याप्तिवारणाय मात्रपदम् ।

**रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यम् च अन्यत्रापाकजं नित्यमनित्यं च ॥ नित्यगतं नित्यं च । अनित्यगतमनित्यम् ॥**

---

## नीलकण्ठी.

**रसत्व इति** । रसनाग्राह्यगुणविभाजकोपाधिमत्त्वे तात्पर्यम् ॥ एवं गन्धलक्षणेऽपि ॥ इति रसः ॥ * ॥

**मात्रपदमिति** ॥ 'चक्षुरग्राह्यत्वगिन्द्रियग्राह्यगुणविभाजकोपाधिमत्त्वम्' इति तु फलितोर्थः ॥ इति स्पर्शः ॥ * ॥

## भास्करोदयाख्यव्याख्या.

**त्यादि** । द्रव्ये रसनेन्द्रियस्य संयोगरूपसन्निकर्षस्य षड्विधसन्निकर्षघटकस्य लौकिकस्य सत्वेऽपि रसनेन्द्रियस्य तद्ग्रहणेऽसामर्थ्याच्चक्षुषः परमाणुग्रहण इवातिरिक्तचित्ररसानङ्गीकारे आम्रादे रासनप्रत्यक्षत्वानुपपत्तेरभावाद्रसनेन्द्रियस्य रसमात्रग्राहकत्वाच्चित्ररसानङ्गीकारेऽप्यनुपपत्तिलेशासंभवो यथातिरिक्तवादिनां नयेऽतिरिक्तचित्ररूपानङ्गीकारे द्रव्यप्रत्यक्षत्वानुपपत्तिः, प्रत्यक्षे रूपसमवायस्य हेतुत्वात्तथा नेहेति समुदितार्थतात्पर्यमवसेयम् । परमाणुरसे रसनाग्राह्यगुणत्वाभावादव्याप्तेर्महत्त्वस्य प्रत्यक्षत्वप्रयोजकत्वादत आह—**रसनाग्राह्येत्यादि उपाधिमत्त्वान्तम्** । **एवं गन्धलक्षणेऽपीति** । परमाणुगन्धेऽव्याप्तेर्वारणाय घ्राणग्राह्यगुणविभाजकोपाधिमत्त्वे तात्पर्यं बोध्यमित्यर्थः ॥ **मात्रपदमितीति** ॥ मात्रपदघटितफलितार्थं त्वगितराग्राह्यत्वे सति त्वग्ग्राह्यगुणत्वरूपं विहायैतदाश्रयणे वीजं स्पर्शलक्षणस्य त्वगिन्द्रियद्रव्यसंयोगमादाय परमाणुस्पर्शे-

पाकजमिति ॥ पाकस्तेजःसंयोगः, तेन पूर्वरूपं नश्यति रूपान्तरमुत्पद्यते इत्यर्थः ॥ अत्र परमाणुष्वेव पाको न द्व्यणुकादौ । आमपाकनिक्षिप्ते घटे परमाणुषु रूपान्तरोत्पत्तौ श्यामघटनाशे पुनर्द्व्यणुकादिक्रमेण रक्तघटोत्पत्तिः ॥ तत्र परमाणवः समवायिकारणम्, तेजःसंयोगोऽसमवायिकारणम्, अदृष्टादिकं निमित्तकारणम्, द्व्यणुकादिरूपे कारणरूपमसमवायिकारणमिति पीलुपाकवादिनो

## नीलकण्ठी.

**परमाणुष्वेव पाक** इति ॥ परमाणुष्वेव पूर्वरूपपरावृत्त्यादिजनकतेजःसंयोग इत्यर्थः ॥ एवकारव्यवच्छेद्यं स्फुटयति—**न द्व्यणुकादाविति** ॥ **आमपाकनिक्षिप्ते घटे** इति ॥ घटे आमपाकनिक्षिप्ते सति श्यामघटनाशे परमाणुषु रूपान्तरोत्पत्तौ इत्यन्वयः ॥ **तत्र परमाणुरूपे** ॥ अवयविनि पाकानङ्गीकारादाह—**कारणरूपमिति** ॥ परमाणुष्वेव पाकं वदतां वैशेषिकाणामयमाशयः—वेगातिशयवता तेजसा परमाणूनामभिघातसंयोगे सति अवश्यं तेषु क्रिया जायते । ततो विभागः, तत आरम्भकसंयोगनाशे सत्यवश्यं यावदवयविनाशः ततः स्वतन्त्रेषु परमाणुषु रूपान्तरोत्पत्तौ पुनरदृष्टादिघटितसामग्रीवशात्परमाणुषु क्रियाविभागादिक्रमेण यथास्थितमहावयविपर्यन्तमुत्पत्तिरिति ॥ अवयविन्यपि पाकं वदतां नैयायिकानां तु अयमाशयः—तेजसा परमाणूनामभिघातसंयोगेपि तस्य नियमत आरम्भकसंयोगप्रतिद्वन्द्विविभाग-

## भास्करोदयाख्यव्याख्या.

ऽनापत्तिरिति ध्येयम् । अन्यच्चात्र यद्वक्तव्यं तत्प्रागेवोक्तम् । **परमाणुष्वेव पाक इतीति** ॥ कामिकान्वये पाकस्य पूर्वरूपनाशपूर्वकरूपान्तरोत्पादकत्वस्वाभाव्यात्तदलाभप्रयुक्तभ्रमवारणाय स्वयमन्वयं दर्शयति—**घटेत्यादिना** । **वैशेषिकाणामिति** । षोडशपदार्थानां सप्तस्वन्तर्भावेण सप्तविशेषपदार्थप्रतिपादककाणादसूत्रं तद्भाष्यमन्यं चैतदर्थप्रतिपादकमधीयते विदन्ति वा वैशेषिकाः । क्रतूक्थादीत्यादिपदग्राह्यत्वाट्ठक् । एतच्च[2] व्यक्तीकरिष्यत्युपरिष्टाच्छब्दपरिच्छेदे । **आरम्भकसंयोगनाश इति** ॥ घटारम्भकद्व्यणुकाद्युत्पादकसंयोगनाश इत्यर्थः । **यावदवयविनाश इति** । द्व्यणुकाद्यन्तावयविनाश इत्यर्थः । **स्वतन्त्रेषु परमाणुष्विति** । प्रत्येकं विशकलितेषु परमाणुष्वित्यर्थः । **अदृष्टादिघटितसामग्रीवशादिति** । अदृष्टं घटेन जलाहरणद्वारा जलप्रयोज्यतृप्तिसंपादकं पुण्यम् । जलाहरणद्वारकजलतृप्तिसंपादिकेश्वरेच्छादिपदग्राह्या । तद्घटिता तद्विशिष्टा । वैशिष्ट्यं सामानाधिकरण्यसंबन्धेनैतादृशी या सामग्री कारणं तद्वशात्तदधीनत्वादिति समुदितार्थः । **अवयविन्यपीति** । अपिनाऽवयवसमुच्चयः । **नैयायिकानामिति** । न्यायो युक्तिस्तत्प्रतिपादकोप्युपचारान्न्याय स्तमधीयते विदन्ति वेत्यर्थे ठक् क्रतूक्थादीत्यादिपदग्राह्यत्वात् । न य्वेत्यैच् । **तेजसेत्यादि** । **तेजसा** वेगवता । **तस्य** अभिघातस्य । **नियमतः** अवश्यम् **आरम्भकसंयोगः** अन्तावयव्यारम्भकद्व्यणुकादिसंयोगः । तस्य प्रतिद्वन्द्विविरुद्धा या विभा-

१ आमोऽपरिपक्वः. २ कणादानांमतमित्यर्थः ।

वैशेषिकाः ॥ पूर्वघटनाशं विनैव अवयविनि अवयवेषु परमाणुपर्यन्तेषु च युगपद्रूपान्तरोत्पत्तिरिति पिठरपाकवादिनो नैयायिकाः । अत एव पार्थिवपरमाणुरूपादिकमनित्यमित्यर्थः ॥ अन्यत्रेति ॥ जलादावित्यर्थः ॥ नित्यगतमिति ॥ परमाणुगतमित्यर्थः ॥ अनित्यगतमिति ॥ द्व्यणुकादिनिष्ठमित्यर्थः ॥ रूपादिचतुष्टयम् उद्भूतं प्रत्यक्षम् । अनुद्भूतमप्रत्यक्षम् ॥ उद्भूतत्वं प्रत्यक्षत्वप्रयोजको धर्मः । तदभावोऽनुद्भूतत्वम् ॥

**एकत्वादिव्यहारहेतुः संख्या ॥ नवद्रव्यवृत्तिः ॥ एकत्वा-**

---

## नीलकण्ठी.

जनकक्रियाजनकत्वे मानाभावेन अवयविन्यपि पाकस्वीकार उचितः ॥ अतएव 'सोयं घटः' इति प्रत्यभिज्ञा संगच्छते ॥ अनन्तावयविनाशाद्यकल्पने लाघवं चेति ॥ नचावयविरूपं प्रति अवयवरूपस्य तन्नाशं प्रति आश्रयनाशस्य, हेतुतायां व्यभिचार इति वाच्यम् । कार्यतावच्छेदककोटौ वैजात्यनिवेशेन व्यभिचारवारणसंभवात् ॥ **जलादावित्यर्थ** इति ॥ यद्यपि रूपादिचतुष्टयं जलादौ बाधितम् ॥ तथापि यथायोग्यमन्वये तात्पर्यम् ॥ **उद्भूतमिति** ॥ उद्भूतत्वं जातिः । नच शुक्लत्वादिना सांकर्यम् ॥ 'गुणसांकर्यं न बाधकम्' इति नवीनमताभिप्रायकोऽयं ग्रन्थ इति न दोषः॥ केचित्तु शुक्लत्वादि व्याप्यमनुद्भूतत्वं नाना तदभावकूटवत्त्वमेवोद्भूतत्वमित्याहुः ॥ इति पाकविचारः ॥ * ॥

## भास्करोदयाख्यव्याख्या.

गजनकक्रिया तज्जनकत्वे मानाभावेन तस्य तादृशसामर्थ्याभावेनेति समुदितार्थः । तत्सिद्धमर्थमाह—**अवयविन्यपीत्यादि** । तथाचाविशकलितपरमाणुष्ववयवेष्ववयविनि च पाक इति मतं गौतमीयानामिति भावः । अस्मिन्नेवार्थे आनुभविकत्वं लाघवं च दर्शयति—**अत एवेत्यादिना । सोऽयं घट इति प्रत्यभिज्ञासंगच्छत इति** । पूर्वमते विजातीयोत्पत्तेस्तदसंभवान्नियौक्तिकं तदिति भावः । तस्मिन्गौरवं बोधयितुं लाघवमुद्भावयति—**अनन्तेत्यादि** । पूर्वमतानुसारी कश्चनावयविरूपतन्नाशयोरवयवरूपतन्नाशाभ्यामुत्पत्तिनियमोऽस्माकं मते संगच्छते, युगपदवयवावयविनो रूपोत्पत्तिमते कथं संगच्छतामित्याशङ्कते—**नचेति ॥ वैजात्यनिवेशेनेति** । कपालघटरूपनाशयोरेव परस्परं हेतुत्वमङ्गीक्रियतेऽनुभवलाघवादिति भावः । **बाधितमिति** । जले रूपरसस्पर्शाः । तेजसि रूपस्पर्शौ । वायौ तु स्पर्शमात्रं, चतुष्टयं तु न क्वापि । अतो यथायोग्यमन्वये तात्पर्यमिति न्यूनतां परिहरति स्म । **उद्भूतत्वमितीति** । मूलस्थधर्मपदस्य जातिबोधकत्वाभिमानेनाह—**उद्भूतत्वं जातिरिति । गुणगतं साङ्कर्यमिति** । रूपादिरूपगुणनिष्ठं शुक्लत्वादिनोद्भूतत्वे सांकर्यं परस्परात्यन्ताभावसामानाधिकरण्यमुद्भूतत्वस्य जातित्वे बाधकं नेति समुदितार्थः ॥ **अयं ग्रन्थ इति** । मूलग्रन्थइत्यर्थः । **तदभावकूटवत्त्वमिति** । एवंरूपोद्भूतत्वाश्रयणे बीजं तु प्रागुक्तं स्मर्तव्यम् ॥ संग्रहे **नवद्रव्यवृत्तिरिति** । नन्वेकत्वा-

द्विपरार्धपर्यन्ता ॥ एकत्वं नित्यमनित्यं च ॥ नित्यगतं नित्यम् ॥ अनित्यगतमनित्यम् ॥ द्वित्वादिकं तु सर्वत्रानित्यमेव ॥

संख्यां लक्षयति—एकेति ॥

मानव्यवहारासाधारणं कारणं परिमाणम् ॥ नवद्रव्यवृत्ति तच्चतुर्विधम्—अणु, महत्, दीर्घं, ह्रस्वं, चेति ॥

परिमाणं लक्षयति—मानेति ॥ परिमाणं विभजते—तच्चेति ॥ भावप्रधानो निर्देशः । अणुत्वं, महत्त्वं, दीर्घत्वं, ह्रस्वत्वं चेत्यर्थः ॥

पृथग्व्यवहारासाधारणं कारणं पृथक्त्वम् । सर्वद्रव्यवृत्ति ॥

पृथक्त्वं लक्षयति—पृथगिति ॥ 'इदमस्मात् पृथक्' इति व्यवहारकारणमित्यर्थः ॥

संयुक्तव्यवहारहेतुः संयोगः ॥ सर्वद्रव्यवृत्तिः ॥

संयोगं लक्षयति—संयुक्तेति ॥ 'इमौ संयुक्तौ' इति व्यवहारहेतुरित्यर्थः ॥ संख्यादिलक्षणेषु सर्वत्र दिक्कालादावतिव्याप्तिवारणाय असाधारणेति देयम् ॥ संयोगो द्विविधः—कर्मजः संयोगजश्च । आद्यो हस्तक्रियया पुस्तकसंयोगः ॥

---

## नीलकण्ठी.

मूले द्वित्वादिकं तु सर्वत्रानित्यमेवेति ॥ हेतुभूतापेक्षाबुद्धिनाशेन द्वित्वनाशादिति भावः ॥ इति संख्या ॥ * ॥

परिमाणस्य गुणिबोधकशब्दैर्विभजनमसंगतमतो दीपिकायां भावप्रधाननिर्देश इति ॥ इति परिमाणम् ॥ * ॥

असाधारणेतीति ॥ कालादेः साधारणकारणत्वेन तत्र नातिव्याप्तिरिति भावः ॥

## भास्करोदयाख्यव्याख्या.

द्विव्यवहारस्य गुणेऽपि सत्त्वादेकं रूपं द्वे रूपे इत्याकारकसंख्यावत्त्वप्रत्ययात्संख्यायाः गुणत्वे गुणे गुणानङ्गीकारादिति न्यायेन रूपे तथा प्रत्ययानुपपत्तेः संख्या कथं गुण इति चेत्पदार्थान्तरमित्याहुर्भट्टाचार्याः । अन्येचैकत्वाद्यपेक्षाबुद्धिरूपं तेन नोक्तदोष इत्याहुः ॥ परिमाणस्येत्यादि । यद्यपि परिमाणस्याणुत्वादिरूपतया तदुपाधिकभेदव्यवहारे तद्भेदस्योक्तप्रायत्वेऽपि गुणगुणिनोरैक्यभ्रमप्रसक्तेस्तद्दोषवारणायैवादिपदं लक्षणयाऽणुत्वादिपरमित्याशयकभावप्रधाननिर्देशपदं दीपिकायामिति भावः । दीपिकायामिदमस्मात्पृथगित्यादि । इदं त्वत्रावधेयम् । पृथक्त्वं न गुणः, घटात्पटः पृथगिति व्यवहारः अन्योन्याभावनिबन्धन एव, पञ्चम्याः प्रतियोगित्वार्थकतया घटप्रतियोगिकभेदवान्पट इत्यर्थबोधात् । पञ्चम्याः प्रतियोगित्वार्थकत्वे घटात्पटः पृथगित्यस्येव घटान्न पटइत्यस्यापत्तिस्त्वन्याराददिति सूत्रेऽन्यत्वस्यार्थपरमप्यन्यपदं तदर्थबोधक-

द्वितीयो हस्तपुस्तकसंयोगात् कायपुस्तकसंयोगः ॥ अव्याप्यवृत्तिः संयोगः ॥ स्वात्यन्ताभावसमानाधिकरणत्वम्–अव्याप्यवृत्तित्वम् ॥

**संयोगनाशको गुणो विभागः ॥ सर्वद्रव्यवृत्तिः ॥**

विभागं लक्षयति–संयोगेति ॥ कालादावतिव्याप्तिवारणाय—गुण इति ॥ रूपादावतिव्याप्तिवारणाय संयोगनाशक इति ॥ विभागोपि द्विविधः कर्मजो विभागजश्च ॥ आद्यो हस्तक्रियया हस्तपुस्तकविभागः ॥ द्वितीयो हस्तपुस्तकविभागात्कायपुस्तकविभागः ॥

**परापरव्यवहारासाधारणकारणे परत्वापरत्वे ॥ पृथिव्यादिचतुष्टयमनोवृत्तिनी। ते द्विविधे दिक्कृते कालकृते च ॥ दूरस्थे दिक्कृतं परत्वम् ॥ समीपस्थे दिक्कृतमपरत्वम् ॥ ज्येष्ठे कालकृतं परत्वम् ॥ कनिष्ठे कालकृतमपरत्वम् ॥**

---

## नीलकण्ठी.

**स्वात्यन्ताभावेति** ॥ स्वप्रतियोगित्व–स्वसामानाधिकरण्योभयसम्बन्धेनाभाववत्त्वमिति तु निष्कर्षः ॥ इति संयोगः ॥ * ॥

**संयोगनाशक इतीति** ॥ नच तथापि संयोगेऽतिव्याप्तिः । तस्य प्रतियोगिविधया नाशं प्रति कारणत्वादिति वाच्यम् ॥ प्रतियोगितासंबन्धानवच्छिन्ननाशनिष्ठजन्यतानिरूपितजनकत्वविवक्षणेनादोषादिति केचित् ॥ परेतु 'संयोगनाशत्वावच्छिन्ननिरूपितसमवायावच्छिन्नकारणत्वम्' इति निष्कर्षः एतत्तात्पर्यग्राहकं गुणपदमित्याहुः । **विभाग इति** । अयमप्यव्याप्यवृत्तिरिति बोध्यम् ॥ इतिविभागः ॥ * ॥

## भास्करोदयाख्यव्याख्या.

विशेषपरमेव व्याख्यानान्न त्वन्योन्याभावबोधकसामान्यपरमित्यभ्युपगमेन परिहरणीयेत्यदोषः । **स्वप्रतियोगित्वेत्यादि** । स्वं मूलावच्छिन्नकपिसंयोगाभावः तत्प्रतियोगित्वमग्रावच्छिन्नकपिसंयोगे । स्वं स एव तत्सामानाधिकरण्यं तदधिकरणवृत्तित्वमेतद्द्वयसंबन्धेनाभाववैशिष्ट्यं संयोगे, इति संयोगस्याव्याप्यवृत्तित्वेऽपि संयोगाभावस्याव्याप्यवृत्तित्वायोभयसाधारणं सावच्छिन्नवृत्तिकत्वरूपं निर्वाच्यम् तथाच घटेद्रव्यत्वमिति प्रतीतौघटत्वावच्छेदेन द्रव्यत्वस्य विषयतया व्याप्यवृत्तित्वापरिहारे प्रकारः सावच्छिन्नत्वांशे देशकालेतरावच्छेदकानवच्छेद्यत्वेनोहनीय इत्यलम् । स्वयं समाधत्ते—**परेत्विति** । संयोगनाशत्वावच्छिन्नकार्यतानिरूपितकारणतायां प्रतियोगितासंबन्धानवच्छिन्नत्वदानेनैवोक्तदोषवारणे किं प्रकारान्तरानुसरणे बीजं, न चापि लाघवमिति चेद्बीजमाह—**एतावतेति** । गुणस्य समवायेनैव वृत्तेः तत्सम्बन्धावच्छिन्नैव कारणता सिध्यतीति भावः । एतेन 'उक्तं निर्बीजम्' इत्युपेक्षितमिति भावः । **अयमपीति** । विभागोऽपीत्यर्थः । **अव्याप्यवृत्तिरिति** । सर्वावच्छेदेनाविभुद्रव्यसंयोगाभावादिति भावः ।

परत्वापरत्वयोर्लक्षणमाह—परापरेति ॥ 'परव्यवहारकारणं परत्वम् । अपरव्यवहारकारणमपरत्वम्' इत्यर्थः ॥ ते विभजते द्विविधे इति ॥ दिक्कृतयोरुदाहरणमाह दूरस्थ इति ॥ कालकृते उदाहरति ज्येष्ठ इति ॥

**आद्यपतनासमवायिकारणं गुरुत्वम् ॥ पृथिवीजलवृत्ति ॥**

गुरुत्वं लक्षयति—आद्येति ॥ द्वितीयादिपतनस्य वेगासमवायिकारणत्वाद्वेगेऽतिव्याप्तिवारणाय आद्येति ॥

**[1]स्यन्दनासमवायिकारणं द्रवत्वम् ॥ पृथिवीजलतेजोवृत्ति ॥ तद्द्विविधम्—सांसिद्धिकं नैमित्तिकं चेति ॥ सांसिद्धिकं जले ॥ नैमित्तिकं पृथिवीतेजसोः ॥ पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम् ॥ तेजसि सुवर्णादौ ॥**

द्रवत्वं लक्षयति—स्यन्दनेति ॥ स्यन्दनं प्रस्रवणम् ॥ तेजःसंयोगजं नैमित्तिकम् ॥ तद्भिन्नं सांसिद्धिकम् ॥ पृथिव्यां नैमित्तिकमुदाहरति—घृतादाविति— ॥ तेजसि तदाह—सुवर्णादाविति ॥

**चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः ॥ जलमात्रवृत्तिः ॥**

---

## नीलकण्ठी.

**आद्येतीति** । आद्यत्वमिह स्वसमनाधिकरणपतनप्रतियोगिकध्वंसासमानकालिकत्वम् ॥ द्वितीयपतनादीनां प्राथमिकपतनध्वंससमानकालिकत्वान्निरास इतिभावः ॥

इति गुरुत्वम् ॥ * ॥

**तदाहेति** नैमित्तिकमाहेत्यर्थः ॥ इति द्रवत्वम् ॥ * ॥

## भास्करोदयाख्यव्याख्या.

दीपिकायां **ते विभजत इति** । परत्वापरत्वे इत्यर्थः । इदन्त्वत्रावधेयम् । परापरव्यवहारप्रकाररूपपरत्वापरत्वे नातिरिक्तगुणत्वावच्छिन्ने मानाभावात् । दिक्कृतपरापरयोर्बहुतरसंयुक्तसंयोगाल्पतरसंयुक्तसंयोगाभ्यां तथा ज्येष्ठकनिष्ठयोस्तत्प्रागभावाधिकरणक्षणावृत्तिकत्वरूपज्येष्ठत्वतदुत्पत्तिक्षणध्वंसाधिकरणक्षणोत्पत्तिकत्वरूपकनिष्ठत्वाभ्यामेवोभयव्यवहारोपपत्तेरिति । **आद्यत्वमिहेत्यादि** । इह पतनक्रियायाम् । **स्वसमानाधिकरणेति** । पतनक्रियासमानाधिकरणेत्यर्थः । पतनप्रतियोगिकध्वंसे पतनक्रियाधिकरणावृत्तित्वविशेषणफलं दर्शयति—**द्वितीयेत्यादि** । द्वितीयपतनक्रियोत्पत्तिक्षणे तृतीये प्रथमक्षणीयपतनक्रियाया नाशात्, सर्वेषामेव तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वेनानित्यत्वादिति भावः । **आद्य इति** । अत्रोक्तप्रकारेण विभक्तत्रित्वावच्छिन्नसाध्यइत्यादिः । स्पष्टप्रतिपत्तय आह—**असमवायिका-**

---

१ अप्याद्येति पाठः पुस्तकान्तरेषु दृश्यते स च युक्त एव ॥

स्नेहं लक्षयति—चूर्णेति ॥ कालादावतिव्याप्तिवारणाय गुण इति ॥ रूपादावतिव्याप्तिवारणाय पिण्डीभावेति ॥

**श्रोत्रग्राह्यो गुणः शब्दः ॥ आकाशमात्रवृत्तिः ॥ स द्विविधः—ध्वन्यात्मको वर्णात्मकश्चेति ॥ ध्वन्यात्मको भेर्यादौ ॥ वर्णात्मकः संस्कृतभाषादिरूपः ॥**

शब्दं लक्षयति—श्रोत्रेति ॥ शब्दत्वेऽतिव्याप्तिवारणाय गुण इति ॥ रूपादावतिव्याप्तिवारणाय श्रोत्रेति ॥ शब्दस्त्रिविधः—संयोगजो, विभागजः, शब्दजश्चेति॥ तत्र आद्यो भेरीदण्डसंयोगजन्यः ॥ द्वितीयो वंशे पाट्यमाने दलद्वयविभागजन्यश्चटचटाशब्दः भेर्यादिदेशमारभ्य श्रोत्रपर्यन्तद्वितीयादिशब्दाः शब्दजाः ॥

**सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम् ॥ सा द्विविधा—स्मृतिरनुभवश्च ॥ संस्कामात्रजन्यं ज्ञानं स्मृतिः—**

बुद्धेर्लक्षणमाह—सर्वेति ॥ कालादावतिव्याप्तिवारणाय गुण इति ॥ रूपादावतिव्याप्तिवारणाय सर्वव्यवहार इति ॥ जानामीत्यनुव्यवसायगम्यज्ञानत्वं लक्षण-

## नीलकण्ठी.

**पिण्डीभावेतीति** ॥ पिण्डीभावः संयोगविशेषः ॥ इति स्नेहः ॥ * ॥

**भेरीदण्डसंयोगजन्य इति** ॥ आद्येऽसमवायिकारणं भेर्याकाशसंयोगः, निमित्तकारणं तु भेरीदण्डसंयोगः ॥ द्वितीये वंशदलाकाशविभागोऽसमवायिकारणम् ॥ दलद्वयविभागो निमित्तकारणम् ॥ तृतीये तु पूर्वपूर्वशब्दोऽसमवायिकारणम् पवनादि निमित्तकारणमिति विवेकः ॥ इति शब्दः ॥ * ॥

**जानामीत्यादि** ॥ ज्ञानत्वमात्रं लक्षणम् ॥ जानामीत्यनुव्यवसायगम्यत्वं तु ज्ञानत्वस्य प्रमाणसिद्धत्वसूचनाय ॥ तथाहि 'घटं जानामि' इत्याद्यनुगतानुव्यवसायस्यानुगतधर्ममन्तरानुपपन्नत्वेन तस्य स्वीकर्तव्यतया लाघवात् जातित्वसिद्धिः ॥ इत्थं च मूले 'सर्वव्यवहारहेतुः' इति बुद्धेः स्वरूपकथनमिति भावः ॥

## भास्करोदयाख्यव्याख्या.

**रणमित्यादि** । भेर्यवच्छिन्नाकाशे समवायेन शब्दोत्पत्तेस्तत्प्रत्यासन्नत्वेनकारणत्वात्तत्वं बोध्यम् । नन्वाकाशस्य विभुत्वेन सार्वदिकतत्प्रत्यक्षापत्तिरिति चेत्तत्राह—**निमित्तमित्यादि** । **द्वितीय इति** । विभागजे इत्यर्थः । **वंशदलाकाशविभागेत्यादि** । वंशदलाभ्यामाकाशविभागेत्यर्थः । संश्लिष्टावच्छिन्नस्येदानीं दलद्वयावच्छिन्नत्वात् । नतु वंशदलाकाशयोर्विभाग इति । विभुत्वानुपपत्तेरितिभावः । **पूर्वशब्देत्यादिः** । इदं वीचीतरङ्गन्यायेन शब्दसाक्षात्काराङ्गीकारेण । **प्रत्यक्षसिद्धत्वसूचनायेति** । मानसिकप्रत्यक्षविषयत्वद्योतनायेत्यर्थः । **स्वरूपकथनमिति** । न तु व्यावर्त-

१ भेर्याकाश ।

मित्यर्थः । बुद्धिं विभजते—सेति ॥ स्मृतेर्लक्षणमाह—संस्कारेति । भावनाख्यः संस्कारः ॥ संस्कारध्वंसेऽतिव्याप्तिवारणाय ज्ञानमिति ॥ घटादिप्रत्यक्षेऽतिव्याप्तिवारणाय संस्कारजन्यमिति ॥ प्रत्यभिज्ञायामतिव्याप्तिवारणाय मात्रेति ॥

**तद्भिन्नं ज्ञानमनुभवः ॥ स द्विविधः—यथार्थोऽयथार्थश्चेति ॥ तद्वति तत्प्रकारकोऽनुभवो यथार्थः ॥ यथा 'अयं घटः' इति ज्ञानम् ॥ सैव प्रमेत्युच्यते ॥**

## नीलकण्ठी.

संस्कारस्य त्रिविधत्वादाह–**भावनाख्य इति** ॥ **प्रत्यभिज्ञायामतिव्याप्तिरिति** ॥ 'सोयं देवदत्तः' इत्याद्याकारकप्रत्यभिज्ञायां तत्तद्देशकालवृत्तित्वरूपतत्तत्संस्कारजन्यत्वस्य सत्त्वेन तत्रातिव्याप्तिरिति भावः ॥ **मात्रेतीति** ॥ यद्यपि संस्कारमात्रजन्यत्वं संस्कारेतराजन्यत्वे सति संस्कारजन्यत्वम् । तच्च स्मृतावसंभवि । तत्र संस्कारेतरात्मादिजन्यत्वस्य सत्त्वात् । तथापि चक्षुराद्यजन्यत्वे सति संस्कारजन्यत्वे तात्प-

## भास्करोदयाख्यव्याख्या.

कमिति भावः । **संस्कारस्य त्रिविधत्वादिति** । वेगत्वभावनात्वस्थितिस्थापकत्वधर्मैरिति भावः । **सोऽयमित्यादि** । तच्छब्दस्य बुद्धिविशेषविषयत्वोपलक्षितनानाधर्मावच्छिन्ने शक्तिः । बुद्धिविषयत्वस्य बुद्धिविषयनानाधर्मानुगतधर्मत्वेनानुगमकरूपत्वेनैकत्वान्न नानार्थत्वम् । उपलक्षितत्वोक्त्या नानाधर्माणां न शाब्दविषयत्वम् । तथाच तच्छब्देन तत्तद्देशकालवृत्तित्ववतो बोधः । इदमः सन्निकृष्टे शक्तिः । तथाच सन्निकृष्टे इदम्पदवाच्ये तच्छब्दवाच्याभेदान्वयबोधात्प्रत्यभिज्ञायां तत्तत्संस्कारजन्यत्वमावश्यकम् । अन्यथाऽभेदानुपपत्तिः । अभेदस्य धर्मैक्यज्ञानमूलकधर्म्यैक्यबोधकत्वात्प्रत्यभिज्ञायामतिव्याप्तिरिति भाव इत्यलम् ॥ भक्षितेऽपिलशुनन्यायेनाक्षिपति—**यद्यपीति । चक्षुराद्यजन्यत्वे सतीत्यादि** । मात्रपदेनाव्याप्तिवारणतात्पर्यानुपपत्तिमूलिकात्रार्थे मात्रपदस्य लक्षणेति भावः । यत्त्वत्र केचिद्घटगोचरस्मृतिं प्रति घटगोचरज्ञानत्वेनैव हेतुत्वे संभवति, घटगोचरसंस्कारत्वेन संस्कारस्य हेतुत्वाङ्गीकारे मानाभाव इत्याहुस्तन्न विचारसहम् । घटविषयकनिर्विकल्पकज्ञानादपि स्मरणापत्तेः । सावच्छिन्नवृत्तिज्ञानत्वेनैतद्वारणेऽपि द्रव्यत्वेन प्रमेयत्वादिना वा घटादिज्ञानात् घटत्वेन स्मरणापत्तिः । घटत्वेन ज्ञानस्य घटत्वेन स्मृतिहेतुतामाश्रित्य वारणं त्वसंभवि । घटत्वेन पटादिभ्रममादाय घटत्वेन घटस्मरणापत्तेरप्रत्यच्युतत्वाद्घटत्वेन घटस्मरणं प्रति घटत्वेन घटज्ञानस्य हेतुता वाच्या, स्वजन्यसंस्कारप्रत्यासत्त्या । एवं च तथाविधसंस्कारत्वेन तथाविधस्मृतित्वेन तयोः कार्यकारणभावः पर्यवसन्नस्तेन न पूर्वोक्तदोषावसरः । नचोपेक्षाज्ञानात्स्मरणापत्तिः । उपेक्षान्यज्ञानत्वेन हेतुत्वकल्पनादिति चेन्न । उपेक्षान्यत्वस्य दुर्वचत्वात् । नचोपेक्षात्वं जातिः । चाक्षुषत्वादिना सांकर्यात् । नापि संस्काराजनकत्वम् । उपेक्षाज्ञानव्यावृत्तसंस्कारजनकतावच्छेदकधर्माभावात् । नच ज्ञानन-

अनुभवं लक्षयति—तद्भिन्नमिति ॥ 'स्मृतिभिन्नं ज्ञानमनुभवः' इत्यर्थः। अनुभवं विभजते—स द्विविध इति ॥ यथार्थानुभवं लक्षयति—तद्वतीति॥ननु

## नीलकण्ठी.

र्यमवसेयम् ॥ मूले—तद्वति तत्प्रकारकोऽनुभव इति ॥ सप्तम्यर्थो विशेष्यत्वम् आश्रयतासंबन्धेनानुभवान्वयि ॥ तथाच तद्वद्विशेष्यकतत्प्रकारकानुभवत्वं यथार्थानुभवस्य लक्षणम् ॥ तत्पदार्थः प्रकारः तद्वत्त्वं प्रकारतावच्छेदकसंबन्धेन ग्राह्यम् ॥ तेन कालिकसंबन्धेन शुक्त्यादौ रजतत्वसत्त्वेपि 'इदं रजतम्' इति भ्रमे नातिव्याप्तिः ॥ नच तथापि रङ्गत्वेन रजतावगाहिनि रजतत्वेन च रङ्गावगाहिनि 'इमे रङ्गरजते' इत्याकारकसमूहालम्बनभ्रमेऽतिव्याप्तिः। तत्र रङ्गविशेष्यकत्वरङ्गत्वप्रकारकत्वयोः, रजतविशेष्यकत्व-

## भास्करोदयाख्यव्याख्या.

ष्ठतत्तद्व्यक्तित्वं संस्कारजनकतावच्छेदकं, तादृशजनकतासंबन्धेन संस्कारवदन्यत्वमेवोपेक्षात्वम्। तथाच तादृशसंबन्धेन संस्कारवत्त्वेनैव हेतुत्वं पर्यवसितमिति वाच्यम्। अननुगतजनकताकूटघटितत्वेन कारणतावच्छेदकस्याननुगमात्। अतोऽनायत्या प्रातिस्विकेनैव रूपेणैवोपेक्षात्मकज्ञानव्यक्तीनां भेदकूटः कारणतावच्छेदककूटे निवेश्यते। तेन संस्कारं प्रति स्मृतिजनकत्वेन जनकत्वे ज्ञानस्य स्मृतिजनकताज्ञानाधीनं संस्कारजनकताज्ञानं, संस्कारजनकताज्ञानाधीनमेव स्वजन्यसंस्कारसंबन्धेन स्मृतिजनकताज्ञानमित्यन्योन्याश्रयप्रसङ्गोऽपि नेति दिक्। केचित्त्वनुभवध्वंसस्य व्यापारत्वेनैव निर्वाहे संस्कारो नावश्यकः। नच स्मृतिप्रतिबन्धकत्वापत्तिः, कारणीभूताभावस्यैव प्रतिबन्धकत्वादिति वाच्यम्। संसर्गत्वाभावत्वावच्छिन्नायाः अभावत्वावच्छिन्नाया वा जनकतायाः प्रतियोगितावच्छेदकत्वसंबन्धेनावच्छेदको यो धर्मस्तदवच्छिन्नस्य प्रतिबन्धकपदार्थत्वात्। अत्र चाभावत्वेनाजनकत्वादित्याहुस्तन्मन्दम्। संस्कारानभ्युपगमे उपेक्षात्मकज्ञानात्स्मरणापत्तेरुक्तदोषस्य दुर्निवारत्वात्। एवं विपरीतज्ञाननाश्यतयापि संस्कारोऽनुभवसिद्धः। अन्यथा विपरीतज्ञानोत्तरमपि अनुभवध्वंसत्वेन स्मरणापत्तेः। मम तु विपरीतज्ञानेन संस्कारनाशात्संस्काररूपकारणविरहादेव स्मरणवारणादित्यलम्। उपकाराय विवृणोति—**मूलेत्यादि**। **सप्तम्यर्थः** तद्वत्प्रकृतिकसप्तमीलक्ष्यार्थः। तद्वद्विशेष्यित्वं तद्वन्निष्ठविशेषणतानिरूपितविशेष्यताश्रयत्वम् एतच्च ज्ञानवृत्त्यतः **आश्रयतासंबन्धेनानुभवान्वयीति**। तत्प्रकारकत्वमित्यत्र तच्छब्दार्थः घटत्वादिः प्रकारः विषयितासंबन्धेन स प्रकारो यस्मिन्स तत्प्रकारकस्तस्य भावस्तत्प्रकारकत्वम् तदाश्रयश्चानुभवान्वयीति बोध्यम्। **तत्पदार्थः प्रकार इति**। पूर्वोत्तरतत्पदार्थ इत्यर्थः। **तद्वत्त्वमित्यादि**। **तद्वत्त्वं** प्रकारतावत्त्वं **प्रकारतावच्छेदकसंबन्धेन** येन संबन्धेन प्रकारः विशेष्ये वास्तविकः स सम्बन्धः प्रकारतावच्छेदकः तेन समवायलक्षणेन ग्राह्यं विशेषणीयमिति समुदितार्थः। तत्फलम् दर्शयति—**तेनेत्यादि**। तद्विशेष्यकतत्प्रकारकानुभवत्वरूपयथार्थानुभवलक्षणस्य समूहालम्बनात्मकभ्रमेऽतिव्याप्तिमाशङ्कते—**नचेति**। अतिव्याप्ति-

'घटे घटत्वम्' इति प्रमायामव्याप्तिः, घटत्वे घटाभावादिति चेत् ॥ न ॥ 'यत्र यत्संबन्धोस्ति तत्र तत्संबन्धानुभवः' इत्यर्थात् घटत्वेपि घटसंबन्धोस्ति इति नाव्याप्तिः ॥ सैवेति ॥ यथार्थानुभव एव शास्त्रे 'प्रमा' इत्युच्यते इत्यर्थः ॥

**तदभाववति तत्प्रकारकश्चायथार्थः ॥**

---

## नीलकण्ठी.

रजतत्वप्रकारकत्वयोश्च सत्वादिति वाच्यम् । तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वविशिष्टानुभवत्वरूपार्थविवक्षणेनादोषात् ॥ तथाहि 'ययोर्विषयतयोर्निरूप्यनिरूपकभावः तन्निरूपितविषयितयोरेवावच्छेद्यावच्छेदकभाव' इति सिद्धान्तः ॥ दर्शितभ्रमे रङ्गत्वप्रकारतायां रंगविशेष्यतानिरूपितत्वस्य, रजतत्वप्रकारतायां च रजतविशेष्यतानिरूपितत्वस्य, असत्त्वेन रंगविशेष्यकत्वावच्छिन्नरङ्गत्वप्रकारकत्वरजतविशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वयोरभावात् नातिव्याप्तिः ॥ स्मृतिव्यावृत्तयेऽनुभवत्वनिवेशः ॥ एतत्फलमनुपदं स्फुटीभविष्यति ॥ ननु तद्वतीत्यस्य 'तदधिकरणे' इत्यर्थकतया 'घटे घटत्वम्' इति प्रमायामव्याप्तिः । आधेयताया वृत्त्यनियामकतया तेन सम्बन्धेन घटरूपप्रकाराधिकरणाप्रसिद्धेरित्याशयेन शङ्कते **ननु घटे घटत्वमितीति** ॥ तद्वतीत्यस्य तत्संवन्धिनीत्यर्थः ॥ एवं च घटत्वस्यापि घटसंवन्धितया तादृशप्रमायाम् आधेयतया घटसंवन्धिघटत्वविशेष्यकत्वावच्छिन्नघटप्रकारकत्वस्य सद्भावात् नाव्याप्तिरिति समाधत्ते **यत्रेति** ॥ 'यथार्थानुभव एव' इत्येवकारेण यथार्थस्मृतिव्यवच्छेदः ॥ यथार्थज्ञानमात्रस्य प्रमात्वे स्मृतिकरणस्य प्रमाणान्तरतापत्तेरिति भावः ॥

## भास्करोदयाख्यव्याख्या.

मुपपादयति—**तत्रेत्यादि** । समूहालम्बनात्मकभ्रमश्चेमे रङ्गरजते इति रङ्गत्वरजतत्वोभयप्रकारको रङ्गरजतोभयविशेष्यकश्च, भ्रमत्वं रङ्गत्वेन मलिनचाकचक्यप्रयुक्तरजतावगाहनात् । रजतत्वेनातिचाकचक्यप्रयुक्तरङ्गावगाहनादिति । अतिव्याप्तिं वारयति—**तद्वदित्यादि** । तद्धर्मावच्छिन्नविशेष्यतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छेद्यतावत्तत्प्रकारकत्वरूपविषयित्वधर्मविशिष्टानुभवत्वरूपानुभवार्थविवक्षणेनादोषादुक्तसमूहालम्बनात्मकभ्रमातिव्याप्तिदोषाभावादिति समुदितार्थः । स्पष्टप्रतिपत्तये विवक्षितार्थतात्पर्यं समूलकत्वेन विशदयति—**तथाहीति** । उक्तार्थविवक्षयाऽतिव्याप्तिवारणं विशदयति—**दर्शितेत्यादिना** । **एतत्फलमिति** । यथार्थलक्षणेऽनुभवत्वविशेषणफलमित्यर्थः । घटे घटत्वमिति प्रमायाः घटत्ववद्घटविशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वविशिष्टानुभवत्वेनाव्याप्तिकथनासङ्गतेरव्याप्तिशङ्काशयं वर्णयन् स्वयमव्याप्तिमाशङ्कते—**नन्विति** । अत्राव्याप्तिवारणाय तद्वतीत्यस्य लक्षणया तत्संवन्धिनीत्यर्थकत्वं वोध्यम् । तथाच तद्वत्संबन्धिविशेष्यकत्वावच्छिन्नतत्प्रकारकत्वविशिष्टानुभवत्वरूपपर्यवसितलक्षणमुक्ताव्याप्तिवारकतया समन्वयति—**एवं चेति** । नन्वेवकाराभावे स्मृतेः प्रमात्वे का हानिरित्याशङ्क्य दोषमाह—**स्मृतिकरणस्य प्रमाणान्तरतापत्तेरिति** । स्मृतौ करणस्य संस्कारस्य प्रमितिकरणत्वेन पञ्चम-

अयथार्थानुभवं निरूपयति—तदभाववतीति । ननु 'इदं संयोगि' इति प्रमायामतिव्याप्तिः इति चेत् ॥ न ॥ यदवच्छेदेन यत्संबन्धाभावः, तदवच्छेदेन तत्संबन्धज्ञानस्य विवक्षितत्वात् ॥ संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वात् संयोगावच्छेदेन संयोगसंबन्धस्य सत्त्वात् नातिव्याप्तिः ॥

## नीलकण्ठी.

**अतिव्याप्तिरिति** ॥ संयोगाभाववति संयोगप्रकारकत्वसत्त्वादिति भावः ॥ **यदवच्छेदेनेति** ॥ यदवच्छेदेन यत् संबन्धावच्छिन्नप्रतियोगिताकयदभावः ॥ **तदवच्छेदेनेति** ॥ तेन संबन्धेन तत्प्रकारकानुभवस्य विवक्षितत्वादित्यर्थः ॥ **संयोगाभावावच्छेदेनेति** ॥ संयोगाभावावच्छेदकावच्छेदेनेत्यर्थः ॥ **संयोगावच्छेदेनेति** ॥ संयोगावच्छेदकावच्छेदेन ॥ **संयोगसंबन्धस्येति** ॥ समवायसंबन्धेन संयोगस्येत्यर्थः ॥ अत्रेदमवधेयम् ॥ इदमव्याप्यवृत्तिसंयोगादिप्रकारकभ्रमानुरोधेन ॥ व्याप्यवृत्तिरजतत्वादिप्रकारकभ्रमलक्षणं तु तत्संबन्धावच्छिन्नप्रतियोगिताकतदभाववान्यस्तद्वद्विशेष्यकत्वावच्छिन्नतत्संबन्धावच्छिन्नतत्प्रकारकत्वविशिष्टानुभवत्वम् ॥ प्रतियोगितायां प्रकारतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशात् 'पर्वतो वह्निमान्' इति प्रमायां समवायावच्छिन्नवह्न्यभाववत्पर्वतविशेष्यकत्वसत्त्वेपि नातिव्याप्तिः ॥ विशेष्यित्वप्रकारित्वयोरवच्छेद्यावच्छेदकभावविवक्षणेन 'इमे रङ्गरजते' इत्याकारकप्रमायां रङ्गत्वाद्यभाववद्रज-

## भास्करोदयाख्यव्याख्या.

तापत्तेरिति हृदयम् । **अतिव्याप्तिरितीति** । अतिप्याप्त्याशयं वर्णयति—**संयोगाभाववतीत्यादिना** । मूलावच्छेदेन संयोगाभाववति वृक्षे संयोगप्रकारकत्वसत्त्वात् मूलावच्छिन्नकपिसंयोगाभाववान् वृक्षोऽग्रावच्छिन्नकपिसंयोगीति प्रत्यादिति भावः । मूलोक्तयथाश्रुतार्थविवक्षायामग्रावच्छेदेन कालिकेन संयोगाभावमादाय मूलावच्छेदेन कालिकेन संयोगमादायाग्रावच्छिन्नो वृक्षः संयोगाभाववान् मूलावच्छिन्नो वृक्षः संयोगवान् इत्यनुभवयोर्यथार्थत्वापत्तेः । प्रतियोगिव्यधिकरणाभावबोधकसमवायादिसंबन्धस्फोरकसंबन्धैक्यघटितं लक्षणं परिष्करोति—**यदवच्छेदेत्यादिना** । संयोगाभावस्य संयोगावच्छेदकत्वासंभवात् । तत्फलितमर्थमाह—**संयोगेत्यादि—इदमिति** । 'इदं संयोगि' इति प्रमायामतिव्याप्तिवारकं यदवच्छेदेनेत्याद्यवच्छेदकगर्भं परिष्कृतमयथार्थानुभवलक्षणम् । **अव्याप्यवृत्तिसंयोगादिप्रकारकभ्रमानुरोधेनेति** । व्याप्यवृत्तिकभ्रमस्य निरवच्छिन्नवृत्तिकत्वात्तदनुरोधेनायथार्थानुभवलक्षणमन्यत्परिष्करणीयमित्याह—**व्याप्यवृत्तीत्यादि** । तथाहि **तत्संबन्धावच्छिन्नेत्यादि** । तत्संबन्धः येन संबन्धेन यदभावो वास्तविकः स इत्यर्थः । तथाच समवायसंबन्धेन रजतत्वाभाववद्रङ्गं तद्विशेष्यकत्वावच्छिन्नं तत्संबन्धावच्छिन्नतत्प्रकारताकत्वमित्यन्वयः । अत्रापि तत्संबन्धपदेन समवाय एव विवक्षितः । अन्यत्सर्वं पूर्ववत् । **विशेष्यित्वप्रकारित्वयोरित्यादि** । विशेष्यित्वप्रकारित्वे विषयिताविशेषौ । **इमे रङ्गरजते, इत्याकारकप्रमायां** समूहालम्बनात्मकप्रमायाम् ।

## नीलकण्ठी.

तादिविशेष्यकत्वरङ्गत्वादिप्रकारकत्वयोः सत्त्वेऽपि नातिव्याप्तिरित्यलमतिविस्तरेण ॥

## भास्करोदयाख्यव्याख्या.

**नातिव्याप्तिरिति ।** रजतत्वरजतत्वाभाववद्रङ्गीयविषयतयोः प्रकारताख्यविशेष्यताख्ययोः परस्परं निरूप्यनिरूपकभावाभावात्तन्निरूपितप्रकारिताविशेष्यिताख्यविषयितयोरप्यवच्छेद्यावच्छेदकभावाभावादिति भावः ॥ **(अथ लोहितवादः ।)** अथ जपाकुसुमसान्निध्यात्स्फटिके लौहित्यप्रतीतेः स्फटिको लोहित इति ज्ञानस्य भ्रमात्मकतया सर्वानुभवविषयत्वात् भ्रमस्याधिष्ठानज्ञाननिवर्त्यत्वस्वाभाव्यात्प्रकृते स्फटिकरूपाधिष्ठानज्ञाने स्फटिको लोहित इति ज्ञानस्य कथं भ्रमत्वमिति चेन्न । आरोप्यमाणधर्मविरुद्धधर्मप्रकारकाधिष्ठानज्ञानस्यैव भ्रमनिवर्तकत्वाच्छुक्त्यादौ नीलपृष्ठत्वादिप्रकारेण शुक्त्यादिज्ञानस्यैव रजतभ्रमनिवर्तकत्वानुभवात् । नच प्रकृत इव शुक्तिरियं रजतमित्याकारकत्वं भ्रमस्य कुतो नेति वाच्यम् । चाकचक्यातिशयेन रजतत्वप्रकारेण शुक्तिविशेष्यकेदं रजतमित्याकारकस्यैवानुभवात् । प्रकृते तु स्फटिकत्वरूपसामान्यधर्मावच्छिन्ने लोहितत्वधर्मप्रकारेण ज्ञानविषयत्वाद्भ्रामत्वानुभवाद्भ्रमस्य केवलं तद्धर्माभाववति तद्धर्मप्रकारकज्ञानरूपत्वेनाविशेषात् । नन्वेवमपि स्फटिके जपाकुसुमादिसान्निध्यादिरूपदोषसत्त्वदशायां सत्यपि चक्षुःसंयोगे कुतो न तद्वृत्तिशुक्लरूपे तद्वृत्तिद्रव्यत्वस्फटिकत्वादाविव द्रव्यसमवेतनिष्ठलौकिकविषयतया चाक्षुषोत्पत्तिः । चक्षुःसंयुक्तसमवायस्याविशेषात् । कुतो वा तादृशदोषविशिष्टस्फटिकमात्रचक्षुःसंयोगदशायां न तत्समवेतगुणावृत्तिरूपत्वगुणत्वसंख्यात्वादाविव तत्समवेतरूपनिष्ठे शुक्लत्वे शुक्लत्वव्याप्यजातिविशेषे वा लौकिकविषयतया द्रव्यसमवेतसमवेतनिष्ठलौकिकविषयतया वा चाक्षुषोत्पत्तिः । चक्षुःसमवेतसमवायस्याप्यविशेषात् । नच शुक्लरूपाविषयकशुक्लत्वादिचाक्षुषस्यालीकतया शुक्लरूपविषयकचाक्षुषसामग्रीविरहादेव शुक्लत्वादिचाक्षुषासंभवेन द्वितीयप्रश्नोऽसङ्गत इति वाच्यम् । तथापि शुक्लत्वादौ तादृशलौकिकविषयतया चाक्षुषसामान्यापत्तेर्दुर्वारत्वात् । शुक्लरूपविषयकचाक्षुषसामग्रीविरहादेव तादृशसामान्यकार्योत्पादासंभवे रूपत्वगुणत्वसंख्यात्वादेरपि तदानीं तादृशसामान्यकार्यानुत्पादापत्तेरिति । **अत्रोच्यते ।** यदि तदानीं स्फटिकनिष्ठशुक्लरूपस्य न चाक्षुषमिति मतं तदा द्रव्यसमवेतत्वविशिष्टा वस्तुगत्या द्रव्यसमवेतनिष्ठा या लौकिकविषयता तत्संबन्धेन चाक्षुषोत्पत्तिं प्रति स्वाश्रयसमवेतत्वविशिष्टविलक्षणरूपत्वसंबन्धेन जपाकुसुमसांनिध्यस्य प्रतिबन्धकत्वमुपेयं जपाकुसुमसांनिध्यं च लौकिकविषयतासंबन्धेन जपाकुसुमनिष्ठलौहित्यप्रकारकचाक्षुषभ्रमवत्त्वं स्वाश्रयसमवेतत्वमात्रस्य संबन्धत्वे स्फटिकत्वद्रव्यत्वादेः स्फटिकवृत्तिसंख्यापरिमाणादेश्च चाक्षुषं न स्यात् । न स्याच्च जपाकुसुमसान्निध्यदशायां पटादेरपि शुक्लत्वरूपत्वग्रह इति तद्विशिष्टविलक्षणरूपत्वप्रवेशः । वैलक्षण्यं च, स्फटिकरूपमात्रवृत्तिशुक्लत्वव्याप्यजातिविशेषः । सामा-

## भास्करोदयाख्यव्याख्या.

नाधिकरण्यं वैशिष्ट्यमनयोर्विशेषणविशेष्यभावे विनिगमकाभावेन प्रतिवन्धकाभावाद्वयमिष्यत एव । अथवा एकत्र द्वयमिति न्यायेन स्वाश्रयसमवेतत्वस्वस्ववृत्तिविलक्षणरूपत्वोभयसंवन्धः स्ववृत्तित्वं च कालिकविशेषणतासंबन्धेन । अथ स्फटिकरूपत्वविशिष्टा वस्तुगत्या स्फटिकरूपनिष्ठा वा या लौकिकविषयतां तत्संवन्धेन चाक्षुषोत्पत्तिं प्रति स्वाश्रयसमवेतत्वसंवन्धेन जपाकुसुमस्य सान्निध्यप्रतिवन्धकत्वमित्येवोच्यतां लाघवादिति चेन्न । जपाकुसुमसान्निध्याभावदशायां स्फटिकवृत्तिसंयोगादौ तत्संवन्धेन चाक्षुषोत्पत्तिप्रसंगात् । रूपादिस्थले विषयस्य तत्तद्व्यक्तित्वेन हेतुत्वस्य केनाप्यनभ्युपगमात् । तावता जपाकुसुमसान्निध्यदशायां स्फटिकरूपस्य लौकिकविषयतासंवन्धेन चाक्षुषोत्पत्तिप्रसङ्गस्य दुर्वारत्वात् । नच स्फटिकरूपे लौकिकविषयतासंवन्धेन चाक्षुषोत्पत्तिं प्रति तादात्म्यसंवन्धेनं स्फटिकवृत्तित्वविशिष्टरूपत्वेन एकत्र द्वयमिति रीत्या स्फटिकवृत्तित्वरूपत्वोभयरूपेण विलक्षणरूपत्वेन कारणत्वान्नाद्यो दोषः । न वा द्वितीयः । स्फटिकेतरवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषोत्पत्तिं प्रति तादात्म्यसंवन्धेन स्फटिकवृत्तिरूपत्वेन एकत्र द्वयमिति रीत्या स्फटिकवृत्तित्वरूपत्वोभयरूपेण विलक्षणरूपत्वेन प्रतिवन्धकतया यावद्विशेषसामग्र्यभावादिति वाच्यम् । गौरवापत्तेः । जपाकुसुमसन्निहितस्फटिकमात्रचक्षुःसंयोगदशायां शुक्लत्वतद्व्याप्यवैजात्ययोः प्रत्यक्षवारणार्थं तु शुक्लान्यासमवेतजातिप्रत्यक्षं प्रति जपाकुसुमसान्निध्यविशिष्टस्फटिकत्वाभाववच्चक्षुःसंयुक्तसमवेतसमवायः पृथक् सन्निकर्षो वा वाच्यः । नच तद्वारणार्थं तादृशजातिप्रत्यक्षं प्रति स्वाश्रयीभूतस्फटिकसमवेतसमवेतत्वसंवन्धेन जपाकुसुमसांनिध्यमेव विषयनिष्ठतया प्रतिवन्धकमुपेयतां लाघवादिति वाच्यम् । तथासत्येकस्मिन्स्फटिके जपाकुसुमसांनिध्यदशायां तदसंनिहितस्फटिकसंयोगादेरपि शुक्लत्वादेः साक्षात्कारानुत्पादापत्तेः । नच तथापि जपाकुसुमसंनिहितस्फटिकमात्रसंनिकर्षदशायां शुक्लमात्रसमवेतजातिप्रत्यक्षं मास्तु सामान्यसामग्रीमर्यादया शुक्लत्वादौ द्रव्यसमवेतसमवेतत्वविशिष्टलौकिकविषयतासंवन्धेन चाक्षुषसामान्यापत्तिर्दुर्वारेति वाच्यम् । शुक्लान्यसमवेतत्वसंवन्धेन शुक्लान्यत्वेन वा हेतुतया तद्विशेषसामग्रीवाधादेव सामान्यकार्यानुत्पादात् । यदि च जपासंनिहितस्फटिकस्यापि रूपं संगृह्यत एव, परंतु शुक्लत्वंतद्व्याप्यवैजात्यं च न गृह्यते तदा तादृशस्फटिकरूपविषयतानिरूपितविषयतासंवन्धेन चाक्षुषोत्पत्तिं प्रति स्वाश्रयसमवेतसमवेतत्वसंवन्धेन जपासान्निध्यस्य प्रतिवन्धकत्वं, पूर्ववत् सामान्यतस्तादृशजातिप्रत्यक्षं प्रति जपासान्निध्यविशिष्टस्फटिकत्वाभाववच्चक्षुःसंयुक्तसमवेतसमवायस्य पृथक् सन्निकर्षहेतुतयोपेयम् । द्रव्यसमवेतसमवेतनिष्ठलौकिकविषयतासामान्येन चाक्षुषापत्तिवारणमपि पूर्ववत् । प्रतिवध्यप्रतिवन्धकभावाच्च न जपासांनिध्यरहितस्फटिकान्तरघटितसंनिकर्षेणापि तत्संनिहितस्फटिकरूपे शुक्लत्वतद्वैजात्ययोः प्रत्यक्षम् । नच प्रतिबध्यप्रतिवन्धकभाव एवास्तु किं संनिकर्षकल्पनेन । व्यक्तेर्निर्विकल्पकविषयत्वस्यापि

**यथार्थानुभवश्चतुर्विधः–प्रत्यक्षानुमित्युपमितिशाब्दभेदात् ।**
**तत्करणमपि चतुर्विधम्—प्रत्यक्षानुमानोपमानशब्दभेदात् ॥**

यथार्थानुभवं विभजते—यथार्थेति ॥ प्रसङ्गात् प्रमाकरणं विभजते—तत्करणमिति ॥ प्रमाकरणमित्यर्थः॥ प्रमायाः करणं प्रमाणमिति प्रमाणसामान्यलक्षणम् ॥

**असाधारणं कारणं करणम् ॥**

करणलक्षणमाह—असाधारणेति ॥ साधारणकारणे दिक्कालादावतिव्याप्तिवारणाय असाधारणेति ॥

---

## नीलकण्ठी.

**प्रसङ्गादिति** ॥ स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः, तस्मादित्यर्थः ॥ सामान्यतोऽवगतस्यैव विशेषरूपेण प्रतिपादनं संभवतीति सामान्यलक्षणं स्फुटयति–**प्रमायाः करणं प्रमाणमिति** ॥

**असाधारणेतीति** ॥ दिक्कालादृष्टादेः कार्यत्वावच्छिन्नं प्रत्येव कारणत्वात् ॥

## भास्करोदयाख्यव्याख्या.

जातिनिरूपिततया निरुक्तप्रतिबध्यप्रतिबन्धकभावेनैव जपासन्निहितस्फटिकमात्रचक्षुःसंयोगदशायां शुक्लत्वादिनिर्विकल्पविषयत्वस्यापि व्युदाससंभवादिति वाच्यम् । जातिव्यक्तिनिर्विकल्पकविषयतयोः परस्परनिरूपितनिरूपकभावे मानाभावात् । किं तु जातिव्यक्त्योरुभयनिष्ठा एकैव निर्विकल्पकविषयता लाघवात् । अकरणस्य च निरूपकत्वात् । नचैवं तद्वति तदनुभवस्तत्प्रमेति लक्षणे 'एतच्च निर्विकल्पकसाधारणमिति' मिश्रलेखनविरोधः । तद्वन्निरूपिततन्निष्ठविषयताप्रतियोग्यनुभवस्तत्प्रमेति लक्षणवाक्यार्थादिति वाच्यम् । एतच्च निर्विकल्पकसाधारणं तदप्रकारकज्ञानसाधारणं तद्विशेष्यकतत्संसर्गक इति ज्ञानसाधारणमिति यावत् इति क्रमेण तल्लेखनस्य व्याख्येयत्वात् । प्रकृते पृथक्सन्निकर्षकल्पनाभयेन निरूप्यनिरूपकभावाभ्युपगमेऽपि विना शुक्लान्यसमवेतजातिप्रत्यक्षं प्रति तादृशसमवायस्य पृथक्संनिकर्षस्य जपानिहितस्फटिकमात्रसंनिहितदशायां सामान्यसामग्रीमर्यादया शुक्लत्वे द्रव्यसमवेतनिष्ठलौकिकविषयतया सामान्येन चाक्षुषापत्तेर्दुर्वारत्वाच्च । जपातादृशजातिनिष्ठविषयतानिरूपितस्फटिकरूपनिष्ठविषयतासंबन्धेन चाक्षुषोत्पत्तिं प्रत्येव जपासांनिध्यप्रतिबन्धकतया यावद्विशेषसामग्रीबाधेन तदनुत्पादस्य वक्तुमशक्यत्वात् । एतेन विषयनिष्ठदोषान्तरस्यापि रूपादिग्रहप्रतिबन्धकत्वमिति समासः[१] ॥ **(इति लोहितवादः) प्रसङ्गादितीति** । प्रसङ्गसङ्गतेरित्यर्थः । **स्मृतस्येत्यादि** । स्मृतस्य स्मृतिविषयस्य उपेक्षानर्हत्वम् उपेक्षाऽयोग्यत्वेन निरूपणविषयत्वं प्रसङ्गः प्रसङ्गरूपा सङ्गतिः तस्मात्तत इत्यर्थः । **सामान्यतोऽवगतस्येत्यादि** । सामान्यतोऽवगतस्य सामान्यधर्मप्रकारेण ज्ञानविषयस्य विशेषरूपेण विशेषधर्मप्रकारेण प्रतिपादनं संभवति अन्यथा तज्जिज्ञासानुदयात्तदसंभव इति भावः ।

---

१ संक्षेपः ।

**कार्यनियतपूर्ववृत्ति कारणम् ॥**

कारणलक्षणमाह—कार्येति ॥ 'पूर्ववृत्तिकारणम्' इत्युक्ते रासभादौ अति-

## नीलकण्ठी.

अनुभवत्वव्याप्यधर्मावच्छिन्नप्रमावृत्तिकार्यतानिरूपितकारणत्वरूपासाधारणकारणत्वस्य तत्रासत्त्वात् नातिव्याप्तिः ॥ प्राचीनास्तु 'व्यापारवत्त्वे सति' इत्यपि वक्तव्यम्। अतश्चक्षुःसंयोगादौ नातिव्याप्तिः । श्रोत्रमनःसंयोगः, शब्दो वा व्यापारः संभवत्येवेति न श्रोत्रेन्द्रिये करणलक्षणाव्याप्तिरिति वदन्ति ॥ यद्विलम्बात्प्रकृतकार्यानुत्पादः तत्कारणत्वस्यासाधारणत्वात्मकतया कालादिषु तादृशकारणत्वाभावान्नातिव्याप्तिः ॥ व्यापारत्वेनाभिमतेन्द्रियसंयोगादिकमेव करणम् ॥ एतत् च 'लिङ्गपरामर्शोऽनुमानम्' इति मूल एव स्फुटीभविष्यति ॥ अत एव मणिकारैरप्युक्तं 'तच्च लिंगपरामर्शः' इति ग्रन्थेनेति तु नव्याः ॥ अधिकमस्मदीयमणिप्रभायामनुसंधेयम् ॥

## भास्करोदयाख्यव्याख्या.

असाधारणत्वनिवेशेन साधारणकारणदिक्कालादृष्टात्मस्वतिव्याप्तिं परिहरति—**अनुभवत्वव्याप्येत्यादिना** । अनुभवत्वव्याप्यो धर्मः प्रत्यक्षत्वादिरूपस्तद्धर्मावच्छिन्ना या प्रत्यक्षादिरूपा प्रमा यथार्थज्ञानं तत्तद्वृत्तिकार्यतामात्रनिरूपितकारणत्वमित्याद्यर्थः । एतेनेन्द्रियानुमानोपमानशब्दज्ञानानां परस्परव्यभिचारः । **व्यापारवत्त्वे सतीत्यादि** । असाधारणकारणलक्षणशरीरेत्यादिः । **चक्षुःसंयोगादाविति** । घटचक्षुःसंयोगादावित्यर्थः । शब्दप्रत्यक्षे श्रोत्रस्य व्यापारवत्त्वेन करणत्वं व्यवस्थापयति—**श्रोत्रेत्यादिना** । एवं ह्यत्र क्रमः । आत्मा मनसा युज्यते मन इन्द्रियेणेन्द्रियमर्थेन ततः प्रत्यक्षं, तथाच कर्णशष्कुल्यवच्छिन्ननभोरूपश्रोत्रजन्यत्वाच्छ्रोत्रमनःसंयोगस्य, तथा श्रोत्रजन्यशब्दप्रत्यक्षजनकत्वात्तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारवत्त्वं श्रोत्रे सिध्यतीति भावः । एवंरीत्या शब्दो वा शाब्दप्रमायां व्यापारः संभवत्येवंरीत्या चक्षुरादीनामपि चक्षुर्मनःसंयोगरूपव्यापारवत्त्वेन चाक्षुषप्रमायां करणत्वं बोध्यमिति निष्कृष्टोऽर्थः । असाधारणकारणपदफलितार्थं निष्कृष्योक्तातिप्रसङ्गं वारयति—**यद्धीति** । मतान्तरमुपन्यस्यति—**व्यापारत्वेनेत्यादि** । व्यापारत्वेनोक्तेन्द्रियमनःसंयोगादिकमेव करणपदबोध्यं तन्मते इन्द्रियस्य न करणत्वव्यवहारः । अत्रार्थे एव साधकं वक्ष्यमाणं मूलमित्येतदन्यत्तु प्राचोऽभिप्रायकमिति भावः । अत्रैव नव्यसंमतमपि संगमयति—**अत एवेत्यादिना** । अत एव व्यापारत्वेनाभिमतेन्द्रियसंयोगादेः कारणत्वादेव । **तच्च लिङ्गपरामर्श इति ग्रन्थेन** । तच्च लिङ्गपरामर्शोऽनुमानमित्यन्तेनेत्यर्थः । तच्चानुमानं तु लिङ्गपरामर्शः व्याप्तिप्रकारकपक्षवैशिष्ट्यज्ञानं न तु परामृश्यमाणं लिङ्गमित्यग्रिमेण परामर्शस्य व्यापारतया व्यापारवत्कारणं करणमिति कारणलक्षणं न मणिकाराभिप्रायकमिति नव्या दीधितिकारादय इति समुदितार्थः । **अधिकमस्मदीयेत्यादि** । मणिप्रभायामभिनवदीधितिव्याख्यायां चेत्यर्थः । **तच्चेत्यादि** ।

व्याप्तिः स्यादतो नियतेति ॥ तावन्मात्रे कृते कार्येऽतिव्याप्तिरतः पूर्ववृत्तीति ॥ ननु तन्तुरूपमपि पटं प्रति कारणं स्यादिति चेत् ॥ न ॥ 'अनन्यथासिद्धत्वे सति' इति विशेषणात् ॥ अनन्यथासिद्धत्वम् अन्यथासिद्धिविरहः ॥ अन्यथासिद्धिः

## नीलकण्ठी.

**नियतेति** ॥ नियतत्वं हि व्यापकत्वम् । तच्च रासभादेर्न संभवतीति न तत्र घटकारणत्वातिप्रसक्तिरिति भावः । **पूर्ववृत्तीतीति** ॥ स्वव्यापकत्वस्य स्वस्मिन् सत्त्वेपि स्वपूर्वकालवृत्तित्वस्यासत्त्वेन नातिप्रसंग इति भावः ॥ कार्यतावच्छेदकसंबन्धेन कार्याधिकरणे कार्याव्यवहितप्राक्क्षणावच्छेदेन विद्यमानात्यन्ताभावप्रतियोगितानवच्छेदकतद्धर्मवत्त्वम्, तेन रूपेण कारणत्वमिति समुदितार्थो बोध्यः ॥ **कारणं स्यादिति** । तस्य नियतपूर्ववृत्तित्वादितिभावः ॥ निबन्धान्तरेष्वन्यथासिद्धेः पञ्चविधत्वेपि मणिकारमताभि-

## भास्करोदयाख्यव्याख्या.

तच्च व्यापकत्वरूपनियतत्वं च रासभादेर्न संभवति घटान्तरवन्निष्ठात्यन्ताभावप्रतियोगित्वादिति भावः । **स्वव्यापकत्वस्येत्यादि** । स्वशब्देन कार्यं कार्यव्यापकत्वस्य स्वस्मिन् कार्ये सत्त्वेऽपि कार्ये कार्यस्य तादात्म्येन वृत्तितया तस्य स्वरूपसंबन्धेन तदत्यन्ताभावविरोधितया व्यापकत्वाक्षतत्वात्स्वस्य स्वकारणत्वापत्त्या पूर्ववृत्तित्वनिवेश इति भावः । कार्याधिकरणे कालिकेन कार्याव्यवहितप्राक्क्षणवृत्तित्वविशिष्टकारणात्यन्ताभावं पुरस्कृत्याव्यापकत्वमाक्षिप्य व्यापकत्वकुक्षिनिक्षिप्तकार्याधिकरणतायां तत्तत्कार्यतावच्छेदकसंबन्धाभिनिवेशान्न कारणे कार्याव्यवहितप्राक्क्षणावच्छिन्नाभावप्रतियोगितानवच्छेदकत्वेन व्यापकत्वहानिरिति समुदितार्थः । **निबन्धान्तरेष्विति** । ग्रन्थान्तरेष्वित्यर्थः । **पञ्चविधत्वेऽपीति** । येन सहपूर्वभाव इत्यादि भाषापरिच्छेदप्रसिद्धपञ्चप्रकारत्वेऽपीत्यर्थः । **त्रिविधेतीति** । दण्डत्व-दण्डरूप-आकाश-कुलालजनक-रासभेषु पञ्चसु प्रथमद्वितीययोः प्रथमया तृतीयतुरीययोर्द्वितीयया पञ्चमस्य तु तृतीयया सिद्धेरिति भावः । परंतु तृतीयान्यथासिद्धेः पञ्चमीत्वेन पञ्चम्यैवेतरसिद्धेः पञ्चम्येवावश्यिकीत्युक्तं द्रष्टव्यम् । **( अथ कारणत्ववादः )** अत्रेदं विचार्यते किं तत्कारणत्वं कार्यनियतपूर्ववृत्तित्वं वा १ कार्यनियतपूर्ववृत्तिजातीयत्वं वा २ अनन्यथासिद्धनियतपूर्ववृत्तिजातीयत्वं वा ३, कार्यसहभावे सत्येतदेव वा ४, सहकारिविरहकार्याभाववत्त्वं वा ५, अन्यद्वा । नाद्यः कुम्भकारपितुरपि कुम्भं प्रति कारणत्वप्रसङ्गात् । आकाशादेः कार्यमात्रं प्रति कारणत्वप्रसङ्गाच्च । किं च पूर्ववृत्तित्वं प्रागभावावच्छिन्नसमयवृत्तित्वम् । तथाच तयोरकारणत्वप्रसङ्गात् । नहि प्रागभावावच्छिन्नसमये प्रागभावो वर्तते समये समयो वा । किंचैवं घटादिकं प्रति रासभोऽपि कारणं स्यात् । नह्यनादौ संसारे कस्यापि पूर्वं रासभो न वर्तते, अत एव न द्वितीयः आकाशादेरकारणत्वप्रसङ्गाच्च । नह्याकाशादीनां तज्जातीयत्वेन कारणत्वम् । एकव्यक्तिवृत्तित्वेन तत्र जातेरभावात् । नच जातीयत्वमुपलक्षणम् । उपाधेरपि तदवच्छेदकत्वाभावात् । नह्याकाशादिकारणत्वं केनाऽप्यवच्छिद्यते । नापि तृतीयः । अनन्य-

त्रिविधा—येन सहैव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तत्तेनान्यथासिद्धम् ॥ यथा तन्तुना तन्तुरूपं तन्तुत्वं च पटं प्रति ॥ अन्यं प्रति पूर्ववृत्तित्वे ज्ञात एव

## नीलकण्ठी.

प्रायेणाह–त्रिविधेति ॥ येन सहैवेत्यादि ॥ येन तन्तुना सहैव यस्य तन्तुरूपस्य तन्तुत्वस्य च यं पटं प्रति पूर्ववृत्तित्वमवगम्यते तं पटं प्रति तत् तन्तुरूपं तन्तुत्वं च तेन तन्तुना अन्यथासिद्धमित्यर्थः ॥ अत्र सहितत्वम् एकज्ञानविषयत्वं बोध्यम् ॥ तन्तुरूपस्य पटपूर्ववृत्तित्वज्ञानेऽनतिप्रसक्ततन्तुरूपत्वेनैव विषयता वाच्या ॥ तथा च तन्तुरूपम्

## भास्करोदयाख्यव्याख्या.

थासिद्धत्वं चान्यथासिद्धिविरहः । तथाचान्यथासिद्ध्यनिरूपकत्वं फलितम् । तच्च न प्रसिद्धान्यथासिद्धिपञ्चकानिरूपकत्वम् । तथा सति उत्तरसंयोगं प्रति विभागस्य हेतुतापत्तेः । एवं प्रतिबन्धकाभावस्य तत्तद्व्यक्तित्वेन हेतुत्वापत्तेश्च । अतः कार्याव्यवहितपूर्वक्षणावच्छिन्नकार्यसमानाधिकरणवृत्तित्वविशिष्टस्य सामानाधिकरण्यसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगितानवच्छेदकीभूतो योऽन्यथासिद्ध्यनिरूपकीभूतो धर्मस्तद्वत्त्वम् । अन्यथासिद्ध्यनिरूपकत्वं च यद्धर्मावच्छिन्नं प्रति तद्धर्मव्यापकतावच्छेदकीभूतयद्धर्मावच्छिन्ने प्रामाणिकानां न कारणत्वव्यवहारस्तद्व्यक्तिभेदकूटवत्त्वं विवक्षणीयमेतच्चासंभवि तावद्भेदकूटविशिष्ट–सापेक्षतयेदृशाकारणत्वस्यासर्वज्ञदुर्ज्ञेयत्वापत्तेः । आकाशादेर्जातीयत्वासंभवादव्याप्तेश्च । नापि चतुर्थः । कुलालपितुरकारणत्वाय कार्यसहभावेनेति विशेषणं । तथाच कार्यसहभूतत्वे सति अनन्यथासिद्धनियतपूर्ववृत्तिजातीयत्वं तत्त्वं फलितम् । इत्थं च सहभावस्य कार्यनिष्पत्तेः पूर्वं निरूपयितुमशक्यत्वात्तद्वारणासंभवादुक्तानुपपत्तेश्चेति । नापि पञ्चमः । इतरसहकारेण कार्याप्रयोजकत्वं फलितम् । अत्रेतरपदेन कार्यभेदविशिष्टविवक्षयात्माश्रयान्योन्याश्रयाभ्यां व्याघातात् । नापि कार्यान्वयव्यतिरेककालपूर्वकालान्वयव्यतिरेकशालित्वरूपषष्ठोऽपि । आत्मादौ सुखादिकारणे प्रागभावरूपव्यतिरेकासंभवेनाव्याप्तेः । अतः कारणत्वमतिरिक्तमेव वाच्यम् । तच्चावच्छेदकभेदाद्भिद्यते । कारणं कारणमित्याकारकानुगतप्रतीत्यनुपपत्तेरेवमनुगतकारणपदशक्यतावच्छेदकानुपपत्तेश्च । कारणत्वमखण्डोपाधिरूपमनुगतमेवं कार्यत्वमपि कारणत्वप्रतियोगित्वरूपमितिचेत्कारणत्वमपि किं न रोचयेस्तथेष्टापत्तौ अन्योन्याश्रयापत्तेस्तस्मादतिरिक्तमेवोभयमिति ध्येयम् । परे तु कारणत्वं नातिरिक्तं किन्तु कारणतावच्छेदकस्वरूपमभेदेऽवच्छेद्यावच्छेदकभावानुपपत्तिपरिहारस्तु एकरूपे तदनभ्युपगमेऽप्यत्र कारणतात्वेनावच्छेद्यायाः कारणतायाः अवच्छेदकत्वस्य दण्डत्वेऽभ्युपगमे क्षतिविरहादित्याहुरित्यलम् । ( कारणत्ववादः समाप्तः ) **येन सहैवेत्यादीति** । स्पष्टप्रतिपत्तये तत्तत्पदार्थं प्रकाशयति—**येनेत्यादिना** । **यस्य तन्तुरूपस्येति** । तन्तुत्वस्येत्यपि बोध्यम् । **तन्तुरूपमिति** । तन्तुत्वस्याप्युपलक्षणम् । तन्तुसाहित्यं तन्तुत्वतन्तुरूपयोः कथमित्यत आह—**अत्रेत्यादि** । तन्तुत्वतन्तुरूपसहितत्वतन्तोरेकज्ञानविषयत्वेनैवात्र पूर्वं वृत्तित्वमवग-

यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तदन्यथासिद्धम् ॥ यथा शब्दं प्रति पूर्ववृत्तित्वे ज्ञाते एव पटं प्रति आकाशस्य ॥ अन्यत्र क्लृप्तनियतपूर्ववृत्तिन एव

## नीलकण्ठी.

अन्यथासिद्धम्, एवं तन्तुत्वस्य पूर्ववृत्तित्वज्ञानमपि तन्तुविषयमेवेति तदप्यन्यथा-सिद्धमितिभावः ॥ येनेत्यस्य 'स्वतन्त्रान्वयव्यतिरेकशालिना' इति, यस्येत्यस्य च 'स्वतन्त्रान्वयव्यतिरेकशून्यस्य' इति विशेषणं बोध्यम्। तेन न तथाभूतेन तन्तुत्वेन तन्तोरन्यथासिद्धिः। न वा तन्तुसंयोगस्य तन्तुना सहान्यथासिद्धिरिति संक्षेपः ॥ इतरान्वयव्यतिरेकप्रयुक्तान्वयव्यतिरेकशालि यत् तदन्यथासिद्धमिति तु परे ॥ **शब्दं प्रतीति**। आकाशत्वं हि शब्दसमवायिकारणत्वम् ॥ तथा च शब्दकारणत्वमगृहीत्वाकाशस्याकाशत्वेन घटपूर्ववृत्तित्वं ग्रहीतुमशक्यम् इत्याकाशोन्यथासिद्ध इत्यर्थः। **अन्यत्र क्लृप्तेति** ॥ अपाकजस्थले गन्धं प्रति क्लृप्तनियतपूर्ववृत्तिना गन्धप्रागभावेनैव पाकजस्थलेपि तत्संभवे रूपप्रागभावोऽन्यथासिद्ध इत्यर्थः ॥ अथैवं नियतपदं व्यर्थम् अनियतरासभादेः तृतीयान्यथासिद्धत्वेन सत्यन्तेनैव वारणसंभवादिति चेत् ॥ न ॥ घटसामान्यं प्रत्यन्यथासिद्ध्यसंभवात् ॥ अन्यत्र घटभिन्ने पटादौ क्लृप्तपूर्ववर्तिनस्तन्त्वादितो घटोत्पत्त्यसंभवादिति ॥ नवीनाः पुनरेवमाहुः—लघुनियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धमित्येकविधमेवान्यथासिद्धत्वम् ॥ लघुत्वं च शरीरकृतमुप-

## भास्करोदयाख्यव्याख्या.

म्यत इति स्वरसादिति भावः। **अनतिप्रसक्ततन्तुरूपत्वेनैवेति**। नत्वतिरिक्तरूपत्वमात्रेणैवेत्यर्थः। **एवं** यथा तन्तुरूपस्य पटपूर्ववृत्तित्वज्ञानं तन्तुरूपज्ञानविषयकं तद्विषयत्वेन तन्तुरूपमन्यथासिद्धं तथेत्यर्थः। **तन्तुविषयकमेवेतीति**। तन्तुत्वविशिष्टतन्तुविषयकमेवेत्यर्थः। स्वतन्त्रान्वयव्यतिरेकशालिनेत्याद्यर्थाङ्गीकारे फलान्तरमपि सिध्यतीत्याह—**तेनेत्यादि**। यथाश्रुते येन सहैव यस्येति पदेन तन्तुत्वेन तन्तुरूपेण सहैव यस्य तन्तोः पूर्ववृत्तित्वमवगम्यत इति तन्तोरन्यथासिद्धत्वापत्तिः। तथा तन्तुना सहैव तन्तुसंयोगस्य पूर्ववृत्तित्वमवगम्यते इति तन्तुसंयोगस्यापि अन्यथासिद्धत्वापत्तिर्विनिगमनाविरहान्मूलासङ्गतेर्येनयस्येत्यनयोरुक्तविशेषणाभ्यामेवोक्तयोरन्यथासिद्धत्वपरिहार इति भावः। **इतरेत्यादि**। इतरपदेन तन्तुत्वादिभिन्नतन्त्वादेर्ग्रहणम्। स्वतोऽन्वयव्यतिरेकविरहवतोऽन्यथासिद्धिमिच्छन्ति परे इत्यर्थः। **अन्यत्र क्लृप्तेतीति**। अन्यत्रपदार्थं विशदयति—**अपाकजस्थल इति**। पृथिवीभिन्नस्थल इत्यर्थः। नियतपदं सार्थकयितुमाशङ्कते—**अथेति**। **तृतीयान्यथासिद्धत्वेनेति**। मूलोक्तसंख्यापेक्षयाऽस्य तत्त्वं बोध्यम्। **सत्यन्तेनैवेति**। कारणलक्षणघटकानन्यथासिद्धत्वरूपसत्यन्तेनैवेत्यर्थः। **वारणसंभवादिति**। कारणत्वस्येत्यादिः, तेनान्यथासिद्धत्वाभावेन कारणत्वापत्तिवारणाय तदावश्यकमित्यभिसंन्धिः[1]। समाधत्ते—**घटेत्यादिना**। **अन्यथासिद्ध्यसंभवादिति**।

[1] गूढाभिप्रायः

कार्यसंभवे तत्सहभूतमन्यथासिद्धम् यथा पाकजस्थले गन्धं प्रति रूपप्रागभावस्य ॥ एवं च अनन्यथासिद्धनियतपूर्ववृत्तित्वं कारणत्वम् ॥

**कार्यं प्रागभावप्रतियोगि ॥**

कार्यलक्षणमाह—कार्यमिति ॥

**कारणं त्रिविधम्—समवाय्यसमवायिनिमित्तभेदात् ॥ यत्समवेतं कार्यमुत्पद्यते तत् समवायिकारणम् ॥ यथा तन्तवः पटस्य पटश्च स्वगतरूपादेः ॥ कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतत्वे सति यत् कारणं तदसमवायि**

## नीलकण्ठी.

स्थितिकृतं संबन्धकृतं च । तत्र प्रथमम् अनेकद्रव्यसमवेतत्वापेक्षया महत्त्वे । द्वितीयम् गन्धं प्रति रूपप्रागभावापेक्षया गन्धप्रागभावे । गन्धस्य प्रतियोगिन उपस्थितत्वेन शीघ्रं तदुपस्थितेः ॥ तृतीयं दण्डत्वदण्डरूपाद्यपेक्षया दण्डादौ । स्वाश्रयदण्डसंयोगादिरूपपरम्पराया गुरुत्वात् ॥ एवं चैतावतैव निर्वाहेऽन्यथासिद्धिः त्रिधा पञ्चधा चेति प्रपञ्चो व्युत्पत्तिवैचित्र्याय । न च नियतपदं व्यर्थं रासभादेरन्यथासिद्धत्वेनैव वारणादिति वाच्यम् । यतोऽन्यथासिद्धत्वस्यानुगतस्य दुर्वचतया यत्र यत्र प्रामाणिकानाम् अन्यथासिद्धत्वव्यवहारः तत्तद्भेदकूटं निवेशनीयम् ॥ लघुनियतेत्यादिकं तु भेदप्रतियोगितत्तद्व्यक्तिपरिचायकम् ॥ इत्थं च तत्रानियतानन्तरासभादीनाम् एकेन नियतत्वविशेषणेनैव वारणात् तत्तद्भेदकूटनिवेशे गौरवम् । नियतानां दण्डत्वादीनां त्वनायत्या तत्तद्भेदवत्त्वं निवेशनीयमित्यभिसंधिरिति ॥

## भास्करोदयाख्यव्याख्या.

यत्किंचिद्धटं प्रति रासभस्य क्लृप्तपूर्ववृत्तित्वात्कारणत्ववारणाय नियतपदनिवेश आवश्यक इति भावः । तथाच तत्त्वं व्यापकत्वं तच्च रासभे घटत्ववन्निष्ठाभावप्रतियोगिनि न सम्भवतीति भावः । **असंभवादिति** । असंभवाच्चेत्यर्थः । **महत्त्वे इति** । शरीरकृतं लघुत्वमित्यनेनान्वयः । **प्रतियोगिन इति** । प्रागभावप्रतियोगिन इत्यर्थः । **तदुपस्थितेरिति** । प्रागभावोपस्थितेरित्यर्थः । तत्तत्प्रागभावस्य स्वप्रतियोग्युत्पत्तिं प्रति हेतुत्वाङ्गीकर्तृमतेनेदम् । **दण्डादाविति** । आदिना तन्त्वादिसंग्रहः । **गुरुत्वादिति** । केवलदण्डसंयोगापेक्षयेति शेषः । नियतपदमत्रत्यं सार्थकयितुमाशङ्कते—**नचेति** । **अन्यथासिद्धत्वेनैवेति** । रासभे शीघ्रोपस्थितत्वरूपलघुत्वाभावादेवेत्यर्थः । समाधत्ते—**यत इत्यादिना** । **अनुगतस्य दुर्वचतयेति** । तत्तदन्यथासिद्धत्वस्य प्रत्येकपर्यवसन्नत्वादिति भावः । **भेदप्रतियोगितत्तद्व्यक्तिपरिचायकमिति** । भेदकूटरूपान्यथासिद्धत्वपक्षे भेदप्रतियोगिनामन्यथासिद्धत्वव्यवहारविषयाणां स्वाश्रयद्वारा परिचायकं बोधकमित्यर्थः । **अनायत्येति** । अगत्येत्यर्थः । तेषामपि दण्डत्वादितत्तद्व्यक्तीनां नियतत्वादितिभावः । **निवेशनीयमिति** । तद्रूपमन्यथासिद्धत्वं वक्तव्यमित्यर्थः ।

कारणं ॥ यथा तन्तुसंयोगः पटस्य तन्तुरूपं पटरूपस्य ॥ तदुभयभिन्नं कारणं निमित्तकारणम् ॥ यथा तुरीवेमादिकं पटस्य ॥

कारणं विभजते—कारणमिति ॥ समवायिकारणलक्षणमाह—यत्समवेतमिति ॥ यस्मिन् समवेतमित्यर्थः ॥ असमवायिकारणलक्षणमाह—कार्येणेति ॥ कार्येणेत्येतदुदाहरति—तन्तुसंयोग इति ॥ कार्येण पटेन सह एकस्मिन् तन्तौ समवेतत्वात् तन्तुसंयोगः पटस्यासमवायिकारणमित्यर्थः ॥ कारणेन सहेत्येतदुदाहरति-तन्तुरूपमिति ॥ कारणेन पटेन सह एकस्मिन् तन्तौ समवेतत्वात् तन्तुरूपं पटरूपस्यासमवायिकारणमित्यर्थः ॥ निमित्तकारणं लक्षयति–तदुभयेति ॥ समवाय्यसमवायिभिन्नकारणं निमित्तकारणमित्यर्थः ॥

तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् ॥ तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् ॥ इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम् । तद्द्विविधम्—निर्विकल्पकं सविकल्पकं चेति ॥ तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम् ॥ सप्रकारकं ज्ञानं सविकल्पकम् ॥ यथा डित्थोयं ब्राह्मणोयं श्यामोयमिति ॥

कारणलक्षणमुपसंहरति—तदेतदिति ॥ प्रत्यक्षलक्षणमाह—तत्रेति ॥ प्रमाणचतुष्टयमध्ये इत्यर्थः । प्रत्यक्षज्ञानस्य लक्षणमाह—इन्द्रियेति ॥ इन्द्रियं चक्षुरादि-

## नीलकण्ठी.

यस्मिन् समवेतमित्यर्थ इति ॥ यद्धर्मावच्छिन्नं यद्धर्मावच्छिन्ने समवायेनोत्पद्यते, तद्धर्मावच्छिन्नं प्रति तद्धर्मावच्छिन्नं समवायिकारणमिति परमार्थः ॥ कारणेन पटेनेति ॥ स्वकार्यसमवायिकारणेन पटेनेत्यर्थः ॥ स्वं तन्तुरूपं पटादिकं प्रति तुरीतन्तुसंयोगादीनामसमवायिकारणत्ववारणाय तत्तदसमवायिकारणलक्षणे तत्तद्भिन्नत्वं देयमिति दिक् ॥

ननु तुरीयविषयतानिरूपकस्य निर्विकल्पकज्ञानस्य निरूपकतासंबन्धेन प्रकारता-

## भास्करोदयाख्यव्याख्या.

अत्र यद्धर्मेत्यादिपरमार्थप्रदर्शनं प्रमेयत्वादिना कार्यकारणभावनिरासायेति ध्येयम् । स्वकार्यकारणेन पटेनेत्यर्थ इति । स्वं तन्तुरूपम् । तस्य यत्कार्यं पटरूपं तस्य कारणं यः पटस्तेनेति समुदितार्थः । ननु निष्प्रकारकमित्यस्य निरूपकतासंबन्धेन प्रकारताशून्यत्वमात्रलक्षणप्रसक्त्या कथं दीपिकायां विशेष्यादिशून्यत्वेन लक्षणत्रयानुसरणमित्याशयं वर्णयितुमाशङ्कते—नन्विति । तुरीयविषयतानिरूपकस्येति । विशेष्यविशेषणसंबन्धत्रितयातिरिक्तविषयतानिरू-

कम् ॥ अर्थो घटादिः, तयोः संनिकर्षः संयोगादिः, तज्जन्यं ज्ञानमित्यर्थः ॥ तद्विभजते—तद्विविधमिति ॥ निर्विकल्पकस्य लक्षणमाह—निष्प्रकारकमिति ॥ विशेषणविशेष्यसंबन्धानवगाहि ज्ञानमित्यर्थः ॥

## नीलकण्ठी.

शून्यत्वमिव विशेष्यताशून्यत्वं, संसर्गताशून्यत्वं च लक्षणं संभवति विनिगमनाविरहात् इत्यतो लक्षणत्रयं दर्शयति—**विशेष्येति** ॥ विशेष्यत्वादिविधया विशेष्याद्यनवगाहि ज्ञानमित्यर्थः ॥ तथा च ज्ञानत्वघटितं विशेष्यताशून्यत्वं, विशेषणताशून्यत्वं, संसर्गताशून्यत्वं चेति लक्षणत्रयं पर्यवसितमिति भावः ॥ केचित्तु ननु निष्प्रकारकत्वं प्रकारताशून्यत्वम् प्रकारता च भासमानवैशिष्ट्यप्रतियोगित्वम्। संसर्गावच्छिन्नविषयतेति यावत्। तथा च संसर्गानवगाहिज्ञानत्वमेव संसर्गताशून्यज्ञानत्वमेव वा लक्षणमास्ताम् लाघवादित्यतस्तथैव मूलार्थमाह—विशेष्येतीत्याहुः तत् चिन्त्यम् ॥ सिद्धान्ते संसर्गताया इव प्रकारताया अपि विलक्षणविषयतात्मकत्वेन निष्प्रकारकज्ञानत्वरूपलक्षणे गौरवानवकाशादिति दिक् ॥ निर्विकल्पकस्यातीन्द्रियतया तत्र प्रत्य-

## भास्करोदयाख्यव्याख्या.

पकस्येत्यर्थः। अयं भावः। निर्विकल्पकज्ञानस्य केवलविषयत्वेन विषयावगाहित्वं न पुनर्विशेष्यत्वादिरूपेण घटघटत्वे इति विशकलिततया तयोस्तद्विषयत्वानुभवादिति। **विशेष्यादिविधयेत्यादि**। विधाशब्दः प्रकारवचनः। तथाचेदं विशेष्यमिदं विशेषणमयं संसर्ग इत्येवं तत्तद्धर्मप्रकारेण घटघटत्वतत्संसर्गाणामनवगाह्यत्वात्तत्त्वमित्यर्थः। वस्तुतस्तद्विषयाणां तत्प्रकारत्वेऽपि तद्रूपेण नावगाहनं तेषामिति भावः। तथाच फलितमर्थमाह—**तथाचेति**। **ज्ञानत्वघटितमित्यादि**। ज्ञानत्वे सति विशेष्यतादिशून्यत्वमित्यादि लक्षणत्रयं पर्यवसन्नं फलितमित्यर्थः। ज्ञानत्वमात्रोक्तौ सविकल्पके विशेष्यतादिशून्यत्वमात्रोक्तावज्ञाने निर्विकल्पकत्वव्यवहारप्रामाण्यापत्तेरुभयमिति संक्षेपः। कैश्चिदुक्तं दूषयितुं तन्मतमुपन्यस्यति—**केचित्त्विति**। तदेवाशङ्कते—**नन्विति**। **प्रकारता चेत्यादि**। प्रकारता भासमानप्रतियोगिवैशिष्ट्यप्रतियोगित्वम्। भासमानं प्रतीयमानं वैशिष्ट्यं संसर्गस्तत्प्रतियोगित्वं तद्विशेषणत्वमित्यर्थः। विशेष्यविशेषणभावस्य संसर्गत्वाभ्युपगममते प्रकारस्यापि संसर्गावच्छिन्नविषयत्वात्तद्वृत्तिधर्मस्य प्रकारतारूपस्य संसर्गावच्छिन्नविषयतारूपत्वं तेनैव रूपेण लाघवाल्लक्षणं संसर्गानवगाहिज्ञानत्वं संसर्गताशून्यज्ञानत्वमास्तामित्युक्तम्। मूलं तु संसर्गस्य विशेष्यताप्रकारताभेदेन भेदसूचनायेति तद्धृदयं बोध्यम्। एतद्दूषयति—**तच्चिन्त्यमिति**। **अतिविलक्षणविषयतात्मकत्वेनेति**। अतिरिक्तविलक्षणविषयतारूपत्वेनेत्यर्थः। **गौरवानवकाश इति**। लदुत्प्रेक्षितार्थलाघवे युक्त्यभावादिति भावः। **निर्विकल्पकस्यातीन्द्रियतयेति**। इन्द्रियजन्यज्ञानाविषयतयेत्यर्थः। ननु ज्ञानमात्रं न ज्ञानविषयमिति चेन्न। व्यवसायात्मकज्ञानस्यानुव्यवसायात्मकप्रत्यक्षज्ञानविषयत्वात्। नचैवमप्यत्र प्रत्यक्षं

नतु निर्विकल्पके किं प्रमाणमिति चेत् ॥ न ॥ गौरिति विशिष्टज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वात् दण्डीति ज्ञानवत् इत्यनुमानस्य प्रमाणत्वात् ॥ विशेषणज्ञानस्यापि सविकल्पकत्वे अनवस्थाप्रसङ्गात् निर्विकल्पकसिद्धिः ॥ सविकल्पकं लक्षयति—सप्रकारकमिति ॥ नामजात्यादिविशेषणविशेष्यसंबन्धावगाहि ज्ञानमित्यर्थः ॥ सविकल्पकमुदाहरति—यथेति ॥

प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः–संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति ॥ चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः ॥ १ ॥ घटरूपप्रत्यक्षे संयुक्तसमवायः सन्निकर्षः ॥ २ ॥ चक्षुःसंयुक्ते घटे रूपस्य समवायात् ॥ रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः ॥ ३ ॥ चक्षुःसंयुक्ते घटे रूपं समवेतं, तत्र रूपत्वस्य समवायात् ॥ श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः ॥४॥ कर्णविवरवर्त्याऽऽकाशस्य श्रोत्रत्वात् शब्दस्याकाशगुणत्वात् गुणगुणिनोश्च समवायात् ॥ शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः ॥ ५ ॥ श्रोत्रसमवेते

## नीलकण्ठी.

क्षप्रमाणासंभवादनुमानं प्रमाणयति–**गौरितीति** ॥ **विशिष्टज्ञानत्वादिति** ॥ विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वात् नाप्रयोजकत्वशङ्केति भावः ॥ **अनवस्थाप्रसङ्गादिति** ॥ सविकल्पकस्य विशिष्टबुद्धित्वेन विशेषणज्ञानजन्यत्वनियमादिति भावः । **विशेषणविशेष्यसंबन्धावगाहीति** ॥ अत्रापि उक्तरीत्या लक्षणत्रयं बोध्यम् ॥

## भास्करोदयाख्यव्याख्या.

प्रमाणमित्याह—**निर्विकल्पकस्येत्यादि** । **विशिष्टज्ञानत्वादितीति** । गौरित्यादिविशिष्टबुद्धौ विशेषणज्ञानजन्यत्वस्य साध्यतयैतत्पूर्वं विशेषणज्ञानस्यावश्यकतया विशेषणज्ञानविशिष्टज्ञानयोः कार्यकारणभावः सिद्ध इति बोध्यम् । नन्वेवं सति व्याहतं तस्य निष्प्रकारकत्वमिति चेन्न उक्तोत्तरत्वात् । सविकल्पके तु विशेष्यादिविधया विशेष्यादीनां विषयत्वमिति विशेषः । **अत्राप्युक्तरीत्येत्यादि** । सविकल्पकेऽपि यथा निर्विकल्पके विशेष्यादिप्रत्येकानवगाहित्वेन लक्षणत्रयमङ्गीकृतं तथा विशेषणादिप्रत्येकावगाहित्वेन लक्षणत्रयं त्रित्वसंख्याविशिष्टलक्षणं बोध्यमित्यर्थः । मूलोक्तक्रममादायात्मनो बाह्येन्द्रियाविषयत्वेन तत्साधारण्येन प्रत्यक्षत्वनिरुक्तेर्न्यूनतापरिहाराय तदाशयं योजनान्तरपुरस्कारेण वर्णयति—

शब्दे शब्दत्वस्य समवायात् ॥ अभावप्रत्यक्षे विशेषणविशेष्यभावः संनिकर्षः ॥ ६ ॥ घटाभाववद्भूतलमित्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात् ॥ एवं संनिकर्षषट्कजन्यं ज्ञानं प्रत्यक्षम् ॥ तत्करणमिन्द्रियम् ॥ तस्मात् इन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम् ॥ प्रत्यक्षं व्याख्यातम् ॥ * ॥

इन्द्रियार्थसंनिकर्षं विभजते-प्रत्यक्षेति ॥ संयोगसंनिकर्षमुदाहरति-चक्षुषेति ॥ द्रव्यप्रत्यक्षे सर्वत्र संयोगः संनिकर्ष इत्यर्थः ॥ आत्मा मनसा संयुज्यते, मन इन्द्रियेण,इन्द्रियमर्थेन, ततः प्रत्यक्षज्ञानमुत्पद्यते॥ संयुक्तसमवायमुदाहरति-घटरूपेति ॥ तत्र युक्तिमाह-चक्षुःसंयुक्तेति ॥ संयुक्तसमवेतसमवायमुदाहरति-रूपत्वेति ॥ समवायमुदाहरति-श्रोत्रेति ॥ तदुपपादयति-कर्णेति ॥ ननु दूरस्थशब्दस्य कथं श्रोत्रेण संबन्ध इति चेत् ॥ न ॥ वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा शब्दाच्छब्दान्तरोत्पत्तिक्रमेण श्रोत्रदेशे जातस्य श्रोत्रसंबन्धात् प्रत्यक्षत्वसंभवात्॥ समवेतसमवायमुदाहरति-शब्दत्वेति ॥ विशेषणविशेष्यभावमुदाहरति-अभा-

## नीलकण्ठी.

मन इन्द्रियेणेति संयुज्यते इत्यनेनान्वयः । एवमग्रेपि ॥ आत्मप्रत्यक्षसंग्रहस्तु 'आत्मा मनसा संयुज्यते ततः प्रत्यक्षज्ञानमुत्पद्यते' इति योजनान्तरेण ॥ कथं श्रोत्रसंबन्ध इति ॥ नच श्रोत्रस्य नभोरूपत्वेन तत्समवायो दूरस्थशब्देप्यक्षत इति शङ्क्यम् ॥ अतिप्रसङ्गभङ्गाय कर्णविवरावच्छिन्ननभोऽनुयोगिकत्वविशिष्टसमवायस्यैव प्रत्यक्षहेतुत्वाङ्गीकारेण तादृशसंबन्धस्य दूरस्थशब्देऽभावादिति भावः ॥ प्रथमतो भेरीदण्डसंयोगेन नभसि शब्द उत्पद्यते, तेन शब्दाः तैश्च पुनः शब्दा इत्येवं क्रमेण निखिलदिगवच्छेदेन शब्दोत्पत्तेरङ्गीकरणीयतया तदंशेऽपि साम्यनिर्वाहायाह-कदम्बेति ॥ द्रष्टव्यमिति ॥ अत्रेदमवधेयम् । विशेषणतानां संयुक्तविशेषणतात्वादिरूपेण बहुविधत्वेऽपि विशेषणतात्वेनैव परिगणनान्न षड्विधत्वहानिः ॥

## भास्करोदयाख्यव्याख्या.

आत्मेत्यादि । आत्ममनःसंयोगमात्रमात्मप्रत्यक्षे हेतुः । आत्मसुखादिप्रत्यक्षे संयुक्तसमवाय इत्यादि पूर्ववत् ॥ उक्तन्यायाभ्यां शब्दाच्छब्दान्तरोत्पत्तिमाक्षिपति-नचेति । अतिप्रसङ्गभङ्गायेति । ग्रामान्तरस्थशब्दप्रत्यक्षवारणायेत्यर्थः । दूरस्थशब्देऽभावादिति । अतोहेतोस्तन्न्यायाभ्यां शब्दाच्छब्दान्तरोत्पत्तिक्रमेण तच्छब्दस्य श्रोत्रसमवायाच्छब्दप्रत्यक्षमिति भावः । तदंशेऽपि साम्यमित्यादि । वीचीतरङ्गन्यायसिद्धांशेऽपीत्यर्थः । अपिस्त्वर्थे । सर्वदिगवच्छेदेन युगपच्छब्दोत्पत्तिमात्रेण क्रमिकोत्पत्ताविंत्यर्थः ॥ न विषयतारूप इति । संबन्धानवगाहितया विशिष्टबुद्धेरनुत्पत्तेरापत्तेरिति भावः ॥ संयुक्तविशेषणतात्वादि-

वेति ॥ तदुपपादयति–घटाभाववदिति ॥ भूतलं विशेष्यम् ॥ घटाभावो विशेषणम् ॥ 'भूतले घटो नास्ति' इत्यत्र अभावस्य विशेष्यत्वं द्रष्टव्यम् ॥ एतेन अनुपलब्धेः प्रमाणान्तरत्वं निरस्तम् ॥ 'यद्यत्र घटोऽभविष्यत् तदा भूतलमिवाद्रक्ष्यत् दर्शनाभावान्नास्ति' इति तर्कितप्रतियोगिसत्त्वविरोध्यनुपलब्धेः सहकृतेनेन्द्रि-

## नीलकण्ठी.

न चैवं समवायत्वेनैव संयुक्तसमवायादीनामनुगमः कुतो न कृत इति वाच्यम् ॥ स्वतन्त्रेच्छस्येत्यादिन्यायानुसरणेनादोषादिति ॥ **एतेन** । अभावप्रमायां विशेष्यविशेषणभावसन्निकर्षजन्यत्वप्रदर्शनेन ॥ **प्रमाणान्तरत्वम्** ॥ प्रत्यक्षाद्यतिरिक्तप्रमाणत्वम् ॥ नन्वनुपलब्धेः प्रमाणान्तरत्वानङ्गीकारे घटोपलब्धिदशायां तदभावप्रत्यक्षापत्तिः । मम मते तु अनुपलब्ध्यात्मकप्रमाणान्तराभावात् नापत्तिरिति भट्टशङ्कां परिजिहीर्षुर्योग्यानुपलब्धेरिन्द्रियसहकारित्वमात्रेणैव निर्वाहे अतिरिक्तप्रमाणत्वमसंभवीत्याह–**यद्यत्रेत्यादिना** ॥ **अत्र** चक्षुःसंयोगादिमद्भूतले ॥ तर्कस्यापादकाभावसाधकविपर्ययप्रतियोग्यापाद्यकत्वरूपविपर्यये तत्कोटिपर्यवसायित्वं दर्शयति–**दर्शनाभावान्नास्तीति** ॥ तद्दर्शनाभावात्तन्नास्तीत्यर्थः ॥ **तर्कितेत्यादि** ॥ तर्किता आपादिता प्रतियोगिनो घटादेः सत्त्वस्य सत्त्वप्रसक्तेर्विरोधिनी या उपलब्धिस्तत्प्रतियोगिकोऽभा-

## भास्करोदयाख्यव्याख्या.

**रूपेणेति** । समवेतविशेषणतात्वादिरूपेणेत्यादिशब्दार्थः । घटे पटाभाववद्घटरूपे पटरूपाभाव इत्यादि द्रष्टव्यम् ॥ **अनतिप्रसक्तरूपेणेवेति** । संयुक्तविशेषणतात्वस्य 'भूतलं घटवत्' इतिबोधीयघटवृत्तिविशेषणतायामतिप्रसक्तत्वादिति भावः ॥ **न षड्विधत्वहानिरिति** । अन्यथाधिकसंख्याप्रसक्तेरिति भावः । प्रतिवन्दिदोषमाशङ्कते–**नचैवमिति** । **स्वतन्त्रेच्छस्येत्यादि** । "स्वतन्त्रेच्छस्य मुनेर्नियोगप्रत्य( पर्य )नुयोगानर्हत्वादि"ति न्यायस्वरूपम् । तदनुसारेण संयुक्तसमवायादीनां भेदमाश्रित्य षड्विधत्वरूपदोषाभावादिति समुदितार्थः । **अभावेत्यादि** । प्रत्यक्षत्वावच्छिन्नं प्रति षड्विधसन्निकर्षस्य हेतुत्वादभावप्रत्यक्षस्य विशेष्यविशेषणभावसन्निकर्षेणोदयात्प्रत्यक्षातिरिक्तप्रमाणत्वमुपलब्धेर्निरस्तमिति भावः । अनुपलब्धेः प्रमाणान्तरत्वमावश्यकमित्याशङ्कते–**नन्विति** । **अनुपलब्ध्यात्मकप्रमाणान्तराभावादिति** । अन्यत्प्रमाणं प्रमाणान्तरं प्रत्यक्षादिचतुष्टयप्रमाणभिन्नं प्रमाणं तदभावादित्यर्थः । **परिजिहीर्षुरित्यादि** । परिहर्तुमिच्छुः । **योग्यानुपलब्धेः** । योग्या चासावनुपलब्धिः । अनुपलब्धौ योग्यत्वविशेषणमन्धकारस्थघटस्य घटो नास्तीति प्रमात्मकाभावप्रत्यक्षवारणाय । **इन्द्रियसहकारित्वमात्रेणैव** । न केवलमनुपलब्ध्या । अन्यथान्धस्यापि घटसत्त्वदशायां घटानुपलब्ध्या घटो नास्तीत्यभावप्रमाप्रत्ययानुत्पत्तेस्तदावश्यकत्वात् । **अतिरिक्तप्रमाणत्वम्** । प्रत्यक्षादिप्रमाणचतुष्टयभिन्नप्रमाणत्वं योग्यानुपलब्धेरित्यनेनान्वयः । **असंभवी** अनावश्यकत्वादिति समुदितार्थः । **तर्कस्येति** । तत्कोटिपर्यवसायित्वमित्यनेनान्वयः । **आपादकेत्यादि** । आपादकस्य दर्शनापत्तिसंपादकघटास्तित्वस्या-

येनैव अभावज्ञानोपपत्तौ अनुपलब्धेः प्रमाणान्तरत्वासंभवात् ॥ अधिकरणज्ञा-नार्थमपेक्षणीयेन्द्रियस्यैव करणत्वोपपत्तावनुपलब्धेः करणत्वस्यायुक्तत्वात् ॥ विशे

## नीलकण्ठी.

वोऽनुपलब्धिस्तत्सहकृतेनेत्यर्थः ॥ विरोधित्वविशेषणमनुपलब्धेरनाहार्यत्वसूचनाय ॥ प्रतियोगिसत्त्वापादनादितोपलम्भप्रतियोगिकत्वरूपयोग्यताविशिष्टानुपलब्धिसहकृते-नेति तु परमार्थः ॥ आलोकसंयोगाद्यसत्त्वदशायां यद्यत्र घटः स्यात् तर्हि उपलभ्ये-तेत्यापादनासंभवेन योग्यानुपलब्ध्यभावान्न तत्र घटाभावप्रत्यक्षमिति संक्षेपः ॥ केचित्तु **तर्कितेत्यादि** ॥ तर्कितमारोपितं यत् प्रतियोगिसत्त्वम् तद्विरोधिनी यानुपलब्धिः तत्सहकृतेनेत्यर्थः ॥ एतावता प्रतियोगिसत्त्वरूपकारणाभावप्रयोज्य उपलब्ध्यभावोऽभावप्रत्यक्षे कारणं नत्वितरकारणविरहप्रयोज्य उपलब्ध्यभाव इति सूचितम् ॥ अतएवान्धकारे उपलम्भाभावसत्त्वेऽपि न घटाभावप्रत्यक्षमित्याहुः ॥ नन्वभावप्रमायामिन्द्रियस्य करणत्वमनुपलब्धेः सहकारित्वं च त्वया कल्पनीयम् । तद-पेक्षयानुपलब्धेरेव करणत्वकल्पनं वरमित्याशङ्क्याभावाधिकरणभूतलप्रत्यक्षे इन्द्रि-यस्यावश्यमपेक्षणीयतया क्लृप्तेनैवेन्द्रियकरणत्वेनाभावप्रत्यक्षोपपत्तौ अनुपलब्धेर्वि-जातीयप्रमितिकरणत्वकल्पनमयुक्तमित्याह—**अधिकरणेति** ॥ ननु विशेषणविशे-ष्यभावाख्यः संबन्धोऽतिरिक्तः कल्पनीयस्त्वयेत्यत आह--**विशेष्यविशेषणभाव**

## भास्करोदयाख्यव्याख्या.

भावसाधको दर्शनाभावो नास्तीति यो विपर्ययस्तत्प्रतियोगिदर्शनाभावरूपविपर्य-यप्रतियोगि यद्दर्शनं तस्यापाद्यत्वरूपं विपर्यये दर्शनाभावान्नास्तीति व्यत्यासरूपे तत्कोटिपर्यवसायित्वं नास्तीत्यभावकोटिपर्यवसायित्वं तर्कस्य दर्शयतीति समुदि-तार्थः । यथाश्रुतेऽन्यदर्शनाभावोऽन्यसत्ताभावे हेतुः स्यादत आह—**तदित्यादि** । **तर्कितेति** । तर्कश्चापादनं क्तार्थोह्याश्रयस्तथा चापादनाश्रय इत्यर्थस्तदेतदाह—**आपादितेति** । इदमप्युपलब्धावेवान्वेति । **उपलब्धेरनाहार्यत्वसूचना-येति** । अयं भावः । प्रतियोगिसत्वदशायामाहार्यानुपलब्ध्या प्रमाभावज्ञानानुत्प-त्तेस्तदावश्यकमिति । **योग्यानुपलब्धिरिति** । अनुपलब्धौ योग्यत्वं च चाक्षुषविषयत्वं, तच्चालोकासंभवेऽसंभवि, अतोऽन्धकारे घटानुपलब्ध्या न वास्तविक-मभावप्रत्यक्षमिति तत्त्वम् । **न तत्र घटाभावप्रत्यक्षमिति** । तत्र भूतले घटाभा-वप्रत्यक्षं नानुपलब्ध्या वास्तविकमित्यर्थः । अन्यथान्धकारेऽप्यनुपलब्धेः सत्त्वाद्घटो-नास्तीति घटाभावप्रत्ययस्य सर्वानुभवसिद्धत्वाद्विरुध्येतेति भावः । **नत्वितरका-रणविरहप्रयोज्य इति** । इतरकारणमालोकस्तद्विरहप्रयोज्याऽनुपलब्धिरभाव-प्रत्यक्षे न तु कारणमित्यन्वितोऽर्थः । **अत एवेत्यादि** । प्रतियोगिसत्त्वविरहप्रयो-ज्योपलब्ध्यभावस्याभावप्रत्यक्षहेतुत्वाङ्गीकारादेव । **अन्धकारे** । आलोकासत्त्वे । **उपलम्भाभावसत्त्वेऽपि** । प्रमात्मकघटविषयकज्ञानासत्वेऽपि । **न घटाभा-वप्रत्यक्षम्** । न वास्तविकघटप्रतियोगिकाभावधीरिति समुदितार्थः । गौरवमाश-ङ्कते मीमांसकः—**नन्विति** । **विजातीयप्रमितिकरणत्वमिति** । विजातीया-

षणविशेष्यभावो विशेषणविशेष्यस्वरूपमेव नातिरिक्तः संबन्धः ॥ प्रत्यक्षज्ञानमुपसंहरन् तस्य करणमाह—एवमिति ॥ असाधारणकारणत्वादिन्द्रियं प्रत्यक्षज्ञानकरणमित्यर्थः ॥ प्रत्यक्षमुपसंहरति—तस्मादिति ॥ इति प्रत्यक्षपरिच्छेदः ॥ ❀ ॥

## अनुमितिकरणमनुमानम् ॥ परामर्शजन्यं ज्ञानमनुमितिः ॥

### नीलकण्ठी.

**इति** ॥ अत्रेदं बोध्यम् । प्रत्यक्षं द्विविधम्—लौकिकमलौकिकं चेति ॥ **लौकिकत्वं** च विषयिताविशेषः ॥ लौकिके षोढा सन्निकर्षः कारणम् ॥ अलौकिके तु सामान्यलक्षणा, ज्ञानलक्षणा, योगजधर्मश्चेति त्रिविधा प्रत्यासत्तिः ॥ तत्र **सामान्यलक्षणा** धूमत्वादिरूपा तज्ज्ञानरूपा वा, सामान्यं लक्षणं स्वरूपं विषयो वा यस्या इति व्युत्पत्तेः ॥ सा चाश्रयाणां निखिलधूमादीनाम् अलौकिकप्रत्यक्षे उपयुज्यते, अतीतानागतधूमादिषु चक्षुःसंयोगादेरसंभवात् ॥ इन्द्रियाणामसंनिकृष्टानां प्रत्यक्षाजनकत्वात् ॥ **ज्ञानलक्षणा** तु सुरभिचन्दनमिति चाक्षुषोपनीतभाने सौरभेण चक्षुषो योग्यसंनिकर्षासंभवात् ॥ एवं योगिनां देशकालविप्रकृष्टपदार्थप्रत्यक्षे **योगजधर्मः** प्रत्यासत्तिः कारणमिति संक्षेपः ॥ इति तर्कसंग्रहदीपिकाप्रकाशे भगवदर्पिते प्रत्यक्षपरिच्छेदः ॥ १ ॥

### भास्करोदयाख्यव्याख्या.

याऽभावप्रमितिः यथार्थज्ञानं तत्करणत्वकल्पनं विजातीयप्रमाणान्तरकल्पने नानुचितमित्यर्थः । अभावाधिकरणप्रत्यक्षे इन्द्रियव्यापारस्यावश्यकतया तेनैवाभावप्रत्यक्षमनुपलब्धेः सहकारित्वकल्पनं यतो नोपलभ्यतेऽतो नास्तीत्यक्षिमतां सर्वेषां प्रमानुभवसिद्धत्वादनक्षिमतां तु भ्रम एवेति निष्कर्षः । संबन्धस्य विशिष्टबुद्धिनियामकत्वाद्घटाभाववद्भूतलमित्यभाववैशिष्ट्यावगाहिबोधोपयोगितया विशेष्यविशेषणभावरूपः अतिरिक्तः कल्पनीय इत्याशयेनाशङ्कते—**नन्विति** । **विशेष्यविशेषणभाव इतीति** । विशेषणस्वरूपो विशेष्यस्वरूपो वा विशेषणविशेष्ययोर्विशिष्टबुद्धिनियामकः स्वरूपनामा संबन्धः कल्पनीय इति भावः । परन्तु विशिष्टबुद्धेस्त्रितयावगाहित्वं नोपपद्यते परेषामपि संबन्धानामेतत्तौल्यं चापद्यत इति चिन्तनीयम् । **तत्रेति** । त्रिविधप्रत्यासत्तावित्यर्थः । **सामान्यलक्षणा—धूमत्वादिरूपेत्यादि** । आदौ लक्षणशब्दः स्वरूपबोधकः । द्वितीये लक्षणशब्दो विषयबोधकः । पूर्वत्रारुचिस्तु धूमत्वाद्यविदुषोऽपि स्वरूपतो धूमत्वादिप्रत्यासत्त्या धूमा इत्येवं यावद्धूमज्ञानापत्तिर्बोध्या । सामान्यलक्षणाङ्गीकारे बीजं तु पर्वते धूमदर्शनानन्तरं धूमो वह्निव्याप्य इति निश्चयः । एतस्य फलं चैकस्मिन्घटत्वे ज्ञाते देशान्तरस्थकालान्तरस्थघटानां तेन रूपेण ज्ञानं चाक्षुषं विनापीति ध्येयम् । **सौरभेणेति** । सहार्थयोगे तृतीया । **योग्यसन्निकर्षाभावादिति** । रूपिद्रव्यस्यैव चक्षुषः सन्निकर्षयोग्यत्वनियमादिति भावः । **प्रत्यक्षे इति** । मानसप्रत्यक्ष इत्यर्थः । **योगजधर्म इति** । योगश्चित्तवृत्तिनिरोधस्तेन परमेश्वरो-

अनुमानं लक्षयति—अनुमितिकरणमिति ॥ अनुमितेर्लक्षणमाह—परामर्शेति॥

## नीलकण्ठी.

### अथानुमानम् ।

**अनुमानं लक्षयतीति** ॥ 'प्रत्यक्षोपजीवकत्वसंगत्या अनुमानं निरूपयतीत्यर्थः ॥ **परामर्शेतीति** ॥ तथाच प्रत्यक्षप्रमित्यपेक्षयाऽनुमितेर्विलक्षणप्रमिति-

## भास्करोदयाख्यव्याख्या.

पासनया प्राप्तसर्वज्ञत्वादिलक्षण इत्यर्थः । **संक्षेप इति** । सर्वतन्त्रस्वतन्त्राणां शास्त्रान्तरीयानेकार्थलेखनमभीप्सितमपि प्रेक्षावतां व्यामोहाभावाय संक्षेपतः स्वरूपलेखनमिति तात्पर्यार्थः ।

इति तर्कसंग्रहदीपिकाप्रकाशव्याख्यायां भास्करोदयाख्यायां भगवदर्पितायां प्रत्यक्षपरिच्छेदः समाप्तः ॥

शुभमस्तु ॥ श्रीमुकुन्दो विजयते ॥

---

### अथानुमानखण्डम् ।

अनुमानं लक्षयतीति । पूर्वोत्तरग्रन्थयोः संगत्यप्रदर्शनमूलकन्यूनतापरिहाराय तामाह—**प्रत्यक्षेत्यादिना** । उपजीवकत्वं कार्यत्वमेव तेन कार्यज्ञानस्य कारणज्ञानोत्तरकालिकत्वेन लिङ्गपरामर्शरूपानुमानं प्रति इन्द्रियरूपधूमप्रत्यक्षस्योपजीव्यत्वात्प्रत्यक्षनिरूपणानन्तरमनुमाननिरूपणे उपजीव्योपजीवकभावसंगतिरिति फलितम् । एतेनानुमानं निरूप्य प्रत्यक्षं किं न निरूपितमिति केषांचिच्छङ्का परास्ता । लक्षदर्शनाङ्कनयोरिति दर्शनार्थकलक्षधातोर्न सामान्यदर्शनार्थकत्वं शब्दशक्तिस्वाभाव्यादपि तु लक्षणस्वरूपप्रामाण्यप्रकारकज्ञानानुकूलशब्दप्रयोगार्थकत्वम् । एतेनानुमानविषयकलक्षणस्वरूपप्रामाण्यप्रकारकज्ञानानुकूलवर्तमानकालिकशब्दप्रयोगानुकूलकृत्याश्रयकत्वाश्रयवदभिन्नो मूलकार इति बोधः । अत एव मणिकाराः पूर्वापरग्रन्थैकवाक्यत्वप्रतिपत्तये सङ्गतिं प्रदर्शयन्तः शिष्यावधानायानुमाननिरूपणं प्रतिजज्ञिरे प्रत्यक्षेत्यादिना । सङ्गतित्वं चानन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वम् । अस्ति च प्रकृते कार्यत्वे अनन्तरं प्रत्यक्षनिरूपणानन्तरं यदभिधानं अनुमानाभिधानं तत्प्रयोजिका या जिज्ञासा प्रत्यक्षकार्यं किमेतदिति प्रत्यक्षनिरूपितकार्यविषयकज्ञानेच्छा तज्जनकं यत्कार्यज्ञानं तद्विषयः कार्यरूपस्तस्मिंस्तत्त्वमेवं सप्रसङ्गादिषड्विषयेषु सङ्गमनीयम् 'सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा । निर्वाहकैककार्यत्वे षोढा सङ्गतिरिष्यते' । इत्यत्र हेतुतापदमजहत्स्वार्थवृत्त्या कार्यत्वकारणत्वान्यतररूपेण तदुभयपरमिति नाधिक्यमिति भावः । उक्तरूपं च विभाजकमात्रमतस्तेन रूपेण कार्यत्वादेर्जिज्ञासाजनकज्ञानविषयत्वेऽपि न क्षतिरिति ध्येयम् । स्मृतस्योपेक्षानर्हत्वमिति हि **प्रसङ्गलक्षणम्** । स्मृतस्य-अभिहितवस्तुसंबन्धित्वेन स्मृतिविषयस्य न यथाकथंचित् । उपेक्षानर्हत्वं निरूपणयोग्यत्वपर्यवसितं प्रसङ्ग-

## भास्करोदयाख्यव्याख्या.

निर्वाहकमिति तदर्थः । शिष्येण स्मृतस्य वस्तुनो विशेषजिज्ञासाबोधने गुरोरभिधानयोग्यं तद् वस्तु भवति । यथा—सपरिकरहेतुसंबन्धितया स्मृतस्य तदाभासहेतोर्निरूपणं प्रसङ्गनिर्वाहकम् । अभिहितवस्तुसंबन्ध उपोद्धातादिभिन्न एव ग्राह्यः । तथाचोपोद्धातभिन्नः अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयः सप्रसङ्ग इति फलितम् । **उपोद्धातः** प्रकृतोपपादकत्वम् । तदुक्तम्—'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्धातं विदुर्बुधाः' इति । प्रकृतसिद्ध्यर्थामभिहितसिद्धिफलकां किमुपपादकमिति जिज्ञासाजनकस्मृतिरूपां चिन्तामुपोद्धातसंगतित्वनिर्वाहिकां विदुरित्यर्थः । तादृशस्मृतिमादायैवोपपादकत्वे संगतिलक्षणसमन्वयादिति भावः । यथानुमानप्रामाण्यबोधकेऽनुमाने व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानत्वरूपे व्याप्तिस्वरूपोपपादकत्वे व्याप्तेः स्वरूपाज्ञानात्कथं व्याप्तिविशिष्टाद्यनुमानरूपप्रामाण्यबोधकानुमानेन प्रामाण्यसिद्धिरित्येवं चिन्तामादाय संगतित्वम् । **हेतुता** । कारणता यथा प्रकृते लिङ्गपरामर्शात्मकानुमानकार्यकारणतेन्द्रियात्मकप्रत्यक्षे प्रकृतैव यतः सर्वं चानुमितिकरणमिन्द्रियापेक्षोत्पत्तिकम् । **अवसरः** अवश्यवक्तव्यत्वम् । यथा प्रत्यक्षनिरूपणानन्तरमुपमाननिरूपणे प्रादर्शि मणिकारः स्वयं वहुवादिसंमतत्वादिति मणिग्रन्थेन । तदित्थम् । अनुमानस्य वहुवादिसंमतत्वेन निरसनीयाल्पवादिप्रतिपत्तिकतया वहुतरसुखजनकप्रतिपत्तिकत्वादत्रैव प्रथमं व्युत्पित्सोर्जिज्ञासा नतूपमाने तस्याल्पवादिसंमतत्वेन निरसनीयवहुवादिप्रतिपत्तिकतया वहुतरदुःखानुवन्धिप्रतिपत्तिकत्वात् । तथा चानुमाने प्रथममुत्पन्नायाः प्रतिवन्धकीभूतशिष्यजिज्ञासायास्तन्निरूपणेन निवृत्तावश्यवक्तव्यत्वरूपावसरसंगत्या उपमाननिरूपणमिति ॥ पञ्चम्यर्थस्य ज्ञानजन्यप्राथमिकजिज्ञासाप्रयोज्यत्वरूपस्योपमानात्प्राक् निरूपणान्वयितयोपमाननिरूपणावधिकपूर्वकालिकानुमाननिरूपणं निरसनीयाल्पवादिप्रतिपत्तिकतया वहुतरसुखापत्तिकतया च प्रत्यक्षज्ञानजन्यशिष्यसमवेतप्राथमिकजिज्ञासाप्रयोज्यमिति वोध इति । **निर्वाहकत्वम्** । एकनिर्वाहकनिर्वाह्यत्वम् । तदन्यत्वे सति तन्निर्वाहकनिर्वाह्यत्वमिति यावत् । **एककार्यत्वं** एकं कार्यं यस्येति व्युत्पत्त्या एककार्यकारित्वं तदन्यत्वे सति तत्प्रयोज्यकार्यप्रयोजकत्वमिति यावत् । यथा । सद्धेतुनिरूपणानन्तरमसद्धेतुनिरूपणे प्रमितकोटिनिश्चयरूपतत्वनिर्णयकार्यप्रयोजकत्वं तत्र व्याप्त्यादिविशिष्टहेतुज्ञानमिव विरोधिकोटिसाध्यकस्य दुष्टत्वज्ञानमुपयुज्यते प्रतिवन्धकविपरीतकोटिव्याप्यवत्ताज्ञाने अप्रामाण्यग्राहकत्वादिति सदसद्धेतोर्वस्तुतत्त्वनिर्णयरूपैककार्यप्रयोजकत्वमिति स्फुटम् । ननु निर्वाहकैककार्यत्वयोः फलतस्तौल्यात्षोढा विभागासंगतिरिति चेन्न । कारणद्वयनिरूपितकार्यत्वं पूर्वविषयः प्रयोजकद्वयकार्यत्वं परविषय इति न विभागानुपपत्तिरित्यलं विस्तरेण । **तथाचेति** । परामर्शजन्यं ज्ञानमनुमितिरिति परामर्शजन्यत्वेनानुमितेर्लक्षितत्वे चेत्यर्थः । **प्रत्यक्षप्रमित्यपेक्षयानुमितेर्विलक्षणप्रमितित्वेनेति** । प्रत्यक्षानुमित्योः परस्परं परामर्शेन्द्रियजन्यत्वाभावादिति भावः ।

ननु संशयोत्तरप्रत्यक्षेऽतिव्याप्तिः ॥ स्थाणुपुरुषसंशयानन्तरं 'पुरुषत्वव्याप्यकरादिमानयम्' इति परामर्शे सति 'पुरुष एव' इति प्रत्यक्षजननात् ॥ न च तत्रानुमितिरेवेति वाच्यम् ॥ 'पुरुषं साक्षात्करोमि' इत्यनुव्यवसायविरोधादिति चेत् ॥

## नीलकण्ठी.

त्वेन अनुमानस्य प्रमाणान्तरत्वं सिध्यतीति भावः ॥ विपरीतज्ञानोत्तरप्रत्यक्षं प्रति विशेषदर्शनस्य हेतुत्वमङ्गीकुर्वतां मतमवलम्ब्य शङ्कते—**नन्विति** ॥ **स्थाणुपुरुषसंशयेति** ॥ इदं विरुद्धभावद्वयकोटिसंशयाङ्गीकारेण ॥ परे तु **स्थाणुपुरुषेति** ॥ स्थाणुत्वतदभावपुरुषत्वतदभावकोटिकेत्यर्थ इत्याहुः। **पुरुष एवेति** निर्णयसूचनाय। **तत्र** संशयोत्तरप्रत्यक्षस्थले ॥ **अनुव्यवसायविरोधादिति** ॥ इदमुपलक्षणम् 'पुरुषमनुमिनोमि' इत्यनुव्यवसायाभावेन प्रमाणाभावादित्यपि द्रष्टव्यम् ॥ संशयोत्तरप्र-

## भास्करोदयाख्यव्याख्या.

**प्रमाणान्तरत्वमिति** । विलक्षणप्रमितिकरणतावच्छेदकधर्मवत्त्वेनेत्यर्थः । अतो न 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी'ति सूत्रविरोध इति भावः । विरोधिकोटिद्वयावगाहिसंशयस्य परस्परं प्रत्यक्षप्रतिबन्धकत्वेन प्रत्यक्षस्यैवासंभवात्संशयोत्तरप्रत्यक्षे परामर्शजन्यत्वरूपानुमितिलक्षणानतिचारात् । तदतिचाराशङ्कामवतारयति—**विपरीतेत्यादिना** । विपरीतज्ञानं विरुद्धकोटिद्वयावगाहिज्ञानं तच्च पुरोवर्तिनि वस्तुनि पुरुषत्वतद्विरुद्धस्थाणुत्वोभयरूपं यत्कोटिद्वयं तदवगाहिप्रकारत्वेनेति विशेषः । तद्धर्मप्रकारकैकधर्मिविशेष्यकं ज्ञानमिति यावत् । अथवा विरोधिकोटिद्वयं स्थाणुत्वतदभाव–पुरुषत्वतदभावोभयरूपम् । तत्प्रकारकसंशयश्च परस्परं पुरुषत्वव्याप्यकरचरणादिमत्त्वलिङ्गेन स्थाणुत्वव्याप्यवक्रकोटरत्वादिमत्त्वलिङ्गेन च भवति । तदुत्तरं यत्प्रत्यक्षं पुरुषोऽयमिति रूपं तत्प्रति विशेषदर्शनस्य यत्किंचित्पुरुषसंबन्धिचलनादिविशेषदर्शनस्य हेतुत्वमिति समुदितार्थः । **इदमिति** । इदं स्थाणुपुरुषसंशयात्मकं ज्ञानमित्यर्थः । **भावद्वयेत्यादि** । दर्शितोऽयमर्थोऽर्वाक् । **आहुरिति** । धर्मयोः परस्परं भेदवत्त्वेऽपि नोभयभेदप्रकारकसंशयो झटित्यनुभूतिभुवनमध्यारोढुमर्हतीत्यरुचिबीजमुद्भावनीयम् । **निर्णयसूचनायेति** । निर्णयो हेतुविशेषदर्शनमेवेति प्राक्तनं स्मर्तव्यम् । **अनुव्यवसायविरोधादितीति** । प्रमाणसिद्धानुव्यवसायविरोधादित्यर्थः । अस्मदीयानुव्यवसायविप्रतिपक्षप्रतिपत्तिकतया त्वदभिमतोऽनुव्यवसायो न प्रमाणसिद्ध इत्यर्थतात्पर्येण**इदमुपलक्षणमित्याह** । इममेवार्थमभिव्यनक्ति—**प्रमाणाभावादिति** । संशयोत्तरप्रत्यक्षे जननीयेऽतिव्याप्तिवारणाय परामर्शस्य पक्षतासहकारेण हेतुत्वविवक्षा, आहोस्वित् संशयोत्तरप्रत्यक्षानन्तरमतिव्याप्तिवारणाय पक्षतासहकृतपरामर्शजन्यत्वविवक्षेत्यालोच्य प्रत्यक्षे जननीये प्रत्यक्षोत्पत्तिप्रागभावक्षणावच्छेदेन परामर्शस्य पक्षतासहकारित्वेऽपि नातिव्याप्तिनिरासः फलम् । सिद्धेरसत्त्वात्सिषाधयिषायाश्च सत्त्वादसत्त्वाद्वा तदुत्तरं तु सिद्धेः सत्त्वात्सिषाधयिषायाश्चाऽसत्त्वान्नाव्याप्तिरित्याशयेन पक्षतेत्युपसंहारग्रन्थमवतारयति—**संशयेत्यादिना** । संशयोत्तरप्रत्यक्षे स्थाणुत्वपुरुषत्वो-

न ॥ पक्षतासहकृतपरामर्शजन्यत्वस्य विवक्षितत्वात् ॥ सिषाधयिषाविरहसहकृत-

## नीलकण्ठी.

त्तरप्रत्यक्षे जननीये वक्ष्यमाणपक्षतायाः परामर्शसहकारित्वे प्रयोजनाभावेन पक्षतासहकृतपरामर्शजन्यत्वविवक्षणान्नातिव्याप्तिरित्याह—**पक्षतेति** । एतेन 'वह्निव्याप्यधूमवत्पर्वतवानयम्' इति विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति विशेषण-तावच्छेदकप्रकारकनिर्णयविधया 'वह्निव्याप्यधूमवानयं पर्वतः' इति परामर्शस्य कारणत्वेऽपि न तत्रातिव्याप्तिः । पक्षतासहकृतपरामर्शजन्यत्वस्यासत्त्वेनातिव्या-प्तेरभावादिति संक्षेपः । यद्यपि साध्यसंशयस्य पक्षतात्वेपि साध्यनिश्चयकाले अनुमितिवारणं संभवति तथापि घनगर्जनेन मेघानुमितौ व्यभिचारः । अतो-ऽन्यादृशीं पक्षतामाह—**सिषाधयिषेति** । सिषाधयिषायाः साध्यानुमितीच्छायाः

## भास्करोदयाख्यव्याख्या.

भयप्रकारकसंशयानन्तरं जायमानं विशेषदर्शनजन्यं यत्प्रत्यक्षं पुरुषत्वधर्मप्रकारकं पुरुषविशेष्यकं प्रत्यक्षं तस्मिन् जननीये उत्पादनीये वक्ष्यमाणपक्षतायाः सिषाध-यिषेत्यादिसिद्धान्तपक्षतायाः परामर्शसहकारित्वेऽपि परामर्शसहकारेण कारण-त्वेऽपि प्रयोजनाभावेन सिद्धेरसत्त्वेन सिषाधयिषायाश्च सत्त्वेनासत्त्वेन वा पक्षतायाः सत्त्वेन परामर्शसहकारित्वस्य पक्षतायामभ्युपगमस्याव्यावर्तकत्वेन पक्षतासहकृत-परामर्शजन्यत्वविवक्षणान्नातिव्याप्तिः । संशयोत्तरप्रत्यक्षे सिद्धेः प्रतिवन्धकत्वात्सि-षाधयिषायाश्च सत्त्वात्सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षतासहकृतपरामर्श-जन्यत्वस्यानुमितिलक्षणस्य नातिप्रसङ्ग इति समुदितार्थः । उक्तविवक्षया शाब्दबु-द्धावप्यतिव्याप्तिनिरासः सिध्यतीत्याह—**एतेनेत्यादि** । वह्निव्याप्यधूमवत्पर्वत-वानयं देशः इत्याकारिका वह्निव्याप्यधूमविशिष्टपर्वतस्य देशवैशिष्ट्यावगाहिनी या बुद्धिस्तां प्रति विशेषणतावच्छेदकप्रकारकनिर्णयविधया विशिष्टबुद्धौ विशेषण-तावच्छेदकप्रकारेण वह्निव्याप्यधूमवान् पर्वत इति परामर्शस्य कारणत्वेऽपि अस्य परामर्शत्वं व्याप्तिविशिष्टधूमस्य पर्वते वैशिष्ट्यावगाहनान्न तत्रातिव्याप्तिः न शाब्दबुद्धावतिप्रसङ्ग इति समुदितार्थः । तत्र हेतुमाह—**पक्षतेत्यादि** । **असत्त्वेनेति** । सिद्धेः प्रतिवन्धकत्वादिति भावः । **अत्रैवं निष्कर्षः** । सत्यपि परामर्शे पक्षे साध्यनिर्णयेऽनुमितेरनुदयात् अनुमितिं प्रति पक्षताया हेतुत्वं कल्प्यते । सा च सिषाधयिषाविरहविशिष्टसिद्ध्यभावः । सिषाधयिषा च प्रकृतपक्षे प्रकृतसाध्यानुमित्सा । सिद्धिश्च पक्षे साध्यनिश्चयः । सिषाधयिषाविरहविशिष्टत्वं सिद्धौ एककालावच्छेदेनैकात्मवृत्तित्वं तेन सिषाधयिषाकालीनसिद्धेः कालिकसम्ब-न्धेन सिषाधयिषाविरहविशिष्टत्वेऽपि न क्षतिः । सिषाधयिषामात्रं न पक्षता सिषाधयिषाविरहेऽपि घनगर्जितेन मेघानुमानात् । अत एव साध्यसंदेहोऽपि न सा । एवं च पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकानुमिति-त्वावच्छिन्नं प्रति तादृशानुमितिगोचरेच्छाभावविशिष्टपर्वतत्वावच्छिन्नविशेष्यता-निरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नाभावत्वादिना हेतुत्वं वा-

त. ८

सिद्ध्यभावः पक्षता ॥ साध्यसिद्धिरनुमितिप्रतिबन्धिका सिद्धिसत्त्वेऽपि 'अनुमिनुयाम्' इतीच्छायामनुमितिदर्शनात् सिषाधयिषोत्तेजिका। ततश्चोत्तेजकाभावविशिष्टमण्यभावस्य दाहकारणत्ववत् सिषाधयिषाविरहसहकृतसिद्ध्यभावस्यापि अनुमितिकारणत्वम् ॥

**व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः। यथा 'वह्निव्याप्य-**

## नीलकण्ठी.

समवायेन योऽभावः स्वरूपसमवायैतदुभयघटितसामानाधिकरण्यसंबन्धेन तद्विशिष्टायाः सिद्धेः समवायेन अभाव इत्यर्थः। **साध्यसिद्धिः** पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहिनिश्चय इत्यर्थः। सिद्धौ सिषाधयिषाविरहवैशिष्ट्यनिवेशनस्य प्रयोजनं दर्शयति—**सिद्धिसत्त्वेपीति**। अत्र सिद्धिश्च 'पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्च' इति समूहालम्बनरूपा। अतः परामर्शसंपत्तिरिति ध्येयम्।

'व्यप्तिविशिष्टपक्षधर्मताज्ञानम्' इत्यत्र व्याप्तिविशिष्टे पक्षधर्मता व्याप्तिविशिष्टपक्ष-

## भास्करोदयाख्यव्याख्या.

त्वम्। द्रव्यं वह्निमत् पर्वतो द्रव्यवानित्याकारकसाध्यनिर्णयदशायां पर्वतो वह्निमानित्याद्यनुमित्युत्पत्तये विशिष्य पक्षतावच्छेदकविधेयतावच्छेदकयोर्निवेशः। अथैवमपि वह्निमानित्येतादृशसिद्धिकाले अधिकावगाहिन्या अपि नीलपर्वतो वह्निमान्पर्वतः सुन्दरवह्निमानित्याद्याकारकानुमित्यनुदयापत्तिः। नच पर्वतत्वादिपर्याप्तोद्देश्यतावच्छेदकत्वस्य वह्नित्वादिपर्याप्तविधेयतावच्छेदकत्वस्य च निवेशान्नानुपपत्तिरिति वाच्यम्। उभयपर्याप्तोद्देश्यतावच्छेदकतायाः प्रत्येकमेकस्मिन्नपि सत्त्वात्। पर्वतत्वपर्याप्तोद्देश्यतावच्छेदकत्वेन वह्नित्वपर्याप्तविधेयतावच्छेदकत्वेन चानुमितेः पर्वतत्वपर्याप्तोद्देश्यतावच्छेदकताकतादृशसिद्धिप्रतिबद्धतयोक्तदोषस्तदवस्थ एवेति चेन्नैवम्। पर्वतत्वमात्रपर्याप्तोद्देश्यतावच्छेदकत्वस्य वह्नित्वमात्रपर्याप्तविधेयतावच्छेदकत्वस्य निवेशेनोक्तदोषवारणसंभवात्। **वस्तुतस्तु**। पर्वतत्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वस्योद्देश्यतायां वह्निवृत्तिनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वस्य विधेयतायां निवेशेनानुपपत्त्यभावादित्यलम्। सिद्धौ सिषाधयिषाविरहवैशिष्ट्यनियामकं संबन्धं निर्वक्ति—**सामानाधिकरण्यसंबन्धेनेति**। आत्मनि सिद्धेः सिद्ध्यात्मकज्ञानस्य सिषाधयिषाविरहस्य च वृत्तित्वात्। वृत्तित्वं चाभावस्य स्वरूपेण, सिद्धेश्च समवायेनेत्यतः सामानाधिकरण्यमनयोः स्वरूपसमवायैतदुभयघटितमिति बोध्यम्। सिद्धिश्च प्रकृते न पर्वतो वह्निमानेतन्मात्ररूपा। तद्धेतुभूतपरामर्शस्य तद्घटितस्यैव कल्पनेनासामञ्जस्यमित्याह—**अत्रेत्यादि। अव्याप्तिरिति**। भ्रमस्थले वैशिष्ट्याप्रसिद्धिरिति भावः। **व्याप्ति-**

१ 'अनुमिनोमि'। 'अनुमितिर्जायताम्' इति वा पाठान्तरम्। २ अधिकविषयकत्वेऽपि पर्वतत्वाद्युक्तविषयकत्वेनानुमितेस्तादृशनिश्चयत्वाभावरूपहेतोरभावादापत्तिरिति भावः।

**धूमवानयं पर्वतः' इति ज्ञानं परामर्शः ॥ तज्जन्यं 'पर्वतो वह्निमान्' इति ज्ञानमनुमितिः ॥**

परामर्शं लक्षयति—व्याप्तीति ॥ व्याप्तिविषयकं यत् पक्षधर्मताज्ञानं स परामर्श इत्यर्थः । परामर्शमभिनीय[1] दर्शयति—यथेति ॥ अनुमितिमभिनीय दर्शयति—तज्जन्यमिति ॥ परामर्शजन्यमित्यर्थः ॥

## नीलकण्ठी.

धर्मता तज्ज्ञानमिति सप्तमीतत्पुरुषाङ्गीकारे व्यभिचारिलिङ्गकानुमितौ व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यत्वाभावेनाव्याप्तिरतो व्याप्तिविशिष्टपदस्य व्याप्तिविषयकेत्यर्थमवलम्ब्य ज्ञानान्तपदेन कर्मधारयमङ्गीकरोति—**व्याप्तिविषयकमिति** ।

## भास्करोदयाख्यव्याख्या.

**विषयकमितीति** । भ्रमात्मकं व्याप्तिविषयकं व्यभिचारलिङ्गस्य पक्षवृत्तित्वज्ञानमित्यर्थः । निष्कृष्टार्थमाह—**व्याप्तीत्यादिना** । अत्रावच्छिन्नत्वं स्वरूपसंबन्धविशेषरूपं बोध्यम् । **अत्रैवं निष्कर्षः** । अत्र वैशिष्ट्यं प्रकारिता । तथाच—व्याप्तिविशिष्टं व्याप्तिप्रकारकं यत्पक्षधर्मताज्ञानं तज्जन्यं ज्ञानमित्यर्थः । यत्साध्यहेतुकस्थले व्याप्तेरप्रसिद्धिस्तत्स्थलीयानुमितौ वास्तवव्याप्तिज्ञानजन्यत्वस्यासत्त्वेनाव्याप्तेर्वारणाय व्याप्तिपदेन व्याप्तिघटकहेत्वादीनां खण्डशः प्रसिद्धानां निरूप्यनिरूपकभावापन्नविषयिताया विवक्षणीयत्वे तु वैशिष्ट्यमाश्रयत्वरूपं बोध्यम् । अत्र पक्षधर्मत्वं हेतोः पक्षेण सह वैशिष्ट्यं, तत्र हेतुतावच्छेदकसंबन्धावच्छिन्नाधेयतायाश्च तयोर्यथाक्रमं संसर्गविधया भानेन पक्षहेतुविशेष्यकपरामर्शयोः पक्षहेतुवैशिष्ट्यावगाहित्वमक्षतम् । पक्षविशेष्यकाद्व्याप्यविशेष्यकाच्च परामर्शादनुमितेरनुभवसिद्धत्वेन व्याप्तिप्रकारकपक्षहेतुवैशिष्ट्यावगाहिनिश्चयत्वेन तत्र हेतुत्वं पक्षहेतुवैशिष्ट्यावगाहित्वं तु हेतुतावच्छेदकसंबन्धावच्छिन्नाधेयतान्यसंबन्धानवच्छिन्नपक्षविषयतानिरूपिता या हेतुतावच्छेदकसंबन्धेतरसंबन्धानवच्छिन्नहेतुविषयता तन्निरूपकत्वम् । अवगाहित्वविशिष्टे व्याप्तिप्रकारकत्वस्यान्वयेनोद्देश्यतावच्छेदकविधेयभावमहिम्ना तादृशावगाहित्वावच्छिन्नव्याप्तिप्रकारकत्वाश्रयज्ञानलाभः । परामर्शे व्याप्तिहेत्वाद्योः साक्षाद्विशेषणविशेष्यभावेन तद्विषयित्वयोरवच्छेद्यावच्छेदकभावविरहान्न तज्जन्येऽनुव्यवसायेऽतिव्याप्तिरिति । ननु पर्वतो धूमवान् इति प्रत्यक्षं ततो धूमो वह्निव्याप्य इति व्याप्तिस्मरणमाभ्यां ज्ञानाभ्यामनुमित्युत्पत्तेर्विशिष्टवैशिष्ट्यज्ञानत्वेन न कारणत्वं गौरवात्, किंतु व्याप्यतावच्छेदकप्रकारकज्ञानत्वेन लाघवादिति चेन्न । धूमवान्पर्वत इति ज्ञानादनुमित्यापत्तेः । किंच धूमालोकादिविषयकसकलपरामर्शसाधारणवह्निव्याप्तिप्रकारकनिश्चयत्वादिनैव हेतुत्वं, हेतुतावच्छेदकविषयतानिवेशे प्रयोजनाभावात् । वह्निव्याप्यत्वमत्र वह्न्यभाववदवृत्तित्वम् । एवंच व्यभिचाराभावेन तत्र कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशे प्रयोजनाभावात्

---

१ क्वचित्पुस्तके 'अभिनीय' इति नास्ति ।

## भास्करोदयाख्यव्याख्या.

तदनिवेश्यैव तत्र कार्यकारणभावो वोध्यः । किं तावन्निश्चयत्वम् । साध्येनोक्तैनैवोक्तसंशयव्यावर्तकमनुगतं चेति चेदत्र वदन्ति–वह्निव्याप्याभावाप्रकारकत्वे सति वह्निव्याप्यप्रकारकत्वमथवा वह्निव्याप्यत्वपर्याप्तप्रतियोगितावच्छेदकताकाभावाप्रकारकत्वे सति वह्निव्याप्यप्रकारकत्वमिति । तत्तु वह्निव्याप्यधूमवान्न वेति संशयेऽप्यतिप्रसक्तम् । वह्निव्याप्यधूमत्वावच्छिन्नप्रतियोगिताकाभावस्य प्रकारतया वह्निव्याप्याभावाप्रकारकत्वेन वह्निव्याप्यत्वपर्याप्तप्रतियोगितावच्छेदकताकाभावस्य चाप्रकारकत्वात् । अतो वह्निव्याप्यधूमवत्त्वावच्छिन्नाभावाप्रकारकत्वे सति वह्निव्याप्यधूमवत्त्वावच्छिन्नप्रकारताशालिज्ञानत्वमेव निश्चयत्वं वाच्यम् । एवंच हेतुतावच्छेदकविषयतामनिवेश्य निश्चयत्वनिर्वचनस्य दुर्वचतयोपदर्शितावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्वस्यावश्यकत्वेन न दोषावसर इत्यर्वाचां मतमेव सुरमणीयमित्याहुस्तन्न विचारसहम् । वह्निव्याप्यत्वमात्रधर्मावच्छिन्नप्रकारतानिरूपितविशेष्यताशालिज्ञानत्वमेव वह्निव्याप्यनिश्चयत्वं वाच्यम् । तेन वह्निव्याप्यधूमवान्न वेति संशयव्यावृत्तिः । एवंच व्याप्यतावच्छेदकघटितनिश्चयत्वेन परामर्शस्य कारणत्वान्न विशिष्टवैशिष्ट्यावगाहित्वेन कारणत्वमिति प्राचामाशङ्का निर्युक्तिकैवेति ध्येयम् । अन्ये तु परामर्शस्यानुमितिं प्रति साध्यव्याप्यत्वावच्छिन्नहेतुप्रकारतानिरूपितपक्षविशेष्यताशालिज्ञानत्वरूपविशिष्टपरामर्शत्वेन न हेतुत्वं, किंतु व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानत्वेन व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन च हेतुताद्वयम् । इत्थं च धूमो वह्निव्याप्यो धूमवान्पर्वत इति ज्ञानद्वयात्तथाविधसमूहालम्बनाद्वाऽनुमितिरुत्पद्यते न केवलं विशिष्टपरामर्शादेवेत्याहुः । एतेन वह्निव्याप्यो धूमः आलोकवान्पर्वत इति ज्ञानादनुमितिमापादयन्तः परास्ताः । विशिष्य धूमलिङ्गकानुमितिं प्रति धूमत्वावच्छिन्नविशेष्यकव्याप्तिप्रकारकज्ञानत्वेन पर्वतत्वावच्छिन्नविशेष्यकधूमत्वावच्छिन्नप्रकारकज्ञानत्वेन च हेतुत्वाश्रयणात् । एवं च यद्धर्मावच्छिन्नो व्याप्तिप्रकारकज्ञानविषयस्तद्धर्मावच्छिन्न एव पक्षधर्मताज्ञानविषय इति फलिताशयात् पर्यवसानमत्या वैशिष्ट्यावगाहित्वमर्थसमाजग्रस्तमित्यावयोः साम्यमिति तु न भ्रमितव्यम् । यतो वयं विशिष्टपरामर्शत्वावच्छेदेनैकहेतुतां न स्वीकुर्मोऽपि तु व्याप्तिप्रकारकज्ञानत्वेन पक्षधर्मताज्ञानत्वेन च प्रातिस्विकेन हेतुतां स्वीकुर्मः । कारणत्वमनन्यथासिद्धनियतपूर्ववृत्तित्वं तत्र च व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानत्वावच्छेदेन तथाविधपक्षधर्मताज्ञानत्वावच्छेदेन च नियतपूर्ववृत्तित्वमुभयवादिसिद्धमेव । तादृशधर्मयोर्विशिष्टपरामर्शव्यापकत्वात्तद्धर्मद्वयावच्छेदेनानन्यथासिद्धत्वमात्रमस्मन्नये कल्पनीयम् । भवन्नये तु विशिष्टपरामर्शत्वावच्छेदेनानन्यथासिद्धत्वं नियतपूर्ववृत्तित्वं चोभयं कल्पनीयं लघुधर्मद्वयावच्छेदेनैकैकधर्मकल्पनमस्माकं, गुरुधर्मद्वयावच्छेदेन धर्मद्वयकल्पनं भवतां गौरवमिति मीमांसकाः । **अत्र नैयायिकाः** । धूमत्वावच्छिन्नविशेष्यकव्याप्तिप्रकारकं व्याप्तिविशिष्टधूमत्वावच्छिन्नधूमप्रकारकपक्षविशेष्यकज्ञानविशिष्टं ज्ञानं कारणमभ्युपेयं कारणद्वयवादिना । अन्यथोक्तदोषप्रसक्तेरतो यत्र ज्ञानद्वयं तत्र विशिष्टज्ञानं

**यत्र धूमस्तत्राग्निरिति साहचर्यनियमो व्याप्तिः ॥**

[१]व्याप्तेर्लक्षणमाह—यत्रेति ॥ 'यत्र धूमः तत्राग्निः' इति व्याप्तेरभिनयः ॥ 'साहचर्यनियमः' इति लक्षणम् ॥ साहचर्यं सामानाधिकरण्यं, तस्य नियमः, हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरित्यर्थः ॥

## नीलकण्ठी.

व्याप्यवच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशाली निश्चयः परामर्श इति तु निर्गलितार्थः । **अभिनीय** अभिलापकशब्दमुच्चार्य ।

नियतसामानाधिकरण्यं साध्याभाववदवृत्तित्वादिरूपं न संभवति 'इदं वाच्यं, ज्ञेयत्वात्' इत्यादौ अव्याप्तेः । साध्याभावाद्यप्रसिद्धेरित्यालोच्याह—**हेतुसमानाधिकरणेति** । 'वह्निमान् धूमात्' इत्यादौ धूमसमानाधिकरणो योऽत्यन्ता-

## भास्करोदयाख्यव्याख्या.

कल्पनीयं फलमुखगौरवस्यादोषत्वादिति । नन्वेवमपि परामर्शानुव्यवसाये परामर्शस्य हेतुत्वादतिव्याप्तिरिति चेदत्र वदन्ति—लक्षणवाक्ये प्रथमज्ञानपदस्याप्रामाण्यज्ञानानास्कन्दितनिश्चयपरतया धर्मिपारतन्त्र्येण स्वावच्छिन्नजनकताकत्वसंबन्धेन जन्यतायामन्वयस्य विवक्षणीयतया तादृशविषयताशाल्यप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वावच्छिन्नजनकताकजन्यत्वं पर्यवसितम् । परामर्शप्रत्यक्षे तु सामान्यतो विषयत्वेन तत्तद्व्यक्तिप्रत्यक्षे तत्तद्व्यक्तित्वेन हेतुत्वं, नतु तादृशनिश्चयत्वेन । एवंच तादृशनिश्चयत्वावच्छिन्नजन्यत्वस्यासत्वान्नातिव्याप्तिः । अत एवापत्तौ परामर्शस्य हेतुत्वेऽपि नातिव्याप्तिस्तत्राप्रामाण्यज्ञानानास्कन्दिततत्तादृशनिश्चयत्वेन हेतुत्वादप्रामाण्यज्ञानानास्कन्दितत्वघटितधर्मावच्छिन्नजन्यताया असत्त्वात् । नन्वेवमपि रक्तदण्डवानित्यत्र रक्तत्वदण्डत्वविशिष्टदण्डविशिष्टपुरुषविशेष्यकविशिष्टवैशिष्ट्यावगाहिबुद्धेः रक्तत्वस्य विशेषणविशेषणतया विशेषणतावच्छेदकरूपत्वेन तन्निर्णयहेतुकत्वात्तद्धूमवत्पर्वतवानिति विशिष्टवैशिष्ट्यबुद्धौ पक्षविशेष्यकपरामर्शस्य विशेषणतावच्छेदकनिर्णयविधया हेतुत्वेनातिव्याप्तितादवस्थ्यमिति चेन्न । व्याप्यपक्षविशिष्टवैशिष्ट्यावगाहित्वाद्यात्मकानुगतधर्मावच्छिन्नजनकताया लक्षणे निवेशेन तद्वारणात् । एतेन प्रत्येककारणतावादिनोऽपि समाहिताः । न चैवमपि विषयस्य कारणत्वात्तादवस्थ्यमिति वाच्यम् । परामर्शज्ञानजन्यत्वविवक्षणात् । परामर्शजन्यसंस्कारे तु तादृशजन्यत्वाभावादेव वारणादिति संक्षेपः । **अभिलापकशब्दमुच्चार्येति** । ज्ञानाभिलापकं ज्ञानस्वरूपबोधकं ज्ञानीयविषयविषयकशाब्दबोधजनकशब्दमिति यावत् । नव्यास्त्वनुमिनोमीत्यनुव्यवसायसिद्धजातिमत्त्वमनुमितेर्लक्षणमतः परामर्शजन्यत्वेन तत्स्मरणे नातिप्रसंगसंभावनेत्याहुः । मणिकारोक्तादिमसाध्याभाववदवृत्तित्वादिलक्षणान्यनादृत्य प्रथमत्यागे मानाभावात्सिद्धान्तलक्षणानुधावनं व्यर्थप्रयोजनमिति शङ्कानिरासाय तदनादरणे बीजं संगिरते—**'इदं वाच्यं ज्ञेयत्वादित्यादावव्याप्तेरिति** । अत्र वाच्यत्वमभिधाविषयत्वं ज्ञेयत्वं ज्ञानविषयत्व-

---

१ व्याप्तिं लक्षयति ।

## नीलकण्ठी.

भावो घटात्यन्ताभावः तदप्रतियोगी वह्निः तत्सामानाधिकरण्यं धूमेऽस्तीति लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ तु धूमसामान्याभावस्यापि हेतुसमानाधि-

## भास्करोदयाख्यव्याख्या.

मुभयं ज्ञानविशेषरूपं ज्ञानस्वरूपं विषयस्वरूपं वा संबन्धमङ्गीकुर्वन्त्यर्वाचीनाः। तदपरे न क्षमन्ते। घटवद्भूतलमित्यादिज्ञाननिरूपितप्रकारताख्यविषयतानामन्योन्यज्ञानस्वरूपत्वे भूतलविषयकज्ञानस्य घटज्ञानीयप्रकारताख्यविषयतास्वरूपतया भूतलप्रकारकज्ञानवानहमित्येवं घटज्ञानस्य भूतलज्ञानविशेष्यताख्यविषयतास्वरूपतया घटविशेष्यकज्ञानवानहमिति प्रत्यभिज्ञापत्तेः। तत्तज्ज्ञानीयविषयतायास्तत्तज्ज्ञानस्वरूपत्वविवक्षायां तु विषयताया ज्ञाननिरूपितत्वभङ्गप्रसङ्गः। एवं घटपटावित्यादिसमूहालम्बनधियो भ्रमत्वापत्तिश्च। घटत्वप्रकारकज्ञानविषयतायाः घटनिष्ठायाः पटत्वप्रकारकज्ञानस्वरूपत्वादेवं पटनिष्ठायाः पटत्वप्रकारकज्ञानविषयतायाः घटत्वप्रकारकज्ञानस्वरूपत्वाद्घटपटत्वप्रकारकज्ञानविषयताकज्ञानस्य सत्त्वादेवं पटे घटत्वप्रकारकज्ञानविषयताकज्ञानस्य सत्त्वात्तदभाववति तत्प्रकारकानुभवरूपाऽयथार्थत्वात्। विषयस्वरूपत्वे च भूतलसंयोगा इत्याद्याकारकसमूहालम्बनीयविषयतानां घटवद्भूतलमित्यादिविशिष्टज्ञाननिरूपितघटादिनिष्ठविषयतानां तत्तत्स्वरूपत्वेनाविलक्षणतया समूहालम्बनविशिष्टबुद्ध्योर्वैलक्षण्यानुपपत्तेर्ज्ञानविषयाभ्यामतिरिक्तं विषयत्वं विषयाश्रयकमङ्गीकर्तव्यम्। एवं चेश्वरीयवाच्यत्वज्ञेयत्वयोः केवलान्वयितया साध्याभावहेत्वधृत्तित्वयोरसत्त्वादप्रसिद्धिनिबन्धनाऽव्याप्तावपि केवलान्वयित्वशून्यकाले भ्रमात्मकव्याप्तिज्ञानादनुमितिनिर्वाहेऽपि केवलान्वयित्वज्ञानकाले पश्चानां केवलान्वयिन्यभावादिति मणिग्रन्थानुसारेण' व्याप्त्यभिधानमिति भावः। यद्यपि साध्याभाववदवृत्तित्वादिरूपसाहचर्यनियमशब्दप्रतिपाद्या व्याप्तिर्न केवलान्वयिनि तथापि एतद्रूपसाहचर्यनियमशब्दप्रतिपाद्या व्याप्तिर्निर्दुष्टैव। ज्ञेयत्वाधिकरणजन्मात्रवृत्ति यत्किञ्चिद्घटाद्यभावाप्रतियोगिवाच्यत्वसाध्यसामानाधिकरण्यस्य ज्ञेयत्वहेतौ प्रसिद्धत्वेन एतस्य सिद्धान्तं बोधयितुमत एव मणिकारः प्रतिजज्ञे चादौ 'अत्रोच्यते' इति। ननु मणिकारोक्तलक्षणस्य प्रतियोग्यसमानाधिकरणघटिततया यत्तत्पदादिघटिततया चान्यादृशत्वेन तद्विपरीताश्रयणेऽव्याप्यवृत्तिसाध्यकेऽव्याप्तिरितिचेन्न। दोषवारणाय यत्समानाधिकरणाभावे प्रतियोग्यसमानाधिकरणनिवेशावश्यकत्वेन तद्घटितत्वे हेत्वधिकरणे तत्तद्दोषवारणाय हेतुतावच्छेदकसंबन्धादिनिवेशावश्यकतया तद्घटितनिबन्धनापत्तेर्विवक्षामात्रेण दोषवारणसंभवात्, तत्फलितं लक्षणं परिचस्कार। किंच यत्पदस्य स्वप्रयोजकबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्ततया प्राथमिकयत्पदस्य हेतुतावच्छेदकत्वाभिमतधूमत्वाद्यात्मकविशेषधर्मावच्छिन्नपरतया तथा द्वितीयस्यापि साध्यतावच्छेदकत्वाभिमतवह्नित्वाद्यवच्छिन्नपरतया चैतदर्थस्यैव पर्यवसन्नत्वात् साक्षात्तत्तद्धर्मावच्छिन्नतद्बोधकपदेन तद्बोधापेक्षया बुद्धिविषयतावच्छेदकत्वेन तद्धर्मावच्छिन्नबोधे फलविशेषादर्शनाच्चैवमिति बोध्यम्। अत्र यथा

**व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता ॥**

पक्षधर्मतास्वरूपमाह—व्याप्यस्येति ॥

## नीलकण्ठी.

करणतया तत्प्रतियोग्येव धूम इति नातिव्याप्तिः । नच वह्निमान् धूमादित्यादौ तत्तद्वह्न्यभावस्य चालनीन्यायेन धूमसमानाधिकरणतया तादृशाभावाप्रतियोगित्वं न कस्यापि वह्नेरित्यव्याप्तिरिति वाच्यम् । अप्रतियोगिसाध्येत्यस्य प्रतियोगितानव-

## भास्करोदयाख्यव्याख्या.

श्रुते साध्यतावच्छेदकविशिष्टे तादृशाभावप्रतियोगितावच्छेदकधर्मविशिष्टान्यत्वाप्रतीतेः सर्वस्यापि वह्नेर्धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकपर्वतीयत्वमहानसीयत्वादिधर्मविशिष्टत्वादित्याशयेनाव्याप्तिमाशङ्कते—**नचेत्यादिना** । विशेषणभेदेन तत्तद्व्यक्तिभेदमादायेदम् । वह्नित्वेन वह्नेः साध्यत्वेपि उभयाभावविशिष्टाभावमादाय दोषोऽवसेयः । **चालनीन्यायेनेति** । बहुच्छिद्रं तितउपर्यायं वैतुर्ष्यकरणमुच्यते तत्र पिहितेऽपि कस्मिंश्चिच्छिद्रे छिद्रान्तरेण सक्त्वादिर्निःसरत्येव यथैवं शृङ्गग्राहिकया पर्वतीयत्वादिविशिष्टानां सर्वेषां साध्यतया पर्वते पर्वतीयवह्निसत्त्वेऽपि महानसीयवह्निर्नास्ति महानसे पर्वतीयवह्निर्नास्तीति प्रतीत्या सर्वासां साध्यव्यक्तीनां प्रतियोगित्वमेवेति भावः । **अप्रतियोगीत्यादि** । तात्पर्यकतयेत्यन्तस्याव्याप्तिवारणतात्पर्यानुपपत्त्यैतदर्थे लाक्षणिकत्वं बोध्यमित्यर्थः । **अदोषादिति** । साध्यतावच्छेदके प्रतियोगितावच्छेदकान्यत्वस्य पर्यवसिततया हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको यो धर्मस्तद्धर्मावच्छिन्नेन सामानाधिकरण्यं तद्धेतोस्तद्धर्मावच्छिन्नानुमितिजनकज्ञानविषयव्याप्तिपदार्थ इति ततो वह्नित्वावच्छिन्नप्रतियोगिताकाभावाभावादव्याप्तिरूपदोषाभावादित्यर्थः । न चैवमपि महानसीयवह्न्यभावीयप्रतियोगितावच्छेदकं महानसीयत्वं वह्नित्वं च यतः महानसीयवह्नित्वं महानसीयत्वसमानाधिकरणवह्नित्वमतः साध्यतावच्छेदके वह्नित्वे प्रतियोगितावच्छेदकान्यत्वं दुर्घटमेवेति वाच्यम् । अवच्छेदकद्वयपर्याप्तावच्छेदकत्वावच्छिन्नभेदस्यैकदेशावच्छेदके घटपटोभयवृत्त्युभयत्वावच्छिन्नोभयभेदस्य घटपटैकदेश इव वह्नित्वे सुघटत्वात् । एतेन साध्यतावच्छेदकतदितरोभयधर्मानवच्छिन्नप्रतियोगितावच्छेदकभेदवैशिष्ट्यस्य साध्यतावच्छेदके विवक्षणान्नोक्ताव्याप्तिरिति निरस्तम् । उक्तरीत्यैव सामञ्जस्ये गौरवोदक्षरत्वप्रस्तैतादृशप्रकारस्यानुचितत्वात् । किञ्चैतन्मते तादृशप्रतियोगितावच्छेदकतदितरोभयभेदमादायातिप्रसङ्गस्य वारणाय तादृशावच्छेदकभेदप्रतियोगितायां तादृशावच्छेदकत्वेतरधर्मानवच्छिन्नत्वं निवेश्यम् । अत्र च विशिष्टाद्यभाववारणाय तदनवच्छिन्नत्वमपि तथैव परिष्करणीयमिति विशेषणानवस्थाप्रसङ्ग इत्यलम् । हेतुव्यक्तिभेदेन सामानाधिकरण्यान्तव्याप्तीनां भेदेऽपि तत्र हेतुतावच्छेदकत्वाभिमत-

---

१ 'चालनी तितउः पुमा'नित्यमरः ।

**अनुमानं द्विविधम्—स्वार्थं परार्थं च ॥ तत्र स्वार्थं स्वानुमितिहेतुः ॥ तथा हि—स्वयमेव भूयोदर्शनेन यत्र धूमस्तत्राग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतः तद्गते चाग्नौ सन्दिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति 'यत्र धूमस्तत्राग्नि'रिति, तदनन्तरं 'वह्निव्याप्यधूमवानयं पर्वत' इति ज्ञानमुत्पद्यते अयमेव लिङ्गपरामर्श उच्यते ॥ तस्मात् 'पर्वतो वह्निमान्' इति ज्ञानमनुमितिरुत्पद्यते ॥ तदेतत्स्वार्थानुमानम् ॥**

अनुमानं विभजते—अनुमानमिति । तद्द्वैविध्यं दर्शयति—स्वार्थमित्यादिना ॥

## नीलकण्ठी.

च्छेदकसाध्यतावच्छेदकावच्छिन्नत्वमर्थतात्पर्यकतयाऽदोषात् । प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं निवेशनीयम् । तेन वह्निमान् धूमादित्यादौ समवायेन वह्नित्वावच्छिन्नप्रतियोगिताकाभावस्य धूमसमानाधिकरणत्वेऽपि न क्षतिः । हेतुपदं हेतुतावच्छेदकावच्छिन्नपरम् । अतो 'द्रव्यं विशिष्टसत्वात्' इत्यादौ विशिष्टस्य शुद्धानतिरेकितया हेत्वधिकरणगुणादिनिष्ठत्वेऽपि द्रव्यत्वाभावस्य नाव्याप्तिः । हेत्वधिकरणता हेतुतावच्छेदकसंबन्धावच्छिन्ना ग्राह्या । तेन 'वह्निमान् धूमात्'

## भास्करोदयाख्यव्याख्या.

धूमत्वादिरूपेण हेतोर्निवेशाद्धूमव्यापकतावच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यत्वादिना व्याप्तिव्यक्तीनामनुगमात्सामान्यलक्षणाप्रत्यासत्त्या पक्षीयहेतुनिष्ठव्याप्तेरपि महानसीयधूमादौ व्याप्त्यनुभवदशायामनुभवेन स्मरणसंभवात् विशिष्टवैशिष्ट्यावगाहिपरामर्शोत्पत्त्याऽनुमितिनिर्वाहः । **प्रतियोगितायां** हेतुसमानाधिकरणात्यन्ताभावीयप्रतियोगितायाम् । **साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं निवेशनीयमिति** । प्रकृतसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वमित्यर्थः । तेनैतद्रूपवानेतद्रसादित्यादावेतद्रूपीयसाध्यतावच्छेदकसमवायसंबन्धस्यापि प्रसिद्धतया तमादाय न वह्निमान्धूमादित्यादौ प्राप्ताव्याप्तिवारणासंगतिः । **न क्षतिरिति** । पर्वते समवायेन वह्निर्नास्तीति प्रतीतावपि संयोगेन तदभावप्रमात्मकप्रतीतेरभावान्नाव्याप्तिशङ्केत्यर्थः । **विशिष्टस्य शुद्धानतिरेकितयेति** । विशिष्टं शुद्धान्नातिरिच्यत इति न्यायेनेत्यर्थः । **हेतुतावच्छेदकसंबन्धावच्छिन्ना ग्राह्येति** ।

१ नन्वयं किमौत्सर्गिको नियम उत वैशेषिकोऽपि । औत्सर्गिकत्वे अन्तःकरणावच्छिन्नचैतन्यशुद्धचैतन्ययोरनतिरेकाद् जायत इत्यादिषड्भावविकारित्वप्रसङ्गः शुद्धस्य स्यात् । वैशेषिकत्वे नीलाकारोऽपि पीताकारः स्यात्, नीलविशिष्टस्य घटानतिरेकात् पीतघटस्य शुद्धघटातिरेकेण पीतघटो घट एवेति चेन्न । आदावन्तःकरणावच्छिन्नस्य फलतः शुद्धस्वरूपत्वेऽपि

## नीलकण्ठी.

इत्यादौ वह्निसामान्याभावस्य धूमसमवायिनिष्ठत्वेऽपि नाव्याप्तिः । न चैवमपि कपिसंयोगी एतद्वृक्षत्वादित्यादौ अव्याप्तिः साध्यस्य हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नत्वादिति वाच्यम् । हेतुसमानाधिकरणाभावे प्रतियोगिवैयधिकरण्यस्य निवेशनीयत्वात् । केवलान्वयिसाध्यके तादृशस्य घटाभावादेः

## भास्करोदयाख्यव्याख्या.

प्रकृते हेतुतावच्छेदकसंबन्धावच्छिन्ना स्वीकार्येत्यर्थः । येन संबन्धेन पक्षे हेतुः स संबन्धस्तदवच्छेदक इत्यर्थः । **नाव्याप्तिरिति** । एवमयमात्मा ज्ञानादित्यत्र विषयतासंबन्धेन ज्ञानाधिकरणघटादिवृत्त्यात्मत्वाभावमादाय नाव्याप्तिरित्यादिशब्दार्थः । द्रव्यत्वावच्छिन्ने संयोगप्रागभावध्वंसवति संयोगसामान्याभावस्यासत्त्वाद्विरोधादत्यन्ताभावानङ्गीकाराच्च । विभ्वन्तरसंयोगस्य सत्त्वात्संयोगसामान्याभावाप्रसिद्धेः । प्राचीनमतानुसारेण **कपीति** । नव्यमते विभुद्वयसंयोगानङ्गीकारात्संयोगप्रागभावतद्ध्वंसाधिकरणे तद्विरोधे मानाभावात्कपीति व्यर्थमिदं प्रागवोचाम । अत्र देशकालविशेषाद्यवच्छेदेन कपिसंयोगाभावसत्त्वादिति बोध्यम् । इदमुपलक्षणम् । संयोगि द्रव्यत्वादित्यत्र च द्रव्ये घटादौ उत्पत्तिकालावच्छेदेन गगनादौ तु महाप्रलयावच्छेदेन संयोगसामान्याभावस्य सत्त्वादेवं वह्निमान्धूमादित्यादौ धूमवत्यपि 'इह पर्वते नितम्बे हुताशनो न शिखरे' इति प्रतीत्या संयोगसंयोगवतोरभावप्रसिद्धेरव्याप्तिः । संयोगेन द्रव्यस्याव्याप्यवृत्तित्वात् । संबन्धस्याव्याप्यवृत्तित्वे संबन्धिनोऽव्याप्यवृत्तित्वस्य युक्तत्वात् । तथाच तत्तदव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यविशेषणमावश्यकमिति भावः । नचोक्तव्याप्यवृत्तिसाध्यके एवाव्याप्तिसंभवेऽव्याप्यवृत्तिसाध्यकस्थलानुधावनं सर्वेषामेव ग्रन्थकृतां सिद्धवन्न न्यायसजातीयमिति शङ्क्यम् । संयोगेन द्रव्यस्याव्याप्यवृत्तित्वेनाव्याप्तावपि संयोगाव्याप्यवृत्तिकाव्याप्त्यपेक्षणस्य प्रथमत्यागन्यायविरोधमूलकत्वेन तदनुधावनात् । नन्वेवमपि उक्तदोषवारणाय प्रतियोग्यसामानाधिकरण्यनिवेशस्य सामञ्जस्ये प्रतियोगिविरुद्धाधिकरणवृत्तित्वघटितस्यान्यानुसन्धानमूलकत्वेन गौरवग्रस्तत्वमिति चेन्न । प्रतियोग्यसामानाधिकरण्यं च स्वप्रतियोगिसामानाधिकरण्याभाववत्त्वं एवंच 'द्रव्ये हेतुसमानाधिकरणाभावे प्रतियोगिसामानाधिकरण्यं न गुणे' इति प्रतीत्या सामानाधिकरण्यस्याव्याप्यवृत्तित्वाङ्गीकर्तृनये प्रतियोग्यसामानाधिकरण्यनिवेशेनैव निर्वाहेऽपि तत्प्रतीतिः । संयोगाभावनिष्ठसंयोगसामानाधिकरण्यस्य निरूपकतासंबन्धेनाभावगुणेऽवगाहते, न तु संयोगाभावे गुणावच्छेद्यसंयोगसामानाधिकरण्याभावमित्यभ्युपगच्छतां नये तदनिर्वाहात् । प्रतियोगिवैयधिकरण्यविशेषणस्यैवावश्यकतयेत्याशयात् यदर्थोऽयं प्रयास इति न्यायेन केवलान्वयिस्थलीयाव्याप्तिं परिहरति—**केवलान्वयीत्यादिना** । **तत्त्वम्**

---

बिम्बप्रतिबिम्बभावमहिम्ना दर्पणोपाधितुल्यान्तःकरणोपाधिकृतविकारित्वमुपाधिमत एव, एवमुत्तरत्रापि फलतः पीतस्य शुद्धत्वेऽपि स्वरूपतो भेदान्न दोषावसर इत्यलम् ।

तन्नेति । उभयोर्मध्ये इत्यर्थः ॥ स्वार्थानुमितिं दर्शयति—स्वयमेवेति । भूयो दर्शनेनेति ॥ ननु पार्थिवत्वलोहलेख्यत्वादौ शतशःसहचारदर्शनेपि मण्यादौ

## नीलकण्ठी.

प्रसिद्धत्वान्नाव्याप्तिरिति । अधिकमस्मदीयमणिदीधितिव्याख्यायां बुद्धिकुशलैरनुसंधेयम् ।

**स्वार्थानुमितिमिति** । स्वस्यार्थः प्रयोजनं साध्यसंशयनिवृत्तिरूपं यस्या इति व्युत्पत्त्या स्वीयसंशयनिवृत्तिप्रयोजनिकामनुमितिमित्यर्थः । **पश्यन् इति** । 'एकसंबन्धि ज्ञानमपरसंबन्धिस्मारकम्' इति रीत्या दर्शनस्य स्मृतिहेतुत्वादिति भावः ।

## भास्करोदयाख्यव्याख्या.

तदत्यन्ताभावप्रतियोगित्वम् । **घटाभावादेः प्रसिद्धत्वादिति** । ननु ज्ञेयत्वरूपहेत्वधिकरणजगद्वृत्त्यभावः कदा सिध्येत्, घटादौ घटादेर्जगतोऽतिरिक्तत्वे तदेव न संभवतीति चेन्न । शाखोपशाखासमुदायस्य वृक्षरूपत्वेऽपि वृक्षे यत्किंचिच्छाखाभावप्रतीतिवदुपपत्तेः । **मणिदीधितिव्याख्यायामिति** । मणिश्च दीधितिश्च मणिदीधिती तयोर्व्याख्यायाम् । द्वन्द्वोत्तरतत्पुरुषाद्द्वन्द्वान्तश्रूयमाणन्यायेन[२] प्रत्येकमभिसंबन्धान्मणिव्याख्यायामभिनवप्रभाख्यायां दीधितिव्याख्यायामभिनवदीधितिव्याख्यायामित्यर्थः । **बुद्धिकुशलैरिति** । बुद्धिः कुशला येषामिति व्युत्पत्त्या कौशल्यविशिष्टबुद्धिमद्भिरित्यर्थानुपपत्तेर्विशेषणवाचकपूर्वपदघटितत्वस्यैव न्याय्यत्वात्कथमस्य साधुतेति चेद्वाक्पटुवत्समासात् बुद्धिनिरूपितकौशल्यविशिष्ट इति बोधान्न दोषावसर इति बोध्यम् । **अनुसंधेयमिति** । अधिकमित्यनेनान्वयः । ग्रन्थगौरवभिया नास्माभिरिह विस्तृतमिति भावः । **स्वार्थानुमितीति** । स्वार्थानुमितिपदावयवार्थमाह—**स्वस्येति** । अनुमातुरित्यर्थः । **अर्थः प्रयोजनमिति** । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इति कोशादर्थशब्दोऽत्र प्रयोजनवाचीति बोध्यम् । नचायं साधीयान् । 'अनेकमन्यपदार्थे' इति सूत्रेणानेकसुबन्तानां समस्यमानपदार्थातिरिक्तपदार्थे वर्तमानानां समानाधिकरणानां समासविधानात्प्रकृते तदभावाच्चेति चेत् 'सप्तमीविशेषणे बहुव्रीहौ' इति विधानात्क्वचिद्व्यधिकरणबहुव्रीहेः साधुत्वज्ञापनात्कण्ठे कालवदिहापि संभवान्न दोष इत्याहुः । यद्यपि वक्ष्यमाणलिङ्गपरामर्शादेव स्वीयसंशयनिवृत्तिस्तथाप्यनुमितेः संशयनिवर्तकत्वमभ्युच्चयमात्रं बोध्यम् । **दर्शनस्येति** । ज्ञानमात्रपरमेतत् । अत एव हस्तिहस्तिपकयोराधाराधेयभावसंबन्धज्ञानोत्तरं कालान्तरेऽन्यतरसंबन्धिनि हस्तिनि हस्तिपके वा दृष्टेऽपरसंबन्धिनः स्मरणज्ञानवदुद्बोधकबलात्स्मृतस्यैकसंबन्धिनोऽपर

---

१ स्वार्थानुमानं विविच्य दर्शयति–'तथाहि' इति । २ द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसंबध्यते, इति न्यायस्वरूपम् ।

**व्यभिचारोपलब्धेर्भूयोदर्शनेन कथं व्याप्तिग्रह इति चेत् ॥ न ॥ व्यभिचारज्ञानविरहसहकृतसहचारज्ञानस्य व्याप्तिग्राहकत्वात् ॥**

## नीलकण्ठी.

**कथं व्याप्तिग्रह इतीति** । व्यभिचारज्ञानदशायां न कश्चिदपि व्याप्तिनिश्चयमभ्युपैतीति भूयोदर्शनस्य व्याप्तिनिश्चयहेतुत्वं न संभवतीति भावः । इदमुपलक्षणं भूयोदर्शनमित्यस्य भूयसां दर्शनानां समाहार इति, भूयसां साध्यहेतूनां दर्शनमिति, भूयःस्वधिकरणेषु दर्शनमिति वार्थः । नाद्यः । एकत्रैव सहचारदर्शनधारया व्याप्तिनिश्चयप्रसङ्गात् । न द्वितीयतृतीयौ । 'एतद्रूपवान् एतद्रसात्' इत्यादिसाध्यहेत्वोरधिकरणे च भूयस्त्वाभावेन व्याप्तिनिश्चयस्यानुत्पादप्रसङ्गादित्यपि बोध्यम् । मणिकारसिद्धान्तमतमवलम्ब्याह—**व्यभिचारज्ञानविरहेति** । **व्याप्तिग्राहकत्वादिति** । व्याप्तिश्च हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकरूपैव, सामानाधिकरण्यान्तस्य रासभादिसाधारण्यात् । धूमत्वादेः स्वरूपतो व्याप्यतावच्छेदकत्वं

## भास्करोदयाख्यव्याख्या.

सारकत्वानुभवप्रसिद्धिसिद्धिः । **कथंव्याप्तिग्रह इतीतीति** । हीरकादिमणेः पार्थिवत्वमङ्गीकृत्येदम् । आकरजं सुवर्णादीत्यादिपदग्राह्यत्वात्तैजसत्वमिति मते व्यभिचाराशङ्कासमाधानयोर्नावसरः । **व्यभिचारज्ञानदशायाम्** । मण्यादौ लोहलेख्यत्वाग्रहदशायाम् । **कश्चिदपि** । व्याप्तिनिश्चेता यः कश्चिदपि । **व्याप्तिनिश्चयम्** । निश्चयात्मकव्याप्तिज्ञानम् । भूयोदर्शनेनेत्यादिः । **अभ्युपैति** । नेत्यनेनान्वयः । न प्राप्नोति । **भूयोदर्शनस्य** शतशः पार्थिवत्वलोहलेख्यत्वयोः सहचारदर्शनस्य । अतोहेतोरित्यादिः । **व्याप्तिनिश्चयहेतुत्वम्** । निश्चयात्मकव्याप्तिज्ञानहेतुत्वं **न संभवति** । व्यभिचारज्ञानस्य हेतुसाध्ययोः सहचारज्ञानप्रतिबन्धकत्वादिति एवं **भावः** शङ्काग्रन्थीयतात्पर्यार्थ इति समुदितार्थः । **इदमुपलक्षणमिति** । भूयोदर्शनस्य व्याप्तिनिश्चयहेतुत्वं न संभवतीत्येतत्पदार्थासंभवदोषान्तरस्याप्युपलक्षणविधया बोधकत्वमित्यर्थः । **एकत्रैवेत्यादि** । नचैवं सति का क्षतिरिति वाच्यम् । महानसे वह्निधूमयोः सकृत्सहचारदर्शनेनैव व्याप्तिनिश्चये सहचारदर्शनधाराया अनुपयोगप्रसङ्गादिति भावः । **भूयस्त्वाभावेनेति** । एतद्रूपत्वेनैतद्रसत्वेनैतद्रूपैतद्रसरूपसाध्यहेत्वधिकरणमेकमेव न नानेति भावः । **व्यभिचारेत्यादि** । अन्यथा साध्यवह्निहेतुधूमयोः सहचारज्ञानस्य सत्त्वाद्व्याप्तिनिश्चये व्याप्तिलक्षणे साध्यवद्वृत्तित्वमात्रसामञ्जस्ये तदभाववद्वृत्तित्वाभावाभ्युपगमस्य निर्बीजत्वापत्तेरिति दिक् । इदानीं हेतुतावच्छेदकान्तव्याप्तिघटकहेतुतावच्छेदकदलस्य कृत्यं दर्शयति—**सामानाधिकरण्यान्तस्येत्यादिना** । सामानाधिकरण्यान्तस्य यथाश्रुतलक्षणस्य रासभादिसाधारण्याद्धूमरूपहेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकवह्नित्वरूपसाध्यतावच्छेदकावच्छिन्नवह्निरूपसाध्याधिकरणवृत्तित्वरूपसाध्यसामानाधिकरण्यस्य रासभादिवृत्तित्वाद्रासभादीनां व्याप्य-

व्यभिचारज्ञानं द्विविधम्—निश्चयः, शङ्का च ॥ तद्विरहः क्वचित्तर्कात् । क्वचित्

## नीलकण्ठी.

तादृशधूमत्वत्वादिरूपेण व्याप्तित्वमित्यवच्छेद्यावच्छेदकयोरैक्येपि न क्षतिः। इत्थं च साध्यतावच्छेदके तथाविधप्रतियोगितानवच्छेदकत्वांशग्रहे साध्यतावच्छेदके तथाविधप्रतियोगितावच्छेदकत्वरूपव्यभिचारग्रहाभावो विपरीतग्रहाभावविधया नाभावरूपतया हेतुः । साध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकत्वांशग्रहे तु विशेषणज्ञानविधया सामानाधिकरण्यज्ञानं हेतुरिति रीत्या व्यभिचारज्ञानाभावसामानाधिकरण्यज्ञानयोर्व्याप्तिग्रहहेतुतेति ध्येयम् । वस्तुतस्तु हेतुव्यापकसाध्यसामानाधिकरण्यमेव व्याप्तिः । न च व्याप्ते रासभसाधारण्येन प्रमात्मकरासभलिङ्गकपरामर्शाद्भ्रमात्मकवह्न्यनुमित्यापत्तिः । प्रमात्मकपरामर्शस्य भ्रमानुमित्यजनकत्वनियमसत्त्वेन इष्टापत्तेरयोगादिति वाच्यम् । यद्धर्मावच्छिन्नव्यापकत्वं व्याप्तिघटकं तद्धर्मधर्मितावच्छेदकव्याप्तिप्रकारकनिश्चयस्यैवानुमितिहेतुत्वोपगमेनादोषात् । अत एव व्याप्तिशरीरे धूमत्वत्वाप्रवेशेन लाघवमिति दिक् ।

**शङ्का चेति** । व्यभिचारसंशयस्यापि व्याप्तिग्रहप्रतिबन्धकत्वानुभवात् तत्साधारणव्यभिचारज्ञानत्वावच्छिन्नाभावो हेतुरिति हृदयम् । **तद्विरहो** व्यभिचारज्ञा-

## भास्करोदयाख्यव्याख्या.

त्वाद्याप्तिविशिष्टरासभवानयमिति परामर्शात्प्रमात्मकवह्न्यनुमित्यापत्तिरिति तदर्थः । तथा चेदानीं व्याप्यताव्याप्यतावच्छेदकयोरैक्यादवच्छेद्यावच्छेदकभावो न प्राप्नोति, तयोर्भेद एव तत्संभवादित्याशङ्कां परिजिहीर्षन् तयोर्भेदमवलम्बते—**स्वरूपत इत्यादिना** । अयं भावः । धूमत्वादेर्जातित्वाज्जात्यखण्डोपाध्यतिरिक्तानामेव किञ्चिद्धर्मपुरस्कारेण भाननियमात्स्वरूपत एवावच्छेदकत्वं, व्याप्तित्वं तु धूमत्वादेर्न स्वतः । धूमत्वस्य रासभत्वेन भ्रमदशायां भ्रमात्मकरासभत्वलिङ्गकपरामर्शात्प्रमात्मकवह्न्यनुमित्यापत्तिः । धूमत्वत्वादिरूपेण धूमत्वादेर्व्याप्तित्वे न रासभत्वेन रूपेण धूमत्वे व्याप्तित्वं संभवतीति । **न क्षतिः** नावच्छेद्यावच्छेदकभावानुपपत्तिः । यथा साध्याभाववदवृत्तित्वमिति लक्षणस्य हेतौ व्याप्तिग्रहे हेतौ साध्याभाववद्वृत्तित्वस्य विरोधित्वाद्विरोधिग्रहाभावमुद्रया हेतुत्वं तद्वदिहापि अनवच्छेदकत्वांशस्य सामानाधिकरण्यघटितत्वात्सामानाधिकरण्यांशस्यापि हेतुविशेषणज्ञानविधया न ज्ञानहेतुरिति रीत्येति बोध्यमित्याह—**इत्थंचेत्यादि** । लाघवमूलकार्थस्य वस्तुगतित्वमनुरुध्याह—**वस्तुतस्त्विति** । भक्षितेऽपीति न्यायेन तद्दोषतादवस्थ्याल्लाघवं केवलं विफलमित्याशङ्कते—**नचेति** । **तद्धर्मधर्मितावच्छेदकेति** । स धर्मो धर्मितावच्छेदको यस्मिन् इति बहुव्रीहिरन्यपदार्थे कः । अन्यपदार्थश्च व्याप्तिप्रकारकनिश्चयः । तथाच यद्धेतुतावच्छेदकावच्छिन्नव्याप्तिकं साध्यं तद्धेतुतावच्छेदकावच्छिन्न एव साध्यसामानाधिकरण्यं विवक्षितमित्यर्थः । **अदोषात्** । धूमत्वेन भासमाने रासभादौ व्याप्तिग्रहस्य धूमत्वांशे भ्रमत्वनियमो यत इत्यादिः । एतत्कल्पे लाघवमुपपादयति—**अत एवेत्यादिना** । **शङ्का चेतीति** । ननु व्यभिचारज्ञानस्य निश्चयशङ्कात्मकज्ञानद्वयात्मकतया तयोर्व्याप्ति-

स्वतःसिद्ध एव ॥ धूमाग्न्योर्व्याप्तिग्रहे कार्यकारणभावभङ्गप्रसङ्गलक्षणस्तर्को व्यभिचारशङ्कानिवर्तकः । ननु सकलवह्निधूमयोरसंनिकर्षात्कथं व्याप्तिग्रह इति चेत् ॥

## नीलकण्ठी.

ङ्काविरहः । **क्वचिदिति** । तर्काभावेतरनिखिलकारणसमवधानस्थले इत्यर्थः । **क्वचित्स्वतःसिद्ध एवेति** । इतरकारणविरहस्थले तादृशकारणविरहप्रयुक्त एवेत्यर्थः । तथाच तत्र तर्कापेक्षा नेति भावः । **धूमाग्न्योरिति** । धूमाग्न्योर्व्याप्तिग्रहे उत्पत्स्यमाने व्यभिचारशङ्कानिवर्तकः कार्यकारणभावभङ्गप्रसङ्गलक्षणस्तर्क इत्यन्वयः । स च तर्को 'धूमो यदि वह्निव्यभिचारी स्यात् तर्हि वह्निजन्यो न स्यात्' इत्याकारको बोध्यः । ननु महानसीयवह्निधूमयोः संनिकृष्टत्वेन सहचारग्रहेऽप्यन्येषां वह्निधूमानामसन्निकर्षेण सहचारप्रत्यक्षासंभवेन निखिलधूमेषु व्याप्तिप्रत्यक्षं न संभवति । तथा च पर्वतीयधूमदर्शनेन व्याप्तिस्मरणासंभवात् परामर्शानुपपत्तिरित्याशयेन शङ्कते—**ननु सकलेति** । सकलवह्निधूमेषु लौकिकसंनिकर्षाभावेऽपि सामान्यप्रत्यासत्त्यात्मकालौकिकसंनिकर्षसद्भावात् वह्नित्वावच्छिन्नसामा-

## भास्करोदयाख्यव्याख्या.

ग्रहंप्रति प्रतिबन्धकत्वात्तादृशनिश्चयविरहत्वेन तादृशशङ्काविरहत्वेन च तयोर्व्याप्तिग्रहंप्रति पृथक्कारणद्वयं कल्पनीयम् । तथाच व्यभिचारज्ञानविरहसहकृतेत्यादिमूलासंगतिं परिजिहीर्षन् मूलकृद्धृदयमूरीकरोति—**व्यभिचारसंशयस्येत्यादिना** । **तत्साधारणेति** । व्यभिचारनिश्चयज्ञानव्यभिचारसंशयज्ञानोभयसाधारणेत्यर्थः । **क्वचिदितीति** । निपातोऽयं स्थलविशेषबोधकः । तत्स्थलविशेषमेव निर्दिशति—**तर्केत्यादि** । तर्काभावादितराणि यानि निखिलकारणानि तेषां समवधानं यादृशस्थले तत्स्थल इत्यर्थः । **इतरकारणविरहस्थल इति** । व्याप्तिग्रहकारणीभूतसहचारज्ञानेतरव्यभिचारज्ञानकारणसहचारज्ञानविरहस्थले वह्निमान्धूमादित्यादावित्यर्थः । **तादृशकारणविरहप्रयुक्त एवेति** । साध्यहेतोरसामानाधिकरण्यविरहप्रयुक्त एवेत्यर्थः । **धूमाग्न्योर्व्याप्तिग्रह इति** । सप्तम्याः सत्यर्थकत्वे व्यभिचारशङ्काया अनवतारादुत्पत्स्यमाने इत्यध्याहृत्यान्वय इति—**उत्पत्स्यमान इति** । भविष्यत्कालिकोत्पादनविषयीभूते इत्यर्थः । **कार्यकारणभावभङ्गप्रसङ्गलक्षण इति** । प्रसङ्गः प्रसक्तिः संपादनमिति यावत् । कार्यकारणभावभङ्गसंपादनमेव लक्षणं प्रयोजनं यस्येत्यर्थः । नन्वित्यारभ्य व्याख्यातोऽत्र विषयः पुरैव प्रदर्शितोऽस्माभिः । परार्थानुमानशब्दस्य पञ्चावयववाक्यपरत्वेन परार्थानुमानमाहेति मूलावतरणं दीपिकायामसङ्गतं परार्थानुमानशब्दस्य योगव्युत्पत्त्या

---

१ अत्र व्यभिचारसंशयस्येति मात्रोक्तिर्निश्चयस्याप्युपलक्षणमथ च प्रसिद्धत्वाद्वानुक्तिः ।
२ धूमवान्वह्नेरित्यादौ धूमाग्न्योर्व्याप्तिग्रहप्रतिबन्धकव्यभिचारशङ्काकारणानामयोगोलकावच्छेदेन वह्नौ सामानाधिकरण्यादीनां सत्वेऽपि तर्काभावरूपकारणासत्वात्तर्को व्यभिचारशङ्कां निवर्तयतीति हृदयम् ॥

न ॥ वह्नित्वधूमत्वरूपसामान्यप्रत्यासत्त्या सकलवह्निधूमज्ञानसंभवात् ॥ तस्मादिति ॥ लिङ्गपरामर्शादित्यर्थः ॥

यत्तु स्वयं धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयववाक्यं प्रयुज्यते, तत्परार्थानुमानम् । यथा पर्वतो वह्निमान् १ । धूमवत्त्वात् २ । यो यो धूमवान् स सोऽग्निमान् यथा महानसम् ३ । तथा चायम् ४ । तस्मात्तथा ५ । इति ॥ अनेन प्रतिपादिताल्लिङ्गात्परोऽप्यग्निं प्रतिपद्यते ॥ प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः ॥ पर्वतोऽग्निमानिति प्रतिज्ञा ॥ धूमवत्त्वादिति हेतुः ॥ यो यो धूमवान्स सोऽग्निमान् यथा महानसम् इत्युदाहरणम् ॥ तथा चायमित्युपनयः ॥ तस्मात्तथेति निगमनम् ॥

परार्थानुमानमाह—यत्त्विति ॥ यच्छब्दस्य 'तत्परार्थानुमानम्' इति तच्छब्देनान्वयः ॥ पञ्चावयववाक्यमुदाहरति—यथेति ॥ अवयवस्वरूपमाह—प्रतिज्ञेति ॥

---

## नीलकण्ठी.

नाधिकरण्येन निखिलधूमसहचारप्रत्यक्षसंभवान्निखिलधूमेषु व्याप्तिग्रहः संभवति । एवं च पर्वतीयधूमे व्याप्तेर्गृहीतत्वेन धूमदर्शनेन व्याप्तिस्मरणसंभवान्न परामर्शानुपपत्तिरिति समाधत्ते—**वह्नित्वधूमत्वेति** ।

यद्यपि परार्थानुमानशब्दस्य परस्य मध्यस्थस्य अर्थः प्रयोजनं साध्यानुमितिरूपं यस्मादिति व्युत्पत्त्या परसमवेतानुमितिकरणलिङ्गपरामर्शोऽर्थः । अत एव 'स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम्' इत्याद्यग्रिममूलं साधु संगच्छते । तथापि परार्थानुमानप्रयोजके पञ्चावयववाक्ये परार्थानुमानशब्दस्यौपचारिकः प्रयोग इति मनसिकृत्य मूलमवतारयति—**परार्थानुमानमाहेति** । पञ्चावयववाक्यमित्यनेन पञ्च अवयवा यस्य वाक्यस्येति व्युत्पत्त्या प्रतिज्ञादिवाक्यपञ्चकसमुदायत्वं न्यायलक्षणं बोध्यम् । **अनेन प्रतिपादिताल्लिङ्गादिति** मूलस्य

## भास्करोदयाख्यव्याख्या.

लिङ्गपरामर्शबोधकत्वेन तद्बोधकत्वाभावादित्याशङ्कते—**यद्यपीति** । परार्थानुमानशब्दस्य परसमवेतानुमाने लिङ्गपरामर्शे शक्तिः । तथापि उपचारात्परार्थानुमानं यस्मात्परार्थानुमानप्रयोजकपञ्चावयववाक्यादित्यर्थाङ्गीकारेण परार्थानुमानशब्दस्य पञ्चावयववाक्यपरत्वेनावतरणसंगतिरित्याह—**तथापीति** । दीधितिकृताऽवयवसामान्यलक्षणस्य न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वरूपस्य कृतत्वेन मणिकृता च परार्थानुमानं न्यायसाध्यमित्युक्तेश्च पञ्चावयववाक्यस्य न्यायशब्दबोध्यत्वान्न्यायत्वं पञ्चावयववाक्ये किंतदिति प्रश्ने अवयवव्युत्पत्त्या पञ्चावयववाक्यशब्देन लघुभूतदीधितिकृल्लक्षणं फलतीत्याह—**पञ्चेत्यादिना** । उपकाराय मूलमूलं विवृणोति—**अनेनेति** । लिङ्गादित्यस्य लिङ्गपरामर्शादित्यभिप्रायेण । **पञ्चकसमुदायप्रयो-**

उदाहृतवाक्येषु प्रतिज्ञादिविभागमाह—पर्वतो वह्निमानिति ॥ साध्यवत्तया पक्षवचनं प्रतिज्ञा ॥ पञ्चम्यन्तं लिङ्गप्रतिपादकं वचनं हेतुः ॥ व्याप्तिप्रतिपादकं

## नीलकण्ठी.

प्रतिज्ञादिपञ्चकसमुदायप्रयोज्यलिङ्गपरामर्शादित्यर्थः । **साध्यवत्तया पक्षवचनमिति** । साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकबोधजनकवाक्यमित्यर्थः । उदाहरणात् साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिज्ञानं न पक्षतावच्छेदकविशिष्टे । उपनयाच्च पक्षतावच्छेदकविशिष्टे न साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिज्ञानमिति तयोर्निरासः । वाक्यपदस्य न्यायावयववाक्यपरत्वात् न्यायबहिर्भूतवाक्यव्युदासः । एवमग्रेऽपि ॥ 'अयं न दण्डी, तद्दण्डसंयोगाजन्यद्रव्यत्वात्' इत्यादौ प्रतिज्ञायां पञ्चम्यन्तत्वसत्त्वादतिव्याप्तेर्वारणाय **लिङ्गप्रतिपादकमिति** । हेतुप्रतिपादकवाक्यमित्यर्थः । **व्याप्तिप्रतिपादकमिति** । प्रकृतहेतुमति प्रकृतहेतुव्यापकत्वविशिष्टसाध्यबोधकवाक्यमित्यर्थः । कथमुदाहरणस्य व्यापकत्वबोधकतेति चेत् । इत्थम् । साध्यपदस्य हेतुव्यापकत्व-

## भास्करोदयाख्यव्याख्या.

**ज्यलिङ्गपरामर्शादित्यर्थ इति । साध्यवत्तया पक्षवचनमितीति** । साध्यविशिष्टत्वेन पक्षबोधकं वाक्यं प्रतिज्ञावाक्यमित्यर्थः । **उदाहरणादिति** । यो यो धूमवानित्याद्युदाहरणवाक्यादित्यर्थः । जन्यत्वं पञ्चम्यर्थः । एतच्च ज्ञानान्वयि । तथाच पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिज्ञानं नोदाहरणवाक्यजन्यमित्यन्वयबोधः । महानसत्वरूपपक्षतावच्छेदकविशिष्टे पक्षे महानसे वह्नित्वावच्छिन्नवह्निवैशिष्ट्यानवगाहनादेवम् । तथाचायमित्युपनयवाक्यजन्यमिदंत्वावच्छिन्नो वह्निमानिति ज्ञानं न पर्वतत्वादिरूपपक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकावच्छिन्नं विषयीकरोतीति तयोर्व्यावृत्तिरिति भावः । **एवमग्रेऽपीति** । प्रतिज्ञाघटकवचनशब्दस्य न्यायबहिर्भूतवाक्यव्युदासाय न्यायावयवपरत्वं यथाग्रिमलक्षणान्तरेऽपि तद्व्युदासाय वचनशब्दस्य तत्परत्वं स्वीकरणीयमित्यर्थः । हेतुलक्षणे पञ्चम्यन्तं हेतुरिति मात्रे वक्तव्ये लिङ्गप्रतिपादकमित्यस्य व्यावर्त्यं दर्शयति—**अयं न दण्डादिति** । अयम् इदंत्वावच्छिन्नः । न दण्डात् जन्यत्वं पञ्चम्यर्थः । तथाच प्रकृते दण्डजन्यत्वाभावस्य साध्यत्वेनैतद्विशिष्टे दण्डजन्यत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नस्य प्रकारतासंबन्धेन बोधजनकं वाक्यमयं न दण्डादिति प्रतिज्ञारूपं तद्घटकं पञ्चम्यन्तं तस्य हेतुत्वापत्तेर्वारणाय तदिति भावः । दीधितौ तु इदं न दण्डाज्जातं दण्डसंयोगाजन्यद्रव्यत्वादित्युक्तम् । **व्याप्तिप्रतिपादकमितीति** । धूमाधिकरणबोधकयच्छब्दवीप्सया तथा वह्नय-

१ वह्निनिरूपितव्याप्तिविशिष्टधूमप्रकारकपक्षविशेष्यतावगाहिनः परामर्शस्य प्रकृते न चक्षुःप्रयोज्यता । महानसावच्छेदेन वह्निधूमयोः सामानाधिकरण्यस्य तत्पुरुषीयचाक्षुषविषयत्वात् । किंतु पञ्चावयववाक्यसमुदायजन्यशाब्दबोधप्रयोज्यतैव पञ्चकसमुदायस्य स्वज्ञानद्वारैव तज्ज्ञानजनकत्वात्तस्मिन्प्रयोज्यत्वमिति तात्पर्यार्थः ।

वचनमुदाहरणम् ॥ व्याप्तिविशिष्टलिङ्गप्रतिपादकं वचनमुपनयः ॥ हेतुसाध्यवत्तया (पक्षप्रतिपादकं) वचनं निगमनम् । पक्षज्ञानं प्रतिज्ञाप्रयोजनम् । लिङ्गज्ञानं हेतुप्रयोजनम् । व्याप्तिज्ञानमुदाहरणप्रयोजनम् । पक्षधर्मज्ञानमुपनयप्रयोजनम् । अबाधितत्वादिकं निगमनप्रयोजनम् ॥

## नीलकण्ठी.

विशिष्टसाध्ये निरूढलक्षणया । नच द्विरुक्तयत्पदस्य वैयर्थ्यमिति शङ्क्यम् । तादृशतात्पर्यग्राहकतया सार्थक्यात् । अथवा प्रथमयत्पदार्थे महानसे द्वितीययत्पदार्थे च महानसान्यस्मिन् प्रकृतहेतुमत्त्वस्य, प्रथमतत्पदार्थे महानसे द्वितीयतत्पदार्थे महानसान्यस्मिन् साध्यस्य च शाब्दबोधे जाते उत्तरकालं व्यापकताबोधो मानसः तथा च व्याप्तिप्रतिपत्तिपरत्वमुदाहरणस्याक्षतमेवेति न कश्चिद्दोषगन्ध इति दिक् । **व्याप्तिविशिष्टलिङ्गप्रतिपादकमिति** । पक्षतावच्छेदकविशिष्टविशेष्यकप्रकृतसाध्यव्याप्यहेतुप्रकारकबोधजनकवाक्यमित्यर्थः । **'पक्षधर्मताज्ञानज्ञानार्थमुपनयः'** इति पाठे तु 'प्रयुज्यत' इति इति शेषपूरणेन प्रदर्शितार्थ एव यथाकथंचित् संगमनीयः । **हेतुसाध्यवत्तया पक्षवचनमिति** । हेतुज्ञानज्ञाप्यत्वविशिष्टसा-

## भास्करोदयाख्यव्याख्या.

धिकरणबोधकतच्छब्दवीप्सया धूमाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यवत्त्वस्य पक्षे विषयतयोदाहरणजन्यज्ञानस्य फलितमर्थमाह—**प्रकृतेत्यादि** । प्रकृतहेतुमति धूमरूपहेतुमति पर्वते प्रकृतहेतुर्धूमस्तद्व्यापकत्वविशिष्टं साध्यं वह्निस्तद्बोधकं वाक्यमुदाहरणवाक्यमित्यर्थः । उक्तार्थमनालोच्य व्यापकत्वं संपादयति—**साध्यपदस्येत्यादिना** । **यत्पदस्येति** । तत्पदस्याप्युपलक्षणम् । **तादृशेत्यादि** । तादृशार्थद्योतकतयेत्यर्थः । लक्षणामनङ्गीकृत्यापि व्यापकत्वं संपादयति—**अथवेति** । **उत्तरकालं व्यापकताबोधो मानस इति** । तद्बोधकशब्दाभावान्न शाब्दबोध इत्यर्थः । **व्याप्तिप्रतिपत्तिपरत्वमिति** । व्यापकत्वघटितव्याप्तिज्ञानबोधकत्वमित्यर्थः । **न कश्चिद्दोषगन्ध इति** । एतेन पूर्वस्मिन्पक्षे साध्यपदस्यानादितात्पर्यकल्पनं दोष इति ध्वन्यते । **व्याप्तिविशिष्टलिङ्गप्रतिपादकमितीति** । उपनयवाक्येन बोध्यमर्थमाह—**पक्षतेत्यादि** । निगमनेन साध्यप्रकारकबोधजननादिदं तादृशहेतुप्रकारकबोधजनकमित्यर्थः । पक्षधर्मताज्ञानार्थमितिपाठस्यापि प्रामाणिकत्वमङ्गीकृत्य विवृणोति **पक्षधर्मताज्ञानार्थम्** पक्षवृत्तित्वज्ञानार्थम् । कर्तृवाचकोपनयस्य क्रियासाकाङ्क्षत्वेन प्रयुज्यत इत्यध्याहार्यम् । पूर्वोत्तरयोः प्रयोजनपदसन्निवेशात्तदघटिततया चानास्थासूचनायाह—**यथाकथंचिदित्यादि** । **हेतुसाध्यवत्तया पक्षवचनमितीति** । हेतुमत्तया हेतुवैशिष्ट्येन हेतुवैशिष्ट्यमूलकसाध्यवैशिष्ट्यस्य पक्षे बोधकत्वेनेति फलितोऽर्थः । तदेतदाह—**हेत्वित्यादि** । **उत्तरकालम्** । निगमनोत्तरकालं निगमनान्तादिति बोध्यम् । **अबाधितेति** । हेतावित्यादि । एवमुत्तरत्रापि बोध्यम् । अनुमितिं प्रति व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानत्वेन

**स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम् ॥ तस्माल्लिङ्गपरामर्शोऽनुमानम् ॥**

अनुमितिकरणमाह--स्वार्थेति ॥ ननु व्याप्तिस्मृतिपक्षधर्मताज्ञानाभ्यामेव अनुमितिसंभवे विशिष्टपरामर्शः किमर्थमङ्गीकर्तव्य इति चेत् ॥ न ॥ 'वह्निव्याप्यधूमवानयम्' इति शाब्दपरामर्शस्थले परामर्शस्यावश्यकतया लाघवेन

## नीलकण्ठी.

ध्यवद्विषयकबोधजनकवाक्यमित्यर्थः । उत्तरकालमबाधितासत्प्रतिपक्षितत्वविषयकबोधो मानसो द्रष्टव्यः ।

ननु विशिष्टवैशिष्ट्यावगाहिपरामर्शस्यानुमितिं प्रति हेतुत्वे तत्रानन्यथासिद्धत्वनियतपूर्ववृत्तित्वयोर्द्वयोः कल्पनीयतया गौरवम् । 'वह्निव्याप्यो धूमो, धूमवान् पर्वतः' इति ज्ञानद्वयस्य तव मते विशिष्टपरामर्शं प्रति कारणत्वेन क्लृप्तस्य कारणत्वे तु अनन्यथासिद्धत्वमात्रस्य कल्पनीयतया लाघवमिति प्राभाकरः शङ्कते—**नन्विति । वह्निव्याप्यधूमवानयमिति** । अत्र त्वदभिमतकारणस्यासत्त्वेन व्यभिचारान्न ज्ञानद्वयस्य कारणत्वं संभवतीति भावः । कथंचिदपि व्याप्यतावच्छेदकधूमत्वादेर्भानं परामर्शेन संभवतीतिस्फोरणाय—**शाब्देति । लाघवेनेति** । कल्पनाल-

## भास्करोदयाख्यव्याख्या.

व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन ज्ञानद्वयस्य कारणतामभ्युपगच्छतः प्राभाकरस्य शङ्कामवतारयितुं तन्मते लाघवं प्रदर्शयन्साध्यव्याप्यत्वावच्छिन्नहेतुप्रकारतानिरूपितपक्षविशेष्यताशालिज्ञानत्वरूपविशिष्टपरामर्शत्वेन कारणतामङ्गीकुर्वतां नैयायिकानां मते गौरवमाशङ्कते—**नन्विति** । लाघवमुपपादयति—**वह्निव्याप्येत्यादि** । अस्यायमाशयः । विशिष्टवैशिष्ट्यं नाम ज्ञानविशिष्टज्ञानान्तरत्वम् । तथाच प्रकृते ज्ञानद्वयस्य कारणत्वकल्पनमुभयवादिसिद्धमेव । एवंच नियतपूर्ववृत्तित्वस्यावश्यक्लृप्ततयाऽनन्यथासिद्धत्वमात्रं कल्पनीयमस्मन्नये । युष्मन्मते तूभयं कल्पनीयं विशिष्टस्यातिरिक्तत्वाद्गौरवमिति । **वह्निव्याप्यधूमवानयमितीति** । वह्निव्याप्यधूमवानयमिति शब्दजन्योपस्थितिविषयीभूतविशिष्टवैशिष्ट्यावगाहिपरामर्शस्य वह्निव्याप्तिविशिष्टपक्षवैशिष्ट्यावगाहिनो व्याप्यतावच्छेदकत्वादिरूपज्ञानद्वयस्यानुमितिकारणताकल्पनव्यभिचाराद्विशिष्टवैशिष्ट्यावगाहिन एव कारणत्वकल्पनं युक्तमिति भावः । **न्याय्यत्वमितीति** । धर्मद्वयावच्छेदेनानन्यथासिद्धत्वकल्पनापेक्षया एकधर्मावच्छेदेन तत्कल्पनस्य लघुत्वमिति भावः । ननु न्यायमते व्याप्तिविषयतानिरूपित-हेतुविषयतानिरूपित-पक्षविषयताशालिज्ञानत्वेन, पक्षविषयतानिरूपित-हेतुविषयतानिरूपित-व्याप्तिविषयताशालिज्ञानत्वेन, पक्षविषयतानिरूपित-व्याप्तिविषयतानिरूपित-हेतुविषयताशालिज्ञानत्वेन वा हेतुत्वमित्येतादृशरीत्या विनिगमनाविरहेण कारणताबाहुल्यमिति चेन्मीमांसकमतेऽपि व्याप्तिज्ञानस्य व्याप्तिविषयतानिरूपितहेतुविषयताशालिज्ञानत्वेन हेतुविषयतानिरूपित-व्याप्तिविष-

सर्वत्र परामर्शस्यैव कारणत्वात् ॥ लिङ्गं न करणम् ॥ अतीतानागतादौ व्यभिचारात् ॥ 'व्यापारवत्कारणं करणम्' इतिमते परामर्शद्वारा व्याप्तिज्ञानं

## नीलकण्ठी.

घवेनेत्यर्थः। तथाहि—ज्ञानद्वये अनन्यथासिद्धत्वनियतपूर्ववृत्तित्वयोः कल्पनापेक्षया विशिष्टपरामर्शे तत्कल्पनस्यैव लघीयस्त्वमिति। वस्तुतस्तु तद्धर्मावच्छिन्नविशेष्यकव्याप्तिप्रकारकनिश्चयविशिष्टतद्धर्मावच्छिन्नप्रकारकपक्षतावच्छेदकावच्छिन्नविशेष्यकनिश्चयत्वस्यैव कारणतावच्छेदकत्वं ज्ञानद्वयसाधारण्यानुरोधेन तेन मन्तव्यम्। नैयायिकमते तु व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वं कारणतावच्छेदकमिति कारणतावच्छेदकलाघवमवधेयम्। विनिगमनाविरहेण ज्ञायमानलिङ्गत्वेनापि करणत्वं वदतामाचार्याणां मतं निरस्यति—**लिङ्गं न करणमिति**। **व्यभिचारादिति**। तत्राप्यनुमितेरनुभवसिद्धत्वेन तदव्यवहितपूर्वं भूतभविष्यद्धूमादेरसत्त्वादिति भावः। **इतिमत इति**। 'फलायोगव्यवच्छिन्नं कारणं करणम्' इति

## भास्करोदयाख्यव्याख्या.

यताशालिज्ञानत्वेन वा पक्षविषयतानिरूपितहेतुविषयताशालिज्ञाने विषयविपर्यासे हेतुत्वमित्यत्र विनिगमनाविरहात्कारणताबाहुल्यात्परमयमालोको धूमो वेति सन्देहदशायां व्याप्यतावच्छेदकनिर्णयाभावेऽपि वह्निव्याप्यवानयमिति ज्ञानादनुमित्युत्पत्तेर्व्याप्यतावच्छेदकत्वादिज्ञानद्वयकारणत्वस्य च सर्वथा वक्तुमशक्यतया नैयायिकमत एव न्याय्यत्वमिति निष्कर्षः। नैयायिकमते लाघवं वस्तुसिद्धौ प्रमाणमित्याह—**वस्तुतस्त्विति**। **तेन मन्तव्यमिति**। ज्ञानद्वयस्य कारणतावादिना प्राभाकरेण धूमो वह्निव्याप्य आलोकवान्पर्वत इति ज्ञानादनुमित्यापत्तेर्वारणायोक्तनिश्चयत्वेन कारणत्वमङ्गीकार्यमित्यर्थः। **लाघवमिति**। कारणतावच्छेदकशरीरलाघवमित्यर्थः। **विनिगमनाविरहेणेत्यादि**। लिङ्गज्ञानस्यैव कारणत्वं न ज्ञायमानलिङ्गस्येत्येकशेषे बीजाभावेन धूमं पश्यन्नेवानुमातुमर्हतीत्यनुभवाच्च स्वरूपतो लिङ्गस्य कारणत्वसंभवाज्ज्ञायमानस्यैव कारणत्वमुच्यत इत्याशयमनुमनुतां चार्वाकाणां मतमुन्मूलयतामुदयनाचार्याणां मतं प्रस्थापयति—**लिङ्गं न कारणमितीति**। किं तु लिङ्गज्ञानमेव करणं बोध्यम्। **व्यभिचारादितीति**। भूयोदर्शनेन लिङ्गे व्याप्तिज्ञानवतः पुनस्तादृशलिङ्गजन्यत्वस्यैवानुमितावनुभवसिद्धत्वेऽपि तादृशस्यैव लिङ्गस्यातीतानागतस्थले कारत्वस्यावश्यकतयोद्बोधकवशादुद्बुद्धत्वेन सत्त्वादनुमितेरानुभविकत्वादाचार्याणां मते ज्ञायमानस्य लिङ्गस्यानुमितेः पूर्वमसत्त्वात् अनुमितिकार्यसत्त्वेऽपि तादृशज्ञायमानलिङ्गरूपकारणाभावाद्व्यतिरेकव्यभिचार इति भावः। कथमिदानीं व्याप्तिज्ञानस्य कारणत्वव्यवहाराः सङ्गच्छेरन्नित्यत आह—**मत इतीति**। मतान्तररीत्याह—**फलेत्यादि**। फलेनानुमित्या-

१ व्याप्तिज्ञानं, पक्षज्ञानं, साध्यज्ञानं, लिङ्गज्ञानं, यत्किञ्चिज्जन्यज्ञानमात्रं वा परामर्शव्यापारकम् ॥

करणम् । तज्जन्यत्वे सति तज्जन्यजनको व्यापारः ॥ अनुमानमुपसंहरति—तस्मादिति ॥

लिङ्गं त्रिविधम्—अन्वयव्यतिरेकि केवलान्वयि केवलव्यतिरेकि चेति ॥ अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि ॥ यथा वह्नौ साध्ये धूमवत्त्वम् । यत्र धूमस्तत्राग्निरिति अन्वयव्याप्तिः । यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा महाह्रद इति व्यतिरेकव्याप्तिः । अन्वयमात्रव्याप्तिकं केवलान्वयि ॥ यथा घटोऽभिधेयः प्रमेयत्वात् पटवत् । अत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति सर्वस्यैव प्रमेयत्वादभिधेयत्वाच्च ॥ व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि । यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात् यदितरेभ्यो न भिद्यते न तद्गन्धवत् । यथा जलम् ॥ न चेयं तथा । तस्मात् न तथेति । अत्र यद्गन्धवत् तदितरभिन्नमित्यन्वयदृष्टान्तो नास्ति पृथिवीमात्रस्य पक्षत्वात् ॥

लिङ्गं विभजते—लिङ्गमिति ॥ अन्वयव्यतिरेकिणं लक्षयति—अन्वयेनेति ॥

---

## नीलकण्ठी.

मते तु परामर्श एव करणमिति ध्येयम् । करणेऽतिव्याप्तिवारणाय तज्जन्यत्वे सतीति ।

यद्यप्यनुमाननिरूपणस्यैव प्रतिज्ञातत्वेन तद्विभाग एवोचितः । तथापि लिङ्गस्य त्रैविध्ये प्रदर्शिते तज्ज्ञानस्यैव त्रैविध्यं फलतीति मनसिकृत्याह—लिङ्गं विभजत इति । 'अन्वयेन व्यतिरेकेण च व्याप्तिमत्' इति मूलस्य 'अन्वयसहचारग्रहग्राह्य-

## भास्करोदयाख्यव्याख्या.

त्मकेनायोगोऽसंबन्धस्तेन व्यवच्छिन्नमयुक्तमव्यवधानेन फलयुक्तमिति यावत् । तथाच साक्षात्कारणं करणं परामर्श एवेति फलितोऽर्थः । व्यापारलक्षणे सत्यन्तप्रयोजनं दर्शयति—करणेऽतिव्याप्तिवारणायेति । सति दले तस्मिन् प्रत्यासत्त्या तच्छब्दाभ्यां व्याप्तिज्ञानपरामर्शः । अधुना व्याप्तिज्ञानजन्यपरामर्शजनकत्वस्य करणे व्याप्तिज्ञाने सत्त्वेनातिव्याप्तेस्तत्करणे स्वजन्यत्वस्य स्वस्मिन्नप्रसिद्ध्या व्याप्तिज्ञानमादाय परामर्शे व्यापारलक्षणसमन्वय इति तात्पर्यम् । अन्यदुपक्रम्यान्यव्याख्याने निग्रहस्थानाल्लिङ्गविभागानुपपत्तिमाशङ्कते—यद्यपीति । अनुपपत्तिं वारयति—तथापीति । अन्वयव्याप्तिव्यतिरेकव्याप्त्योः प्रकृतलक्षणलक्ष्यत्वे बीजमाह—अन्वयेत्यादि । अन्वयसहचारग्रहः 'यत्सत्त्वे यत्सत्त्वम्' इति

हेतुसाध्ययोर्व्याप्तिरन्वयव्याप्तिः, तदभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः॥ केवलान्वयिनो लक्षणमाह—अन्वयेनेति ॥ केवलान्वयिसाध्यकं लिङ्गं केवलान्वयि ॥ अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् ॥ केवलान्वयिनमुदाहरति—घटोऽभिधेयः प्रमेयत्वादिति ॥ ईश्वरप्रमाविषयत्वं सर्वपदाभिधेयत्वं च सर्वत्रास्तीति व्यतिरेका-

## नीलकण्ठी.

व्याप्तिमत्त्वे सति व्यतिरेकसहचारग्रहग्राह्यव्याप्तिमत्' इत्यर्थं मनसिकृत्य तादृशव्याप्तिद्वयं प्रकाशयति—**हेतुसाध्ययोरिति** । अन्वयमात्रव्याप्तिकत्वरूपकेवलान्वयिलक्षणे मात्रपदेन व्यतिरेकव्याप्तेर्व्यवच्छेद्यतया सिद्ध्यसिद्धिभ्यां व्याघात इति पर्यालोच्य प्रकारान्तरेण परिष्करोति—**केवलान्वयिसाध्यकमिति** । केवलान्वयिसाध्यकव्यतिरेकिहेतोः संग्रहाय साध्ये केवलान्वयित्वं निवेशितं, तदेव निर्वक्ति—**अत्यन्ताभावेति** । निरवच्छिन्नवृत्तिमदत्यन्ताभावेत्यर्थः । तेन गगनाभावसंयोगाभावादिसाध्यकहेतोः संग्रहः । घटपदाद्यभिधेयत्वस्य पटादावसत्त्वेन सर्वत्र सत्त्वासंभवादाह—**सर्वपदाभिधेयत्वमिति** । **मूले, व्यतिरे-**

## भास्करोदयाख्यव्याख्या.

ज्ञानमेव । व्यतिरेकसहचारग्रहः 'यदभावे यदभावः' इति । तद्ग्राह्यव्याप्त्योरेवान्वयव्याप्तिव्यतिरेकव्याप्तिरूपत्वेन तथैव परिष्करोतीत्यर्थः । सङ्ग्रहे केवलान्वयिलक्षणस्य सिद्धतया दीपिकायां पुनर्लक्षणान्तरकरणे बीजं दर्शयति—**अन्वयेत्यादिना** । **सिद्ध्यसिद्धिभ्यामिति** । एकस्मिन्नेवहेतौ केवलान्वयिव्याप्तिकत्वेन व्याप्यत्वासिद्धिः । व्यतिरेकव्याप्तिकत्वेन व्याप्यत्वासिद्धिश्चेति सिद्ध्यसिद्धिभ्यां व्याघातरूपो दोषो द्रष्टव्य इत्यर्थः । साध्ये केवलान्वयित्वविशेषणप्रयोजनं दर्शयति—**केवलेत्यादि** । **तदेव निर्वक्तीति** । साध्ये विशेषितकेवलान्वयित्वं परिष्करोतीत्यर्थः । **अत्यन्ताभावेतीति** । अत्रात्यन्ताभावो निरवच्छिन्नो वृत्तिमांश्च विवक्षणीयः । तत्फलं दर्शयति—**तेनेत्यादिना** । संयोगाभाववान्पदार्थत्वादेवं गगनाभाववान्पदार्थत्वादित्यत्र संयोगाभावगगनाभावयोरभावः संयोगाभावाभावो वृक्षेऽग्रावच्छेदेन प्रसिद्धोऽतः सावच्छिन्न एवं गगनाभावाभावो गगनस्वरूपोऽतो न वृत्तिमानिति बोध्यम् । **दीपिकायामीश्वरप्रमाविषयत्वमिति** । असर्वज्ञप्रमाविषयत्वस्य सर्वविषयावृत्तित्वात्केवलान्वयित्वाप्रसक्तेर्विवक्षणीयमेवमिति भावः । मूले सर्वपदाभिधेयत्वोक्तेः प्रयोजनमाह—**घटेत्यादि** । घटपदाभिधेयत्वस्य पटे पटपदाभिधेयत्वस्य घटे । एवं तत्तत्पदाभिधेयत्वस्य तस्मिंस्तस्मिन्सत्त्वात्पदार्थसामान्येऽभिधेयत्वस्यावृत्तेः केवलान्वयित्वं न स्यादित्यर्थः । **सर्वपदाभिधेयत्वम्** । सर्वमित्येवं सर्वशब्दज्ञानविषयत्वं सर्वत्रास्तीति भावः । उपकाराय मूलमूलं

१ अन्वयव्याप्तीतराविशिष्टं सदन्वयव्याप्तिविशिष्टमन्वयमात्रव्याप्तिकं तथाच मात्रपदेन व्यतिरेकव्याप्तेर्व्यवच्छेदाद्व्याप्तिं पक्षतावच्छेदकीकृत्य तद्वैशिष्ट्याभावसाधने सिद्धाया एव व्याप्तेरसिद्ध्ययोगप्रयुक्तसिद्ध्यसिद्धिभ्यां विशिष्ट आघातो व्याघातो मात्रपदव्यावर्त्यासंभवरूपदोषस्तं मनसिकृत्य निवेशान्तरेण तदेव परिष्करोतीति समुदितार्थः ॥

भावः ॥ केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति ॥ केवलव्यतिरेकिणमुदाहरति–पृथिवीति ॥ नन्वितरभेदः प्रसिद्धो न वा । आद्ये यत्र प्रसिद्धस्तत्र हेतुसत्त्वे अन्वयित्वम् । असत्त्वे आसाधारण्यम् ॥ द्वितीये साध्यज्ञानाभावात् कथं तद्विशिष्टानुमितिः । विशेषणज्ञानाभावे विशिष्टज्ञानानुदयात् ॥ प्रतियोगिज्ञानाभावाद्व्यतिरेकव्याप्तिज्ञानमपि न स्यादिति चेत् ॥ न ॥ जलादि[1]त्रयोदशान्योन्याभावा-

## नीलकण्ठी.

**कमात्रव्याप्तिकमिति** । निश्चितव्यतिरेकमात्रव्याप्तिकमित्यर्थः । तेन पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादित्यादावन्वयव्याप्तेः सत्त्वेपि न लक्षणासंगतिः । **इतरभेदः** पृथिवीतरत्वावच्छिन्नप्रतियोगिताकभेदः । **अन्वयित्वमिति** । अन्वयसहचारग्रहग्राह्यव्याप्तिमत्त्वं स्यादित्यर्थः । तथा च प्रसिद्धानुमानमिव एतदप्यन्वयव्यतिरेक्येव स्यादिति भावः । **आसाधारण्यमिति** । सपक्षव्यावृत्तत्वरूपासाधारणलक्षणाक्रान्तत्वादिति भावः । अप्रसिद्धसाध्यकेऽपि कथं साध्यविशेषणकानुमितिरेवेत्यभिप्रायेणाह—**साध्येत्यादि** । **व्यतिरेकव्याप्तीति** । साध्याभा-

## भास्करोदयाख्यव्याख्या.

व्याख्यायते—**मूले व्यतिरेकमात्रव्याप्तिकमितीति** । अत्र व्यतिरेकमात्रव्याप्तिकपदं लक्षणया निश्चितव्यतिरेकमात्रव्याप्तिकपरमित्यर्थः । तत्फलं दर्शयति—**तेनेति** । लक्षणया तथाङ्गीकारेणेत्यर्थः । **अन्वयव्याप्तेः सत्त्वेपीति** । अनिश्चितान्वयव्याप्तेः सत्त्वेपीत्यर्थः । **न लक्षणासंगतिरिति** । न व्यतिरेकिलक्षणाव्याप्तिरित्यर्थः । **अन्वयित्वमितीति** । अन्वयव्याप्तिमत्त्वमित्यर्थः । अन्वयव्याप्तिपदेन हेतुसाध्ययोः सामानाधिकरण्यरूपान्वयसहचारज्ञानविवक्षया तद्ग्राह्यत्वं पर्यवसन्नं दोषदाने स्यात्क्रियापेक्षमन्वयि निष्कृष्टार्थमाह—**अन्वयेत्यादि** । तथाच फलितभावार्थमाह—**तथाचेति** । **प्रसिद्धानुमानमिवेति** । वह्निमान्धूमादित्यनुमानमिवेत्यर्थः । अनुमानस्यान्वयव्यतिरेकित्वं धर्मिपारतन्त्र्येण बोध्यम् । अन्वयदृष्टान्ताभावेन वास्तविकतदभावेपि प्रौढिवादमात्रमेतदिति बोध्यम् । **असाधारण्यमितीति** । स्यादिति शेषः । **सपक्षव्यावृत्तत्वमिति** । निश्चितसाध्यवत्पक्षावृत्तित्वमित्यर्थः । न वा पक्षं व्याख्यायते—**अप्रसिद्धसाध्यकेति** । **साध्यविशेषणकानुमितिरेवेति** । इतरभेदरूपसाध्याप्रसिध्या । साध्यविशेषणविशिष्टानुमितिः 'पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात्' इत्यनुमितिर्न स्यादित्यन्तेनान्वय इतिभावः । **साध्येत्यादीति मूले कथं तद्विशिष्टानुमितिरिति** । साध्यविशिष्टपक्षविशेष्यकानुमितिरित्यर्थः । **विशिष्टज्ञानेत्यादि** । विशिष्टज्ञानं विशेषणविशेष्यसंबन्धत्रितयावगाहितेष्वेकानवगाहित्वेऽङ्गवैकल्याद्विशिष्टज्ञानानुत्पत्तेरिति भावः । दूषणान्तरमाह—**व्यतिरेकेत्यादि** । व्यतिरेकव्याप्तिं लक्षयति स्पष्टप्रतिपत्तये—**साध्येत्यादिना** । समाधानग्रन्थतात्पर्यार्थमाह—

---

१ जलादीन्यष्टौ द्रव्याणि गुणादयश्च पञ्चपदार्था इति त्रयोदश भवन्ति ॥

नां त्रयोदशसु प्रत्येकं प्रसिद्धानां मेलनं पृथिव्यां साध्यते ॥ त्रयोदशत्वावच्छिन्न-साध्यस्यैकाधिकरणवृत्तित्वाभावान्नान्वयित्वासाधारण्ये। प्रत्येकाधिकरणप्रसिद्धा-

## नीलकण्ठी.

वव्यापकाभावप्रतियोगित्वरूपेत्यर्थः । पृथिवीतरसामान्यभेदो न साध्यते, अपि तु जलादिभेदकूटः साध्यते, । तथा च नोक्तदोषावसर इत्याह—**जलादीति**। जलादीनां ये त्रयोदशान्योन्याभावाः तेषां कूटः साध्यत इत्यर्थः । समुदायस्य प्रसिद्ध्यसंभवादाह—**प्रत्येकमिति** । **त्रयोदशत्वावच्छिन्नेति** । अनुमितेः पूर्वं निश्चितसाध्यतावच्छेदकावच्छिन्नवतो धर्मिण एवाप्रसिद्ध्या न तत्र हेतोः सत्त्वासत्त्वनिबन्धने अन्वयित्वासाधारण्ये इति समुदितार्थः । प्रत्येकं प्रसिद्धौ अपेक्षाबुद्धिविशेषविषयत्वरूपसमुदायत्वविशिष्टज्ञानं संभवति । तथा च विशेषणतावच्छेदकप्रकारकनिर्णयस्य सद्भावात्, साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाह्यनुमितिर्व्यतिरेकव्याप्तिज्ञानं च संभवतीत्याह—**प्रत्येकाधिकरणेत्यादि** । यद्यपि जलादि-

## भास्करोदयाख्यव्याख्या.

**पृथिवीत्यादि** । पृथिवीतरस्मिन्यत्सामन्यं जातिः पृथिवीतरत्वरूपा तदवच्छिन्ना या पृथिवीतरवृत्तिप्रतियोगिता तन्निरूपको भेदो न साध्यते पृथिव्यामिति शेषः । येन समुदायभेदैकाधिकरणप्रसिद्ध्या तत्र हेतुसत्त्वासत्त्वाभ्यां विकल्प्याऽन्वयित्वासाधारण्ये आपद्येयातां तन्नेति भावः । तथाच तज्जिज्ञासायामाह—**अपित्वित्यादि** । जलादीनां ये भेदास्तत्समुदायमित्यर्थः । तथापि समुदायाप्रसिद्धिस्तदवस्थैवेत्येतत्सिद्धान्तार्थबोधकमूलं विवृणुते—**जलादीत्यादिना** । त्रयोदशाऽन्योन्याभावास्त्रयोदशसु प्रत्येकं प्रसिद्धा इत्यर्थः । तेषामन्योन्याभावानां कूटं समुदायः न युगपत्किंतु पृथिवी जलभिन्ना तेजोभिन्नेत्यादिरीत्या साध्यत इत्यर्थः । **त्रयोदशत्वावच्छिन्नेतीति** । निष्कृष्टार्थस्य समुदितमूलस्यार्थमाह—**अनुमितेरित्यादि** । अनुमितेः पूर्वं पृथिवीपक्षकेतरभेदसाध्यकानुमितिपूर्वक्षणे निश्चितसाध्यतावच्छेदकावच्छिन्नपृथिवीतरजलाद्यष्टकगुणादिपञ्चकसंकलनया त्रयोदशवान्यो धर्मी भेदस्तस्याप्रसिद्ध्या समुदायभेदाधिकरणत्वस्य पृथिव्यामेकस्याप्रसिद्ध्या न तत्र पृथिव्यां हेतोः गन्धवत्त्वरूपहेतोः सत्त्वासत्त्वनिबन्धने वृत्तित्वावृत्तित्वप्रयुक्ते अन्वयित्वासाधारण्ये अन्वयसहचारग्रहग्राह्यव्याप्तिमत्त्वसाध्याभावव्यापकीभूताभावप्रतियोगित्वरूपे इति समुदितार्थः । **प्रत्येकप्रसिद्धाविति** । जलादित्रयोदशसु परस्परान्योन्याभावप्रसिद्धावित्यर्थः । **अपेक्षाबुद्धिविशेषविषयत्वरूपसमुदायत्वेति** । अयमेक इत्यादिरूपो यो भेदसमुदायस्तत्त्वं तद्विशिष्टज्ञानं संभवतीत्यर्थः । **विशेषणतावच्छेदकप्रकारकनिर्णयस्येति** । तादृशसमुदायत्वनिर्णयस्येत्यर्थः । **व्यतिरेकव्याप्तिज्ञानं च संभवतीति** । साध्यप्रसिद्धिमूलकसाध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिज्ञानं संभवतीत्यर्थः । जलादीत्यादिनाऽभावग्रहणे विनिगमकाभावेन तमादाय चतुर्दशान्योन्याभावप्रसिद्ध्या त्रयोदशान्योन्याभावोक्तिमूलतात्पर्यं वर्णयितुं पूर्वं मूलानौक्ति-

साध्यविशिष्टानुमितिः, साध्याभावव्यापकीभूताभावप्रतियोगित्वमिति व्यतिरेकव्याप्तिनिरूपणं च—यदितरेति ॥

## संदिग्धसाध्यवान् पक्षः ॥ यथा धूमवत्त्वे हेतौ पर्वतः ॥

### नीलकण्ठी.

चतुर्दशान्योन्याभावानां चतुर्दशसु प्रत्येकं प्रसिद्धानामिति रीत्या वक्तुमुचितं तथापि अर्थापत्तेः प्रमाणान्तरत्वमङ्गीकुर्वन्तं प्रभाकरमाक्षेप्तुं व्यतिरेकव्याप्तेरनुमित्यङ्गत्वस्य प्रदर्शनीयतया तन्मतसाधारण्येन व्यतिरेकव्याप्तिं प्रदर्शयितुं जलादित्रयोदशेत्यादिकथनम् । न च तन्मते जलादिचतुर्दशान्योन्याभावाः प्रसिद्धाः । अभावस्याधिकरणानात्मकस्य तेनानङ्गीकारादिति ध्येयम् । केचित्तु जलमेवादि येषां त्रयोदशानां इति विग्रहेण जलादिप्रतियोगिकानां चतुर्दशानामन्योन्याभावानामित्यर्थः । **त्रयोदशस्विति** । जलादीत्यादिः । उक्तविग्रहेण चतुर्दशस्वित्यर्थः । अग्रेप्येवं बोध्यमित्याहुः ।

मूले **संदिग्धसाध्यवानिति** । विशेष्यतासंबन्धेन साध्यप्रकारकसंशयवि-

### भास्करोदयाख्यव्याख्या.

क्रमाक्षिपति—**यद्यपीति** । मूलतात्पर्यं वर्णयितुमुपक्रमते—**तथापीति** । **प्रमाणान्तरत्वमिति** । अनुमानप्रमाणान्यत्वमित्यर्थः । न्यायमतेऽनुमानप्रमाण एवान्तर्भाव इति भावः । **आक्षेप्तुमिति** । इत्थमाक्षेपप्रकारः । 'पीनोऽयं देवदत्त' इत्यादौ 'अयं देवदत्तो रात्रिभोजनवान् पीनत्वाद्यो न रात्रिभोजनवान्स न पीनत्ववान् यथा व्रतीति ।' व्यतिरेकव्याप्तिकहेतुकानुमानेनैव गतार्थत्वात्प्रमाणान्तरत्वोपगमः प्राभाकरमतेऽर्थापत्तेर्विफल इति । तदेतदाह—**व्यतिरेकेत्यादिप्रदर्शनीयतयेत्यन्तेन** । **तन्मतसाधारण्येनेति** । प्राभाकरैरपि व्यतिरेकव्याप्तेः पृथिवीतरभिन्नेत्यादावङ्गीकारात्तन्मतस्वमतोभयानुगतरूपेणेत्यर्थः । **व्यतिरेकव्याप्तिं प्रदर्शयितुमिति** । इतरभेदाभावव्यापकीभूताभावप्रतियोगिगन्धवत्त्वे व्यतिरेकव्याप्तिं बोधयितुमित्यर्थः । **जलादित्रयोदशेत्यादिकथनमिति** । इत्थं च त्रयोदशभेदानामभावमादाय व्यतिरेकव्याप्तिसिद्धिः । नन्वस्मन्मते जलाद्यभावान्तेषु चतुर्दशसु परस्परं भेदप्रसिद्धावपि प्राभाकरमतसाधारण्येन नोपपद्यत इत्याह—**न चेत्यादि** । **तन्मते** । प्राभाकरमते । **जलादिचतुर्दशान्योन्याभावाः** । जलादिचतुर्दशसु प्रत्येकं भेदाः प्रसिद्धा न चेत्यन्वयः । अत्र हेतुमाह—**अभावस्येत्यादि** । तन्मतेऽभावस्याधिकरणात्मकत्वाच्चतुर्दशाप्रसिद्धेरिति भावः । अभावानामधिकरणात्मकत्वे रूपाद्यभावानां तत्तदधिकरणात्मनां तत्तदिन्द्रियैः प्रत्यक्षं न स्यात्तत्तदिन्द्रियायोग्यत्वादिति दूषणं स्फुटं सिद्धान्तमुक्तावल्यां द्रष्टव्यम् । **केचित्त्विति** । नैयायिका इत्यर्थः । **विग्रहेणेति** । तद्गुणसंविज्ञानबहुव्रीह्यर्थबोधकवाक्येनेत्यर्थः । तथा चोत्तरत्रयोदशस्वित्यनुपपन्नमित्यत आह—**त्रयोदशस्वितीत्यादि** ॥ **अग्रेऽप्येवमिति** । त्रयोदशभेदत्वावच्छिन्नेत्यादावपीत्यर्थः । **आहुरिति** । अनेन क्लिष्टकल्पनयाऽस्वरसः सूचितः । उपकाराय मूलमूलं विवृणोति—**मूले संदिग्धसाध्यवानितीति** । संदिग्धं साध्यं यस्मि-

निश्चितसाध्यवान् सपक्षः ॥ यथा तत्रैव महानसम् ॥ निश्चितसाध्याभाववान् विपक्षः ॥ यथा-तत्रैव महाह्रदः ॥

पक्षलक्षणमाह—संदिग्धेति ॥ ननु श्रवणानन्तरभाविमननस्थले अव्याप्तिः, तत्र वेदवाक्यैरात्मनो निश्चितत्वेन संदेहाभावात् किंच प्रत्यक्षेपि वह्नौ यत्रेच्छयानुमितिः तत्राव्याप्तिरिति चेत् ॥ न ॥ उक्तपक्षताश्रयत्वस्य पक्षलक्षणत्वात् ॥ सपक्षलक्षणमाह—निश्चितेति ॥ विपक्षलक्षणमाह—निश्चितेति ॥

सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वा-

## नीलकण्ठी.

शिष्ट इत्यर्थः । सपक्षलक्षणादिकमप्येवमेव परिष्कर्तव्यम् । पक्षलक्षणस्याऽव्याप्तिमाशङ्कते दीपिकायां **नन्विति** । संशयविघटकशाब्दसिद्धिस्थलेऽव्याप्तिमुक्त्वा प्रत्यक्षस्थलेपि तामाह—**किंचेति** । **उक्तेति** । सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षताश्रयत्वस्य पक्षलक्षणत्वादित्यर्थः ।

## भास्करोदयाख्यव्याख्या.

नि.ते व्युत्पत्त्या संदेहविषयसाध्याधिकरणे पर्वतो वह्निमान्नवेति संशयात्मकज्ञानस्य साध्यप्रकारकपर्वतविशेष्यकत्वेन विशेष्यतासंबन्धेन संशयात्मकज्ञानविशिष्टः पर्वत इति तद्रूपलक्षणं फलितं भवतीत्याह—**विशेष्येत्यादि** । **सपक्षलक्षणादिकमपीति** । आदिना विपक्षलक्षणपरिग्रहः । **एवमित्यादि** । साध्यप्रकारकनिश्चयविशिष्टः सपक्ष इति, साध्याभावप्रकारकनिश्चयविशिष्टो विपक्ष इति, सपक्षविपक्षलक्षणे परिष्कर्तव्ये इत्यर्थः । **पक्षलक्षणस्येति** । संदिग्धेत्यादिरूपस्येत्यर्थः । दीपिकायामित्युक्तिः स्पष्टार्थैव । **संशयविघटकशाब्दस्थल इति** । एवं हि नन्विति दीपिकाग्रन्थस्य निष्कृष्टोऽर्थः । साधनचतुष्टयसंपन्नो ब्रह्मजिज्ञासुः शुश्रूषया गुरूपसदनं गत्वा सद्गुरूदिता'यतो वा इमानी'ति 'स ईक्षत सोऽकामयत स एको द्यावापृथिवी'त्यादिवेदान्तवाक्यात्कृतश्रवणः स्वदेशमागत्य युक्तिभिरनुचिन्तनाख्यमननमपेक्षमाणः क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वाद्घटवद्यन्नैवं तन्नैवमित्यनुमानेनोक्तश्रुतिप्रतिपाद्ये सविशेषे पक्षे कर्तृत्वमनुमिनोति । तत्र वेदान्तवाक्यशब्दप्रमाणेनात्मनो निश्चितसाध्यकत्वेनोक्तपक्षत्वाभावाज्जायमानानुमित्यनापत्तिः । किंच चाक्षुषप्रत्यक्षेऽपि महानसादिवह्नौ प्रत्यक्षाकलितमप्यर्थमनुमानेनैव बुभुत्सते तर्करसिका इति मणिकारोक्तेर्महानसं वह्निमद्धूमादित्यनुमितेर्महानसादौ निश्चितसाध्यवत्त्वेन पक्षलक्षणस्याव्याप्तिरिति । तत्र किंचेति शङ्कान्तरोत्तरत्वमेव साधयति—**संशयविघटकेत्यादिना** । संशयो भावाभावोभयकोटिकं ज्ञानं तद्विघटिका या परमाप्तोक्तवेदान्तजन्यात्मविषयसिद्धिस्तस्मिन्मननेत्यर्थः । **अव्याप्तिमुक्त्वेति** । अव्याप्त्यभिधानोत्तरकाले इत्यर्थः । मननं नानुमानप्रमाणयुक्त्यनुचिन्तनमिति मत्वा प्रत्यक्षस्थलानुधावनमिति बोध्यम् । **उक्तेतीति** । अनेन तस्य सिद्धान्तत्वं

**भासाः–सव्यभिचारोऽनैकान्तिकः ॥ स त्रिविधः–साधारणासाधारणानुपसंहारिभेदात् ॥**

एवं सद्धेतून् निरूप्य असद्धेतून् निरूपयितुं विभजते—सव्यभिचारेति ॥ अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वं हेत्वाभासत्वम् ॥ सव्यभिचारं विभजते—स त्रिविध इति ॥

## नीलकण्ठी.

**सद्धेतून् निरूप्येति** । व्याप्त्यादिविशिष्टहेतून् निरूप्येत्यर्थः । सद्धेतुनिरूपणे असद्धेतोः स्मरणात् प्रसङ्गसंगत्या तन्निरूपणमिति भावः । मूले **हेत्वाभासा इति** । हेतुवदाभासन्त इति हेत्वाभासा दुष्टहेतवो निरूप्यन्त इत्यर्थः । ननु सामान्यधर्मप्रकारकज्ञानमन्तरा विशेषजिज्ञासानुदयेन सव्यभिचारेत्यादिना विभागोऽनुचित इत्याशङ्कामपनिनीषुर्दोषलक्षणेऽभिहिते दोषवत्त्वरूपदुष्टलक्षणस्याऽतिस्फुटत्वाल्लाभो भवतीत्याशयेन दोषसामान्यलक्षणमाह—**अनुमितीति** । **हेत्वाभासत्वमिति** । हेतोराभासा हेत्वाभासा हेतुनिष्ठा दोषाः, तेषां भावस्तत्त्व-

## भास्करोदयाख्यव्याख्या.

स्फोरितम् । **सद्धेतून्निरूप्येतीति** । इदं पूर्वोत्तरग्रन्थयोः संगतित्वेन प्रेक्षावतां प्रवर्तनायेति ध्येयम् । **प्रसङ्गसंगत्येति** । स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गरूपसंगत्येत्यर्थः । **हेतुवदाभासन्त इत्यादि** । न तु हेतूनामाभासा इति व्युत्पत्त्या दोषविशेषा निरूप्यन्त इत्यर्थः । अग्रे दुष्टानां विभजनीयत्वेन दोषाणां निरूपणविषयत्वेऽसङ्गतिकत्वापत्तेरिति । **केचित्तु** । हेतूनामाभासा इति व्युत्पत्त्या दोषाणामेव निरूपणे प्रतिज्ञाविषयतालक्षणमपि दोषस्यैव दोषवत्त्वेन हेतोर्दुष्टत्वेन दुष्टविभागोपि न दुष्ट इत्याहुः । **अन्ये तु** दुष्टहेतोरेवेदं लक्षणम् । ह्रदो वह्न्यभाववान्धूमश्चेति समूहालम्बनविषयतामादाय बाधितादौ लक्षणसमन्वयादित्याहु**स्तदसत्** । दोषाश्रयत्वरूपदुष्टपदार्थत्वाभावाद्दुष्टपदस्य पारिभाषिकत्वापत्तेरिष्टापत्तौ तद्धेतुत्वं प्रत्यक्षे तत्साध्ये दुष्टत्वमित्यस्यैव सम्यक्त्वेऽधिकनिवेशवैयर्थ्यापत्तेरिति दिक् । ननु सव्यभिचारादीनां पृथग्भानात्पृथक् तल्लक्षणचिकीर्षया किं तत्सामान्यलक्षणेनेत्याशङ्कां परिजिहीर्षुरेतदाशङ्कामपनिनीषया तदित्याह—**नन्विति** । **सामान्येत्यादि** । विभागोऽवान्तरधर्मपुरस्कारेण धर्मिप्रतिपादनानुकूलव्यापारः स च सामान्यधर्मप्रकारकज्ञानं विनाऽज्ञातगोपदार्थस्य शुक्लः पीतो रक्तो वेति विभागानुदयवत् विभागोनुपपन्न इति भावः । ननु निरूपणप्रतिज्ञाऽन्यस्य विभागोऽन्यस्य लक्षणमन्यस्येत्यसङ्गतमित्याशङ्कामपसिसारयिषुर्दोषलक्षणे दुष्टपदमन्वर्थकमर्थवद्भवतीत्याशयेन दोषलक्षणं प्रथमोपस्थितत्वाच्चावश्यकमित्याह—**दोषलक्षणेत्यादि** । **अनुमितीति** । तत्तत्प्रकृतानुमितीत्यर्थः । **हेत्वाभासत्वमिति** । लक्षणस्य न हेतुविषयत्वमित्यावेदयितुं तदर्थं पुनराह—**हेतोरित्यादि** । पञ्चानां लक्ष्यत्वाविशेषेऽपि पर्वतो वह्निमानितिवद्बाधस्य प्रसिद्धत्वमभिप्रेत्य बाधे लक्षणं

**तत्र साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः। यथा पर्वतोऽग्निमान् प्रमेयत्वादिति, प्रमेयत्वस्य वह्न्यभाववति ह्रदे**

## नीलकण्ठी.

मित्यर्थः। 'ह्रदो वह्निमान्' इत्याद्यनुमितिं प्रति 'वह्न्यभाववान् ह्रदः' इत्यादिबाधनिश्चयस्य प्रतिबन्धकतया प्रमात्मकतादृशनिश्चयविषयत्वं वह्न्यभाववद्ध्रदादौ अक्षतमिति लक्षणसमन्वयः। तत्रानुमितिपदमजहल्लक्षणया अनुमितितत्करणान्यतरपरम्। तेन व्यभिचारादिज्ञानस्य परामर्शप्रतिबन्धकतयैव निर्वाहादनुमित्यप्रतिबन्धकत्वेपि व्यभिचारादिषु नाव्याप्तिः। पर्वतो निर्वह्निरिति बाधभ्रमस्य 'पर्वतो वह्निमान्' इत्यनुमितिप्रतिबन्धकत्वात् तद्विषयवह्न्यभावादौ अतिव्याप्तिरतो **यथार्थेति**। भ्रमभिन्नेत्यर्थः। अथैवमपि वह्न्यभाववद्ध्रदात्मकबाधैकदेशे वह्न्यभावादौ अतिव्याप्तिः। 'वह्न्यभाववान् ह्रदः' इत्याकारकयथार्थज्ञानविषयत्वस्य तत्र सत्त्वादिति चेत्। न। यद्रूपावच्छिन्नविषयकज्ञानसामान्यमनुमितिप्रतिबन्धकं तद्रूपावच्छिन्नत्वं दोषत्वमित्यर्थपर्यवसानेनादोषात्। वह्न्यभावत्वावच्छिन्नविषयकस्य 'वह्न्यभाववान् ह्रदः' इति ज्ञानस्यानुमितिप्रतिबन्धकत्वेपि तादृशज्ञानसामान्यान्त-

## भास्करोदयाख्यव्याख्या.

समन्वयति—**ह्रदेत्यादिना**। परामर्शस्य व्याप्तिघटिततयैतद्व्यभिचारादिज्ञानेऽपि विशिष्टवाक्यार्थबोधासंभवेन परामर्शं प्रत्येव प्रतिबन्धकत्वाद्व्यभिचारादिषु लक्षणागमनेनाव्याप्तिं वारयितुमनुमितिपदमनुमितितत्करणपरामर्शोभयपरमित्याह—**अत्रानुमितीत्यादिना**। तेन धूमव्याप्यवह्निमानिति परामर्शप्रतिबन्धके धूमाभाववद्वृत्तित्वरूपव्यभिचारज्ञाने, एवं सपक्षविपक्षव्यावृत्तिरूपासाधारण्ये व्यतिरेकव्याप्तिविघटनद्वारा परामर्शविघटके, एवमनुपसंहारित्वे व्यतिरेकव्याप्तिविघटनद्वारा परामर्शविघटके एवमन्वयव्याप्तिविघटनद्वारा परामर्शविघटके विरोधे, एवमनुमितिप्रतिबन्धकेषु आश्रयासिद्ध्यादिषु समन्वेयम्। अनुमितिप्रतिबन्धकत्वस्य धर्मिपारतन्त्र्येण विषयत्वेऽन्वयादनुमितिप्रतिबन्धकतावच्छेदकयथार्थज्ञानविषयत्वं पर्यवसितम्। तेनोदासीनविषयस्य समूहालम्बनात्मकतादृशविषयत्वेऽपि नातिप्रसङ्ग इति बोध्यम्। **भ्रमभिन्नेत्यर्थ इति**। भ्रमसामान्यभिन्नेत्यर्थ इति बोध्यम्। तेन दर्शितबाधादिभ्रमस्य किंचिदंशे प्रमात्वेऽपि न तद्दोषतादवस्थ्यम्। **बाधैकदेशे वह्न्यभावादाविति**। अत्रादिना व्यभिचारादिघटकसाध्याभावादिपरिग्रहः। **तत्र सत्त्वादिति**। व्यभिचारादिघटकसाध्याभावादावपि तादृशप्रतिबन्धकव्यभिचारादिज्ञानविषयत्वसत्त्वादित्यपि बोध्यम्। समाधत्ते-**यद्रूपेत्यादिना**। यद्रूपपदेन प्रतिबन्धकतावच्छेदकरूपपरामर्शः। तथाच वह्न्यभाववान्ह्रद इति ज्ञानमात्रस्यानुमितिप्रतिबन्धकत्वात्प्रतिबन्धकतावच्छेदकं रूपं वह्न्यभाववद्ध्रदत्वं बोध्यम्। केवलं वह्न्यभाव इति ज्ञानादनुमित्यप्रतिबन्धाद्वह्न्यभावत्वं न प्रतिबन्धकतावच्छेदकं रूपमिति भावः। विशिष्टज्ञानस्य विशेषणतावच्छेदकावच्छिन्नप्रकारकत्वनियमं मनसिकृत्याह-**वह्न्यभावेत्यादि**। **तादृशज्ञानसामान्यान्तर्गतस्येति**।

विद्यमानत्वात् । सर्वसपक्ष( विपक्ष )व्यावृत्तः पक्षमात्रवृत्तिरसाधारणः । यथा—शब्दोऽनित्यः शब्दत्वादिति । शब्दत्वं हि सर्वेभ्यो नित्येभ्योऽनित्येभ्यो व्यावृत्तं शब्दमात्रवृत्ति ॥ अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी । यथा—सर्वमनित्यं प्रमेयत्वादिति ॥ अत्र सर्वस्यापि पक्षत्वात् दृष्टान्तो नास्ति ॥

## नीलकण्ठी.

र्गतस्य 'वह्नयभावः' इत्याकारकज्ञानस्याप्रतिबन्धकत्वेऽपि वह्नयभावत्वादेर्यद्रूपपदेनोपादानासंभवात्। नच तर्हि यथार्थपदं व्यर्थं पर्वतो निर्वह्निरिति भ्रमविषये वह्नयभावादौ अतिव्याप्तेरुक्तरीत्यैव वारणसंभवादिति वाच्यम्। ज्ञानपदस्य ज्ञानविशेषतात्पर्यग्राहकतया यथार्थपदसार्थक्यात् । एवं च यद्रूपावच्छिन्नविषयकानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयसामान्यं प्रकृतानुमितिप्रतिबन्धकं तद्रूपावच्छिन्नत्वं दोषत्वमित्यर्थः पर्यवसितः। तेन वह्नयभाववद्ध्रदविषयकस्याहार्यस्याप्रामाण्यज्ञानविशिष्टज्ञानस्य संशयस्य वा अनुमित्यप्रतिबन्धकत्वेऽपि नासंभव इत्यलं

## भास्करोदयाख्यव्याख्या.

प्रतिबन्धकं यद्यज्ज्ञानं तत्तदन्तर्गतस्येत्यर्थः । **वह्नयभावादाविति** । पर्वत आदिशब्दार्थः। **उक्तरीत्यैव**। यद्रूपावच्छिन्नविषयकज्ञानस्यानुमितिप्रतिबन्धकतया पूर्वं कथितयुक्त्येत्यर्थः । **ज्ञानविशेषतात्पर्यग्राहकतयेति**। तज्ज्ञानविशेषमेव निर्वक्ति—**एवं चेत्यादिना**। एतेनैतद्वैयर्थ्यमूलकारुचेर्यथार्थत्वविशेषणं परित्यज्य लक्षणान्तरं मणिस्थमवतारयन्तः समाहिताः । इदमेव लक्षणमभ्युपगच्छतो मूलकृतोऽपि स्वारस्यं सङ्गच्छते। यथार्थपदतात्पर्यज्ञानविशेषफलं दर्शयति—**एतेनेति** । **आहार्यस्येति**। बाधकालीनेच्छाजन्यज्ञानस्येत्यर्थः। अप्रतिबन्धकत्वेऽपीत्युत्तरेणान्वयः । **अप्रामाण्यज्ञानविशिष्टज्ञानस्य संशयस्येति** । उभयकोटिकसंशयज्ञानस्यान्यतराप्रामाण्यज्ञानसहकृतत्वनियमादिति भावः । **नासंभव इति** । एतयोः प्रतिबन्धकत्वेऽनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वविशेषणवैयर्थ्यमूलकलक्षणासंभवो नेत्यर्थः । **अलंपल्लवितेनेति**। इह प्रथमप्रवृत्तानामन्तेवासिनामतिदुरूहतयाऽप्रवृत्त्यापत्तेर्न विस्तृतम् । अधिकमस्मदीयामिनवदीधितिव्याख्यायां तर्ककर्कशविचारचातुरीधुरीणैर्द्रष्टव्यमितिसूचितम् । **अत्रेदं विचार्यते**। नचैवमपि पर्वतो वह्निमान्वह्निव्याप्यधूमवांश्च ह्रदश्च तथेति समूहालम्बनानुमितिविरोधिवह्नयभाववद्ध्रदादिरूपबाधादेः पर्वते धूमेन वह्निसाधने दोषताप्रसङ्ग इति वाच्यम्। अनुमितिपदस्य पक्षे साध्यतद्व्याप्यहेतुवैशिष्ट्यावगाह्यनुमितिसामान्यपरत्वात् । तथाच तादृशसामान्यान्तर्गतायां पर्वतो वह्निमान्वह्निव्याप्यधूमवाँश्चेत्यनुमितौ ह्रदो न वह्निमानित्यादिनिश्चयस्याप्रतिबन्धकत्वाददोषः ।

## नीलकण्ठी.

पल्लवितेन । परे तु इदं दुष्टानामेव लक्षणम् । परंतु ज्ञायमानव्यभिचारादेः प्रतिबन्धकत्वमभ्युपेत्य । तदर्थंस्त्वनुमितिप्रतिबन्धका ये व्यभिचारादयस्तेषु एकज्ञानविषयत्वविशिष्टप्रकृतहेतुतावच्छेदकत्वसंबन्धेन तत्प्रकारकयथार्थज्ञानविशेष्यत्वम् । धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तित्वविशिष्टवह्निर्व्यभिचारः उक्तसंबन्धेन 'तद्वान् वह्निः' इत्याकारकयथार्थज्ञानविशेष्यत्वमस्तीति लक्षणसमन्वयः । अनुमितिपदस्य प्रकृतानुमितिपरतया सद्धेतौ अनुमितिप्रतिबन्धकीभूतव्यभिचारादीनाम-

## भास्करोदयाख्यव्याख्या.

**एवंच** पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपिता या साध्यतावच्छेदकावच्छिन्नप्रकारता या च साध्यतावच्छेदकावच्छिन्नव्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारता तत्तन्निरूपकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतेत्यादिरर्थः फलितः । बाधादावव्याप्तेर्वारणाय पक्षतावच्छेदकावच्छिन्नेति । साध्यतावच्छेदकावच्छिन्नेति च । पक्षतावच्छेदकत्वं च तत्पर्याप्त्यधिकरणत्वम् । तेनातेजस्वी पर्वतो वह्निमानित्यादौ विशिष्टपर्वते वह्न्यभावरूपबाधादेः शुद्धपर्वतत्वावच्छिन्नपक्षकानुमित्यविरोधित्वेऽपि नासंग्रह इति ध्येयम् । वह्निर्धूमव्यभिचारीत्यादिग्रहदशायामपि द्रव्यत्वादिना धूमनिरूपितव्याप्तेर्भानसंभवाद्व्यभिचारविरोधयोरव्याप्तिरतो व्याप्तौ साध्यतावच्छेदकावच्छिन्नीयत्वनिवेशः । व्याप्तिरन्वयतो व्यतिरेकतश्च ग्राह्या, तेनानुपसंहारित्वस्यापि संग्रहः । स्वरूपासिद्ध्यादिसंग्रहाय हेतुतावच्छेदकावच्छिन्नेति । संस्कारादेराहार्यज्ञानादेश्च बाधादिज्ञानाप्रतिबध्यत्वादसंभव इत्यतोऽनुमितित्वप्रवेशः । **ननु** सिद्धेरनुमितिप्रतिबन्धकतया तदवच्छेदकविषयताश्रये साध्यवत्पक्षेऽतिप्रसङ्ग इति **चेदत्राहुः** । पक्षतावच्छेदकत्वादिपर्याप्तेरेवोक्तप्रयोजनानुरोधेन निवेशः, न तु तदधिकरणपर्याप्तावच्छेदकताकविशेष्यतेति रीत्या विशेष्यतावच्छेदकत्वादिपर्याप्तिनिवेशः । प्रयोजनाभावात् । एवं च पक्षांशे साध्यांशे वाऽधिकावगाहिन्यामनुमितौ पर्वतो वह्निमानिति सिद्ध्यप्रतिबध्यायां तादृशानुमितित्वस्य सत्वेन तद्व्यापकप्रतिबध्यताघटितलक्षणस्य सिद्धिविषयेऽभावान्नातिव्याप्तिरिति संक्षेपः । इदानीं मथुरानाथादीन्कटाक्षयन्स्वाभिप्रेतार्थमुत्प्रेक्षयति— **परेत्विति** । **दुष्टानामेवेति** । एतेन दोषव्यवच्छेदः । **ज्ञायमानव्यभिचारादेरित्यादि** । व्यभिचारादिज्ञानस्य प्रतिबन्धकत्वे वक्ष्यमाणसंबन्धेन यथार्थज्ञानविशेष्यत्वस्य हेतुवृत्तित्वभङ्गापत्तेरिति भावः । **तदर्थस्त्विति** । लक्षणार्थस्त्वित्यर्थः । **अनुमितीत्यादि** । अनुमितिः प्रकृतानुमितिः । प्रतिबन्धका ये व्यभिचारादयः साध्याभाववद्वृत्तित्वादिरूपाः । एकज्ञानं व्यभिचारविषयकं प्रकृतेत्यादिसंबन्धेन प्रकृतहेतुविषयकं यथार्थज्ञानं तद्विशेष्यत्वमित्यर्थः । तत्फलितार्थमाह—**धूमेत्यादिना** । धूमाभाववद्वृत्तित्वविशिष्टवह्नावुक्तलक्षणं सङ्घटयति—**उक्तेत्यादिना** । अनुमितिपदं नानुमितिसामान्यपरं येनैतद्व्यभिचारप्रतिबध्यतया धूमलिङ्गकानुमितिर्न स्यात्किंतु धूमवान्वह्नेरितिप्रकृतव्यभिचारप्रतिबध्यप्रकृतानुमितिपरमेवेत्याह—**अनु-**

साधारणं लक्षयति—तत्रेति ॥ उदाहरति—यथेति ॥ असाधारणं लक्षयति—सर्वेति ॥ अनुपसंहारिणो लक्षणमाह—अन्वयेति ॥

## नीलकण्ठी.

प्रसिद्धत्वान्नातिव्याप्तिः । यथार्थपदादाने दर्शितसंबन्धेन व्यभिचारप्रकारकभ्रमविशेष्यत्वस्य सद्धेतावपि सत्त्वेनातिव्याप्तिः स्यादिति तन्निवेश इत्याहुः । **स त्रिविध इति** । सामान्यलक्षणं तु साधारणाद्यन्यतमत्वं स्फुटम् ।

मूले **तत्रेति** । साधारणादिषु मध्ये इत्यर्थः । **साध्याभाववद्वृत्तिरिति** । साध्यतावच्छेदकधर्मसंबन्धावच्छिन्नप्रतियोगिताकाभाववन्निरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नाधेयतावानित्यर्थः । तेन वह्निमान् धूमादित्यादौ हेतुमति पर्वतादौ तत्तत्साध्याभावस्य संबन्धान्तरावच्छिन्नसामान्याभावस्य च सत्त्वेपि साध्याभाववति धूमावयवादौ समवायादिना धूमादेर्वृत्तित्वेऽपि च नातिव्याप्तिः । अत्र च साध्याभाववत्तायां संबन्धविशेषावच्छिन्नत्वानिवेशे वह्निमान् धूमादित्यादौ वह्न्या-

## भास्करोदयाख्यव्याख्या.

**मितीत्यादि** । यथार्थज्ञानविषयत्वनिवेशप्रयोजनं दर्शयति—**यथार्थेत्यादिना** । **व्यभिचारप्रकारकभ्रमविशेष्यत्वस्येति** । विशेष्यत्वस्य वह्न्यभाववद्वृत्तित्वविशिष्टो धूम इत्याकारकाप्रमाज्ञाननिरूपितविशेष्यताश्रयत्वस्येत्यर्थः । **सद्धेतावपीति** । साध्याभाववदवृत्तित्वादिरूपव्याप्तिविशिष्टधूमादिरूपहेतावपीत्यर्थः । **स त्रिविध इतीति** । सामान्यलक्षणानुक्त्या विभागानुपपत्तिमूलकप्राप्तन्यूनतापरिहाराय मूलत एव सामान्यलक्षणं स्फुटयति—**सामान्येत्यादिना** । स्पष्टप्रतिपत्तिद्वारोपकाराय मूलस्थं विवृणोति—**मूले तत्रेतीति** । **साध्याभाववद्वृत्तिरितीति** । साध्यप्रतियोगिताकाभावाधिकरणनिरूपिताधेयतावानित्यर्थः । साध्याभावीयसाध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकधर्मावच्छिन्नत्वं साध्यतावच्छेदकसंबन्धावच्छिन्नत्वमेवं साध्याभावाधिकरणनिरूपितहेतुनिष्ठाधेयतायां हेतुतावच्छेदकसंबन्धावच्छिन्नत्वं निवेशयति—**साध्यतेत्यादिना** । फलं दर्शयति—**तेनेत्यादिना** । **तत्तत्साध्याभावस्य** । अस्य चालनिन्यायेनेत्यादिः । **ननु** तत्ताविशिष्टवह्न्यभावप्रतियोगिनि वह्नौ तत्तावैशिष्ट्यवद्वह्नित्वरूपसाध्यतावच्छेदकधर्मवैशिष्ट्यमपि 'शुक्लरूपाभाव' इत्यत्र शुक्लत्वरूपत्वधर्मद्वयावच्छिन्नस्य रूपत्वावच्छिन्नत्वेनानुभवादिति चेत्साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्ममात्रवैशिष्ट्ये पर्यवसानात्तेन विशिष्टोभयाभावमादायापि न दोषावकाश इत्याहुः । तद्धर्मावच्छिन्नप्रतियोगिताकाभावस्य तद्वह्निर्नास्तीति प्रतीतिगोचरस्य समवायेन वह्न्यभावस्य, च पर्वतवृत्तितया दोषवारणाय साध्यतावच्छेदकधर्मसंबन्धावच्छिन्नत्वनिवेश इति भावः । **नातिव्याप्तिरिति** । तादृशसाध्याभावाधिकरणधूमावयवनिरूपितहेतुतावच्छेदकसंयोगसंबन्धावच्छिन्नाधेयतावत्त्वस्य धूमहेतावभावात्सद्धेतौ नातिचरति साधारणलक्षणमिति निष्कृष्टोऽर्थः । साध्याभावाधिकरणत्वे वक्ष्यमाणसंबन्धविशेषावच्छिन्नत्वनिवेशनस्यावश्यकतां बोधयितुं स्वरूपसंबन्धेन तदधिकरणत्वेऽप्रसिद्धिमुद्भावयति—**अत्रेत्यादिना** । **संबन्धविशेषावच्छिन्नत्वानिवेशे** । वक्ष्यमाण

साध्याभावव्याप्तो हेतुर्विरुद्धः ॥ यथा—शब्दो नित्यः कृतकत्वादिति ॥ कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम् ॥ यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षः ॥ यथा—शब्दो नित्यः श्रावणत्वात् शब्दत्ववत् ॥ शब्दोऽनित्यः कार्यत्वात् घटवदिति ॥ असिद्धस्त्रिविधः—आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति ॥ आश्रयासिद्धो यथा—गगनारविन्दं सुरभि, अरविन्दत्वात् सरोजारविन्दवदिति। अत्र गगनारविन्दमाश्रयः स च नास्त्येव ॥ स्वरूपासिद्धो यथा—शब्दोऽनित्यश्चाक्षुषत्वात् रूपवदिति। अत्र चाक्षुषत्वं पक्षे नास्ति शब्दस्य श्रावणत्वात् ॥

---

## नीलकण्ठी.

ह्यभावस्य कालिकादिसंबन्धेन पर्वतादौ वृत्तेरतिव्याप्तिः । दैशिकविशेषणताविशेषावच्छिन्नत्वनिवेशे घटत्वाभावादिसाध्यकव्यभिचारिणि साध्याभावस्य घटत्वादेर्विशेषणताविशेषेणाधिकरणाप्रसिद्ध्याऽव्याप्तिरतः साध्यतावच्छेदकसंबन्धेन साध्यवत्ताग्रहं प्रति येन संबन्धेन साध्याभाववत्तानिश्चयः प्रतिबन्धकः तेन संबन्धेन साध्याभाववत्त्वं विवक्षणीयम् । वह्न्यादौ साध्ये तादृशसंबन्धो दैशिकविशेषणता, घटत्वाभावादौ च साध्ये समवायस्तथेति न दोषः । 'कपिसंयोगी एतद्वृक्षत्वात्' इत्यादौ तादृशसंबन्धो निरवच्छिन्नदैशिकविशेषणतेति दिक् । न च विरुद्धेऽतिव्या-

## भास्करोदयाख्यव्याख्या.

इत्यादिः । **घटत्वाभावादिसाध्यकव्यभिचारिणि** । घटत्वाभावादिसाध्यकप्रमेयत्वरूपहेतौ । **विशेषणताविशेषेणेत्यादि** । साध्याभावस्येह घटत्वस्वरूपतया समवायेनाधिकरणं घटादिर्न स्वरूपेणेत्यप्रसिद्धिरतो यथायथं संबन्धसामान्येनाधिकरणत्वे कालिकेन वह्न्यभावमादाय पर्वतादौ साध्याभाववृत्तेरतिव्याप्तेः संबन्धविशेषविवक्षाऽऽवश्यिकेति तत्त्वम् । तमेव संबन्धविशेषं दर्शयति—**साध्यतेत्यादिना** । भावसाध्यकस्थले च साध्यवत्ताग्रहविरोधितानियामकस्वरूप एवाभावसाध्यकस्थले संयोगसमवायादिरेवेति भावः । कपिसंयोगरूपभावसाध्यके मूलावच्छेदेन दैशिकविशेषणतया संयोगाभाववत्तानिश्चयस्याप्रतिबन्धकत्वाद्विरोधितानियामकोऽभावसाध्यके कथं दैशिकविशेषणताविशेष एवेत्याशङ्क्याह—**निरवच्छिन्नेत्यादि** । साध्याभाववद्वृत्तित्वरूपसाधारणलक्षणस्य शब्दे नित्यत्वसाध्यककार्यत्वरूपविरुद्धे नित्यत्वाभाववद्घटादिवृत्तित्वमति सत्त्वेन लक्षणमतिचार्य असाधारणविरोधयोः सांकर्यमुद्भावयन्तं प्रत्याह—**नचेति** । यद्यप्येतद्दोषपरिहाराय साध्यवद्वृत्तित्वे सति इति वक्तुमुचितं तथाप्येकव्यक्तिसाध्यकसाधारणासंग्रहापत्तेरतः

## नीलकण्ठी.

प्तिरिति भ्रमितव्यम् । उपधेयसङ्करेप्युपाधेरसंकरादिति न्यायेन तस्य विरुद्धसाधारण्येपि क्षतिविरहात् । मूले **सर्वसपक्षव्यावृत्त इति** । सपक्षवृत्तित्वत्वावच्छिन्नाभाववानित्यर्थः । सर्वपदं सपक्षवृत्तित्वसामान्याभावस्फोरकम् । सपक्षपदं निश्चितसाध्यवदर्थकम् । शब्देऽनित्यत्वसाधकशब्दत्वादिसद्धेतावपि पक्षे साध्यसंदेहदशायामसाधारण्यस्येष्टत्वादिति संप्रदायविदः । नवीनास्तु सद्धेतावपि पक्षे साध्यसंदेहदशायामसाधारण्यस्य प्रकृतपरामर्शकालिकविरुद्धपरामर्शदशायां सत्प्रतिपक्षस्य च स्वीकारे बाधभ्रमदशायां बाधस्याप्यङ्गीकारापत्तिः । नहि वैषम्ये युक्तिं पश्यामः । एवं चात्र सपक्षपदं केवलसाध्यवत्परम् । 'शब्दोऽनित्यः श्रावणत्वात्' इत्यादिसा-

## भास्करोदयाख्यव्याख्या.

प्रकारान्तरेण परिहरति—**उपधेयेत्यादिना** । **उपधेयसंकरेऽपि** । दुष्टसंकरेऽपि । **उपाधेरसंकरात्** । दोषासंकरात् । **इति न्यायेन** । एवं युक्त्या । **तस्य** साधारण्यस्य । **विरुद्धसाधारण्येऽपि** विरोधे सत्त्वेपि । **क्षतिविरहात्** दोषसांकर्यप्रयुक्तपञ्चत्वानुपपत्तिविरहादिति सकलार्थः । **सर्वसपक्षव्यावृत्त इतीति** । सर्वसपक्षविपक्षव्यावृत्तोऽसाधारण इति क्वचिद्दृश्यते । तथापि विपक्षव्यावृत्तेरनुगुणत्वाद्यर्थविशेषणत्वात्प्रत्युत विपक्षव्यावृत्तत्वे व्यतिरेकितया परं प्रति साध्यसाधकमेवोपन्यस्यादित्यादिना मणिग्रन्थेन सर्वसपक्षव्यावृत्तमात्रस्य सिद्धान्तितत्वेन तत्पाठस्य निर्मूलत्वसिद्धेरित्थमुक्तम् । सर्वसपक्षव्यावृत्तपदार्थमाह—**सपक्षेत्यादि** । निश्चितसाध्यवद्वृत्तित्वावच्छिन्नप्रतियोगिकाभाव इति निष्कर्षः । सपक्षवृत्तित्वाभावार्थकसपक्षव्यावृत्तत्वमात्रस्य लक्षणत्वे साध्याभाववदवृत्तित्वादिलक्षण इव सामान्याभावविवक्षया वैयर्थ्यं मनसिकृत्य तदर्थतात्पर्यग्राहकतया सार्थकयति—**सर्वेत्यादिना** । यथा शब्दो नित्यः शब्दत्वादित्यत्रानित्य इति पदच्छेदं कुर्वतां मतं समर्थयति—**शब्देत्यादिना** । **साध्यसंदेहदशायामिति** । पक्षतासंपत्तये संदिग्धसाध्यवत्ताकाले इत्यर्थः । **असाधारण्यस्येष्टत्वादिति** । संदेहदशायां निश्चितसाध्यवद्रूपसपक्षवृत्तित्वाभावेन सपक्षवृत्तित्वसामान्याभावरूपासाधारण्यस्यावश्यकत्वादित्यर्थः । **संप्रदायविदः** । सांप्रदायिकार्थविद इत्यर्थः । संप्रदायविन्मतेऽरुचिमुद्भावयन् नव्यमतमाह—**नवीनास्त्वति** । **असाधारण्यस्येति** । स्वीकारे इति परेणान्वयः । **प्रकृतपरामर्शकालिकेत्यादि** । साध्यसंदेहदशायां पक्षे साध्यनिश्चयाभावेन विपरीतपरामर्शस्यापि संभावनया सत्प्रतिपक्षस्वीकारे चेत्यर्थः । **बाधभ्रमदशायामित्यादि** । तुल्ययुक्त्या सद्धेतौ बाधभ्रमदशायां बाधस्याप्यसाधारण्यदोषत्वेनाङ्गीकारापत्तेरित्यर्थः । **नहि वैषम्ये युक्तिं पश्याम इति** । बाधभ्रमदशायां बाधितस्य सपक्षव्यावृत्तत्वेन नासाधारण्यं साध्यसंदेहदशायां च सद्धेतोस्तत्त्वमित्येवं वैषम्ये एकशेषे युक्तिमनुग्राहिकां न पश्याम इत्यर्थः । अतो नव्यसिद्धान्तसिद्धं सपक्षत्वं दर्शयति—**एवंचेत्यादि** । **केवलसाध्यवत्परम्** । साध्यवन्मात्रबोधकं न निश्चितसाध्यवत्तावच्छिन्नसप-

## नीलकण्ठी.

ध्यवदवृत्तिहेतोरेव लक्ष्यतेति न कोपि दोष इति प्राहुः । **अन्वयव्यतिरेकदृष्टान्तरहित इति** । तत्त्वं च किंचिद्विशेष्यकनिश्चयाविषयसाध्यकत्वे सति किंचिद्विशेष्यकनिश्चयाविषयसाध्याभावकत्वम् । नवीनमते तु अत्यन्ताभावाप्रतियोगित्वविशिष्टसाध्यादिकत्वमेवानुपसंहारित्वम् । तज्ज्ञानस्य व्यतिरेकव्याप्तिग्रहप्रतिबन्धकता । **साध्याभावव्याप्त इति** । साध्याभावव्याप्तिः साध्यवदवृत्तित्वम् । असाधारण्यस्य तु निश्चितसाध्याभाववदवृत्तित्वरूपतया नाभेदः । नवीनमते तु साध्याभावस्य व्यतिरेकव्याप्तिः साध्यव्यापकाभावप्रतियोगित्वरूपेति नासाधारण्याभेदः । एतादृशव्याप्तिविशिष्टहेतुमत्ताज्ञानं साक्षादनुमितिप्रतिबन्धकमिति ध्येयम् । **यस्य साध्याभावेत्यादि** । यत्संबन्धि यत्साध्यं तदभावव्याप्यहेत्वन्तरस्य ज्ञानं पक्षेऽस्ति स सत्प्रतिपक्ष इत्यर्थः । प्रकृतसाध्यव्याप्यत्वेन ज्ञायमानो यः प्रकृतहेतु-

## भास्करोदयाख्यव्याख्या.

क्षार्थकमित्यर्थः । **साध्यवदवृत्तिहेतोरेवेति** । साध्यवत्त्वावच्छिन्नवृत्त्यभावप्रतियोगिहेतोरेवेत्यर्थः । तेन यत्किंचित्प्रकृतसाध्यवद्वृत्तित्वेन साध्यवदवृत्तित्वाप्रसिद्धावपि न क्षतिः । **न कोऽपि दोष इति** । अनित्यत्वसाध्यकशब्दत्वहेतोः साध्यवच्छब्दवृत्तित्वात् सन्देहदशामादाय तु न तत्त्वमुक्तयुक्तेरिति भावः । **अन्वयव्यतिरेकदृष्टान्तरहित इतीति** । तत्त्वं परिष्करोति—**किंचिदित्यादिना** । किंचिद्विशेष्यकनिश्चयाविषयाविषयसाध्यकत्वे सति यत्किंचित्पक्षविशेष्यकसाध्यविषयकतया यत्किंचित्साध्याभावाधिकरणाप्रसिद्धौ तादृशनिश्चयस्य यत्किंचित्साध्याभावाधिकरणविशेष्यकतया च प्रमेयत्वहेतौ तत्त्वमिति भावः । अर्वाचीनमते गौरवमुत्थापयन् अन्यमतं दर्शयति—**नवीनेत्यादिना** । एतेन केवलान्वयिसाध्यकत्वं पर्यवसन्नम् । दूषकताबीजं दर्शयति—**तदित्यादिना** । **साध्याभावव्याप्त इतीति** । न च संयोगादिसाध्यकसद्धेतावतिव्याप्तिरिति वाच्यम् । साध्यासमानाधिकरणत्वेसति साध्याभावव्याप्तिवैशिष्ट्यस्याभिप्रेतत्वात् । साध्याभावव्याप्तिं प्रकारान्तरेण विवृणोति—**साध्यवदवृत्तित्वमितीति** । तेन संयोगसाध्यकसद्धेतावतिप्रसङ्गाशङ्कैव नावतरतीति भावः । साध्यवदवृत्तित्वेनासाधारण्यविरोधयोर्दोषयोः सांकर्यमाशङ्क्य परिहरति—**निश्चितसाध्यवदवृत्तित्वरूपतया नाभेद इति** । दूषकत्वं दर्शयति—**एतादृशेत्यादिना** । साध्यवदवृत्तित्वरूपविरोधरूपदोषविशिष्टहेतुज्ञानं साक्षादेवानुमितिविरोधि न परम्परया व्यभिचारविशिष्टहेतोः व्याप्तिद्वारैव श्रवणमात्रेणैवाप्रामाण्यग्रहादित्याशयः । **यस्य साध्याभावेत्यादीति** । **यत्संबन्धीति** । यत्पदेन प्रकृताभिप्रेतपक्षपरिग्रहः । **पक्षेत्यत्र** तदित्यादिः । तथाच यत्पक्षकं यत्साध्यं तदभावव्याप्यहेत्वन्तरस्य ज्ञानं तत्पक्षे स इत्यन्वयः । नवीनमते वैलक्षण्यं हेत्वन्तरस्य सत्त्वमात्रं पक्षे स इति बोध्यम् । स्वरूपतस्तत्सत्त्वस्यैतत्सत्त्वासंभवाज्ज्ञायमानतदभावव्याप्यतत्सत्त्वं विवक्षणी-

विरुद्धं लक्षयति—साध्येति ॥ सत्प्रतिपक्षं लक्षयति—यस्येति ॥ असिद्धं विभजते—असिद्ध इति ॥ आश्रयासिद्धमुदाहरति—गगनेति ॥ स्वरूपासिद्धमुदाहरति—शब्द इति ॥

**सोपाधिको हेतुर्व्याप्यत्वासिद्धः ॥ साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः ॥ साध्यसमानाधिकरणात्यन्ता-**

## नीलकण्ठी.

ततोऽन्यस्मिन् हेतौ साध्याभावव्याप्यत्वज्ञानदशायामेव तस्य सत्प्रतिपक्षतेति सूचनाय **हेत्वन्तरमितीति प्राञ्चः**। नवीनाः पुनरेवं वर्णयन्ति । यत्संबन्धिसाध्याभावव्याप्यहेत्वन्तरस्य सत्त्वं पक्षे स तथाविध इत्यर्थः । **आश्रयासिद्धो यथेति**। **आश्रयासिद्धिश्च** पक्षे पक्षतावच्छेदकविरहः । पक्षतावच्छेदकविरहवान् पक्षो वा । **स च नास्त्येवेति**। अरविन्दस्य प्रसिद्धत्वात् 'सविशेषणे हि' इति न्यायेनारविन्दे गगनीयत्वं नास्तीति पर्यवसितोर्थः । **स्वरूपासिद्धिश्च** पक्षे हेत्वभावो, हेत्वभाववान् पक्षो वा ॥

## भास्करोदयाख्यव्याख्या.

यमिति हृदयं वेदितव्यम् । अत्र च परस्पराभावव्याप्यवत्ताज्ञानात्परस्परानुमितिप्रतिबन्धः फलम्। केचित्तु संशयाकारामनुमितिमङ्गीकुर्वन्ति कोटिद्वयव्याप्यवत्ताज्ञानात्तदसत् । लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यानाहार्यतद्वत्ताज्ञानमात्रे तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वादन्यथा शाब्दाद्यनुपपत्तिः । घटाभावव्याप्यवत्ताज्ञानेऽपि घटचक्षुःसंयोगे घटवत्ताज्ञानात्पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञानेऽपि दोषविशेषेण शङ्खः पीत इति ज्ञानात् वह्न्यभावव्याप्यजलवान्हृद इति ज्ञानेऽपि हृदो वह्निमानित्येव ज्ञानाज्ज्ञाने लौकिकसन्निकर्षाद्यजन्यत्वं निविष्टमिति बोध्यमधिकमन्यत्रानुसन्धेयम्। **आश्रयासिद्धो यथेति** । असिद्धत्वमाश्रयासिद्ध्याद्यन्यतमत्वं बोध्यम् । **स च नास्त्येवेतीति**। गगनीयमरविन्दं नास्त्येवेत्यर्थः । अरविन्दे पक्षे गगनीयत्वरूपपक्षतावच्छेदकाभावनिश्चयादस्य सुरभित्वव्याप्यारविन्दत्ववद्गगनारविन्दमिति परामर्शप्रतिबन्धः फलमिति बोध्यम्। अत्र गगनारविन्दं नास्तीत्यत्र किमरविन्दत्वनिषेध आहोस्विद्गगनीयत्वनिषेधः । सामानाधिकरण्यसंबन्धेन गगनीयत्वविशिष्टारविन्दस्येत्यरविन्दत्वमरविन्दे प्रतिषेद्धुमशक्यम् । अरविन्दस्य प्रसिद्धत्वात्सविशेषणे विधिनिषेधौ सति विशेष्येऽन्वयबाधे विशेषणमुपसंक्रामत इति न्यायेन गगनीयत्वस्यैव निषेध इति तात्पर्येण **पर्यवसितोऽर्थ इति**। **स्वरूपासिद्धिश्चेत्यादि**। शब्दे गुणत्वव्याप्यचाक्षुषत्ववत्ताकपरामर्शज्ञानं प्रति शब्दे न चाक्षुषत्वमिति स्वरूपासिद्धेः प्रतिबन्धकत्वं फलमिति बोध्यम् । सोपाधिको हेतुर्व्याप्यत्वासिद्ध इति वाक्यं 'सर्वं वाक्यं सावधारणं'मिति न्यायेन

---

१ शिखीविनष्टः । निध्वनत्पाञ्चजन्यश्रुतः । सुरभिचन्दनमाघ्रातमित्येवमुदाहरणान्यस्य ।
२ यथा अब्भक्षो वायुभक्ष इत्युक्ते अपएव भक्षयति वायुमेव भक्षयतीति गम्यते ।

भावाप्रतियोगित्वं साध्यव्यापकत्वम् ॥ साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम् ॥ यथा—पर्वतो धूमवान्वह्निमत्त्वात्, इत्यत्रार्द्रेन्धनसंयोग उपाधिः ॥ तथाहि यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकत्वम् ॥ यत्र वह्निस्तत्रार्द्रेन्धनसंयोगो नास्ति अयोगोलके आर्द्रेन्धनाभावात् इति साधनाव्यापकत्वम् ॥ एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वासिद्धम् ॥

व्याप्यत्वासिद्धस्य लक्षणमाह—सोपाधिक इति॥उपाधेर्लक्षणमाह—साध्येति॥

---

## नीलकण्ठी.

ननु सोपाधिकस्य अतिरिक्तस्य सद्भावात् कथं पञ्च हेत्वाभासा इत्यत आह— **सोपाधिक इति** । व्याप्यत्वासिद्धिः व्याप्त्यभावः । तस्याः सोपाधिकहेतौ नियमेन सत्त्वात् सोपाधिको व्याप्यत्वासिद्ध एव न तु अतिरिक्तः हेत्वाभास इति भावः । उपाधेर्दोषत्वमसंभवीति दीपिकायां व्यक्तीभविष्यत्यग्रे । अत्रेदवधेयम् । साध्ये साध्यतावच्छेदकाभावः साध्याप्रसिद्धिः । हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः । यथा काञ्चनमयवह्निमान् काञ्चनमयधूमात् इत्यादौ तद्ग्रहदशायां हेतुतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टव्याप्तिग्रहप्रतिबन्धः फलम् । तयोर्व्याप्यत्वासिद्धावन्तर्भावान्न हेत्वाभासाधिक्यमिति । **साध्यव्यापकत्व इति** । साध्यव्यापकत्वसाधनाव्यापकत्वे एकरूपेण एकसंबन्धेन च ग्राह्ये । तेन 'वह्निमान् धूमात्' इत्यादौ तत्तद्वह्नौ वह्नित्वेन साध्यव्यापकत्वस्य तत्तद्वह्नित्वेन च साधनाव्यापकत्वस्य सत्त्वेऽपि आलोके संयोगेन साध्यव्यापकत्वस्य समवायेन च

## भास्करोदयाख्यव्याख्या.

व्याप्यत्वासिद्ध एवेत्यर्थकपरमिति तदवतारयति—**नन्विति** । **नियमेन सत्त्वादिति** । धूमसाध्यकार्द्रेन्धनसंयोगोपाधिवह्निरूपहेतौ साध्याभाववद्वृत्तित्वेन व्याप्त्यभावस्य स्फुटत्वादिति भावः । **दीपिकायां व्यक्तीभविष्यत्यग्र इति** । शब्दपरिच्छेद इत्यर्थः । साध्यप्रसिद्धिसाधनाप्रसिद्ध्योर्दोषान्तरत्वेन पञ्चत्वव्याघातस्तदवस्थ इत्याशङ्क्य तत्स्वरूपप्रदर्शनपूर्वकं तयोरतिरिक्तत्वं निराचष्टे—**अत्रेदमवधेयमिति । तद्ग्रहदशायामिति** । वह्निधूमयोः काञ्चनमयत्वाभावग्रहदशायामित्यर्थः । अव्याप्त्यतिव्याप्त्यसंभवानां नात्रातिरिक्तदोषत्वं भागासिद्धिव्याप्यत्वासिद्धिस्वरूपासिद्धित्वेनैव दोषत्वमिति प्रागेवोक्तं स्मर्तव्यम् । **तत्तद्वह्नावित्यादि** । पर्वतीयवह्नेर्वह्नित्वेन वह्निमन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपसाध्यव्यापकत्वस्य पर्वतीयवह्नित्वेन धूमवन्निष्ठात्यन्ताभावप्रतियोगितावच्छेदकपर्वतीयवह्नित्वधर्मवत्त्वस्य सत्त्वादेव पर्वतीयवह्न्यादावुपाधित्वादतिव्याप्तिरिति वह्नित्व-

उपाधिश्चतुर्विधः—केवलसाध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकः, उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति ॥ आद्यः आर्द्रेन्धनसंयोगः । द्वितीयो यथा—'वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात्' इत्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वम् ॥ तृतीयो यथा—'प्रागभावो विनाशी जन्यत्वात्' इत्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम् ॥ चतुर्थस्तु—'प्रागभावो विनाशी प्रमेयत्वात्' इत्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम् ॥

## नीलकण्ठी.

साधनाव्यापकत्वस्य सत्त्वेऽपि च नातिव्याप्तिः । मूलोक्तउपाधिलक्षणस्याव्याप्तिं वारयितुं लक्ष्यलक्षणभेदं प्रदर्शयति दीपिकायाम्—**उपाधिश्चतुर्विध इति** । यद्धर्मविशिष्टसाध्यव्यापकत्वं तद्धर्मविशिष्टसाधनाव्यापकत्वं लक्षणे निवेशनीयम् । अन्यथा पर्वतत्वात्मकपक्षधर्मविशिष्टवह्निव्यापकस्य किंचिद्धूमत्वावच्छिन्नाव्यापकत्वादतिव्याप्तिः स्यादिति ध्येयम् । **उदासीनेति** । पक्षधर्मसाधनधर्माभ्यां भिन्नेत्यर्थः । **बहिर्द्रव्यत्वम्** । आत्मान्यद्रव्यत्वम् । इदं केवलप्रत्यक्षत्वस्यैव साध्यत्वानुसारेण । **प्रागभावो विनाशी जन्यत्वादिति** । अत्र जन्यत्वं पक्षधर्मो न भवतीति साधनावच्छिन्नसाध्यव्यापकत्वघटितलक्षणम् । **अनित्यत्वव्यापकमिति** । विनाशित्वव्यापकमित्यर्थः.। जन्यत्वस्योदासीनत्वं संपादयितुं **प्रमेयत्वादिति** ।

## भास्करोदयाख्यव्याख्या.

रूपेण साध्यव्यापकत्वं तत्तद्वह्नौ वह्नित्वेनैव रूपेण साधनाव्यापकत्वं विवक्षितम् । तेन धूमवति वह्नित्वेन वह्निसामान्यस्य वृत्तित्वान्न दोष इति भावः । एवमुत्तरत्रापि । **उपाधिश्चतुर्विध इतीति** । चतुष्ट्वावच्छिन्नसाध्यव्यापकत्वादिप्रकारविशिष्ट इत्यर्थः । **केवलसाध्येत्यादि** । पक्षधर्मानवच्छिन्नसाध्येत्याद्यर्थः । उपाधिलक्षणे पक्षधर्मावच्छिन्नसाध्यव्यापकत्वरूपे यथाश्रुते पर्वतत्वावच्छिन्नवह्नौ वह्नित्वेन रूपेण साध्यव्यापके तत्तद्वह्नित्वेन साधनाव्यापकत्वात्तत्तद्वह्नौ लक्षणातिप्रसक्तेर्यद्धर्मेत्यादि निवेशयति— **यद्धर्मेत्यादिना** । तेन वह्नित्वेन वह्निसामान्यस्य साधनवति अभावाभावादिति भावः । **आत्मान्यद्रव्यत्वमिति** । इदमात्मप्रत्यक्षोत्पत्तेरुक्तम् । **इदमिति** । प्रत्यक्षे बहिरिन्द्रियद्रव्यत्वावच्छिन्नत्वविशेषणम् । **केवलप्रत्यक्षत्वमिति** । उभयसाधारणप्रत्यक्षत्वमित्यर्थः । **प्रागभावो विनाशी जन्यत्वादितीति** । जन्यत्वस्य प्रागभावपक्षवृत्तित्वभ्रान्त्या द्वितीयोपाधिनैव तृतीयान्यथासिद्धिमापादयन्तं दूषयञ्जन्यत्वस्य पक्षावृत्तितया तृतीयं सार्थकयति—**अत्रेत्यादिना** । **विनाशित्वव्यापकमित्यर्थ इति** । विनाशित्वस्य पक्षधर्मसाधनाभ्यां भिन्नत्वरूपोदासीनधर्मत्वादिति भावः । **जन्यत्वस्येत्यादि** । प्रमेयमात्रस्य जन्यत्वाभिप्रायेणेदमिति भावः । दीपिकायां **बाधितस्य लक्षणमाहेति** । नच दुष्टलक्षणत्वे दोषेष्वतिप्रसक्तेर्दोषाणामेव तदभ्युपगम्य तद्वत्त्वेन दुष्टत्वमङ्गीकृतं ग्रन्थकृद्भिरिति प्रकृते कथमिति वाच्यम् । सामान्यलक्षणस्य तथाभिप्रेतत्वात्

यस्य साध्याभावः प्रमाणेन(णान्तरेण) निश्चितः स बाधितः। यथा–वह्निरनुष्णो द्रव्यत्वादिति ॥ अत्रानुष्णत्वं साध्यं, तदभाव उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यत इति बाधितत्वम् ॥

व्याख्यातमनुमानम् ॥ * ॥

बाधितस्य लक्षणमाह–यस्येति ॥ अत्र बाधस्य ग्राह्याभावनिश्चयत्वेन, सत्प्रतिपक्षस्य विरोधिज्ञानसामग्रीत्वेन साक्षादनुमितिप्रतिबन्धकत्वम् ॥ इतरेषां परामर्शप्रतिबन्धकत्वम् । तत्रापि साधारणस्याव्यभिचाराभाववत्तया, विरुद्धस्य सामाना-

## नीलकण्ठी.

**बाधस्य** । साध्याभाववत्तानिश्चयस्य । **ग्राह्याभावनिश्चयत्वेनेत्य**नुमितिप्रतिबन्धकत्वमित्यनेनान्वयि । **विरोधिज्ञानसामग्रीत्वेनेति** । इदं प्राचीनमते । वस्तुतस्तु विरोधिपरामर्शस्य साध्याभावव्याप्यवत्तानिश्चयत्वेनैव प्रतिबन्धकत्वं, लाघवात् । **इतरेषाम्** । व्यभिचारादिग्रहाणाम् । **तत्रापि** । व्यभिचारादिग्रहेष्वपि । **साधारणस्येति** । भावप्रधाननिर्देशतया साधारण्यस्येत्यर्थः । **अव्यभिचाराभाववत्तया** । तद्ग्रहस्येति शेषः । व्याप्तिज्ञानप्रतिबन्धकत्वमित्य-

## भास्करोदयाख्यव्याख्या.

प्रकृते च हेतुबोधकयच्छब्दघटिततया दोषेऽतिप्रसङ्ग एव नेत्यभिप्रायात् । संग्रहे **यस्य** हेतोः निरूपितत्वं षष्ठ्यर्थः । आश्रयतया साध्यान्वयी । तत्प्रतियोगिताको योऽभावः । **प्रमाणेन** तद्विरोधिप्रत्यक्षाद्यन्यतमप्रमाणेन । **निश्चितो** निश्चयविषयः । **सः** हेतुः । **बाधित** इत्यर्थः । दीपिकायां **अत्रेति** । उक्तेषु बाधान्तेषु दोषेष्वित्यर्थः । उपस्थितत्वाद्बाधस्य केन रूपेण कं प्रति प्रतिबन्धकत्वमित्याशङ्काक्रमेण तत्तद्रूपेण तं तं प्रति प्रतिबन्धकत्वं सर्वेषां वदन्नादौ बाधस्याह–**बाधस्येति** । **साध्याभाववत्तानिश्चयस्येति** । ह्रदादिर्वह्न्याद्यभाववानित्याकारकनिश्चयात्मकज्ञानस्येत्यर्थः । **ग्राह्याभावनिश्चयत्वेनेतीति** । तद्धर्मिकतदभावनिश्चयत्वेनेत्यर्थः । **अनुमितिप्रतिबन्धकत्वमित्यनेनान्वयीति** । पृथक्कृत्येति शेषः । सा आदिरित्यनेनाप्येवमिति बोध्यम् । **लाघवादिति** । अतिरिक्तविरोधिज्ञानसामग्रीत्वेन प्रतिबन्धकत्वकल्पनापेक्षया विरोधिपरामर्शस्य साध्याभावव्याप्यवत्तानिश्चयरूपत्वेन तद्रूपेणैव प्रतिबन्धकत्वकल्पनं न्याय्यमिति भावः । बाधसत्प्रतिपक्षेतरदोषाणां परामर्शप्रतिबन्धकत्वं सामान्यत उपपाद्य विशेषरूपेण प्रतिबन्धकतां बोधयितुमुपक्रमयिता दीपिकायामाह—**तत्रापीति** । इतरदोषेष्वपीत्यर्थः । **साधारणस्येतीति** । दोषस्य प्रतिबन्धकत्वावश्यकत्वादिदमनुपपन्नमित्यालोच्याह—**भावप्रधानेत्यादि** । भावो नाम प्रकृतिजन्यबोधे प्रकारस्त्वतल्भ्यां वाच्यः । स च क्वचिद्धर्मः क्वचिज्जातिः क्वचित्संसर्गः क्वचिद्गुणक्रियादिः सर्वोऽपि तद्रूपेण विषयः । तथाच भावः · प्रधानं यस्मिन्निर्देशे इति व्युत्पत्त्या

१ भावत्वेन रूपेण ।

## भास्करोदयाख्यव्याख्या.

साधारणपदं त्रीह्मणादिष्यन्तसाधारण्यबोधकमिति भावः । तत्त्वं लक्षणयैवेति ध्येयम् । **केचित्तु** । भावपदस्य धर्मत्वेन धर्मं एव शक्तिर्लाघवाद्धर्मत्वमाधेयत्वं शक्यतावच्छेदकं त्रितयानुगतं शक्तताच्छेदकं च प्रत्येकमेव न तु सामान्यतो भावप्रत्ययत्वं भावाधिकारविहितप्रत्ययानुगतभावप्रत्ययत्वस्य दुर्वचत्वात् । तेन रूपेण ज्ञातेऽपि त्वतल्त्वादिप्रकारकज्ञानाच्छाब्दबोधोदयाच्च । घटत्वं पटत्वमित्यादौ घटवृत्तिधर्मः पटवृत्तिधर्म इत्यादिरेव प्रकृतिप्रत्ययाभ्यामन्वयबोधः । धर्मत्वरूपेण प्रकृत्यर्थतावच्छेदकधर्ममात्रबोधकत्वव्युत्पत्त्यैव घटत्वपटत्वादिरूपधर्मविशेषमात्रलाभः । नचैवं पटे घटत्वं नास्तीति व्यवहारविरोधः घटवृत्तिधर्मस्य द्रव्यत्वादेस्तत्र सत्त्वात् अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्य व्युत्पत्तिबललभ्यतया घटत्वादिरूपप्रकृत्यर्थतावच्छेदकधर्ममात्रप्रतियोगिताकाभावस्य बोधयितुमशक्यत्वादिति वाच्यम् । त्वतलादिभावप्रत्ययसमभिव्याहृतनञा प्रकृत्यर्थवृत्तित्वविशिष्टधर्मावच्छिन्नप्रतियोगिताकाभावो बोध्यत इति व्युत्पत्त्या तथाव्यवहारोपपत्तेः । नीलोत्पलत्वं राजपुरुषत्वमित्यादिस्थलेऽपि धर्मत्वेन रूपेण प्रकृत्यर्थतावच्छेदकधर्ममुत्पलत्वपुरुषत्वादिकमेव भावप्रत्ययो बोधयति नीलाभिन्नोत्पलवृत्तिधर्मः राजसंबन्ध्यभिन्नपुरुषवृत्तिधर्म इत्यादिरेव प्रकृतिप्रत्ययाभ्यामन्वयबोधः । नचैवं रक्तोत्पलादावपि नीलोत्पलत्वादिव्यवहारापत्तिः प्रकृत्यर्थतावच्छेदकधर्मस्योत्पलत्वादेस्तत्रापि सत्त्वादिति वाच्यम् । कर्मधारयषष्ठीतत्पुरुषाद्युत्तरभावप्रत्ययादेः प्रकृत्यर्थवृत्तित्वविशिष्टधर्मावच्छिन्ननिरूपितसंबन्धिताबोधकतया तथा व्यवहारविरहात् । **वस्तुतस्तु** । कर्मधारयसमासोत्तरभावप्रत्ययस्याधेयतासंबन्धेन पूर्वपदार्थविशिष्टोत्तरपदार्थतावच्छेदके निरूढलक्षणा । एवंच नीलोत्पलत्वमित्यादौ नीलाभिन्नोत्पलवृत्तिनीलविशिष्टमुत्पलत्वमित्यादिरेव प्रकृतिप्रत्ययाभ्यामन्वयबोधः । एवं पक्तृत्वं भोक्तृत्वमित्यादौ कृत्प्रत्ययोत्तरभावप्रत्ययस्यापि विषयित्वादिसंबन्धेन पूर्वपदार्थविशिष्टे उत्तरपदार्थतावच्छेदके निरूढलक्षणा पाककर्तृवृत्तिपाकविशिष्टा कृतिरित्यादिरेव प्रकृतिप्रत्ययाभ्यामन्वयबोधः । तथा घटवत्त्वमौपगवत्वमित्यादौ तद्धितोत्तरभावप्रत्ययस्यापि निरूपितत्वादिसंबन्धेन पूर्वपदार्थविशिष्टोत्तरपदार्थतावच्छेदके निरूढा लक्षणा घटसंबन्धिवृत्तिघटविशिष्टसंबन्धः । उपगवपत्यवृत्ति उपगुविशिष्टमपत्यत्वमित्यादिरेव प्रकृतिप्रत्ययाभ्यामन्वयबोधः । तेन कृत्तद्धितसमासेभ्यः संबन्धावगमस्त्वतलभ्यामन्यत्रेति पाणिनीयसूत्रस्य न विरोधः । अन्यत्रापरपदार्थतावच्छेदके संबन्धावगमात्पूर्वपदार्थस्य संबन्धावगम इति तदर्थादित्याहुः । **तदसत्** । अनुभवापलापात् भावत्वेन भावस्य शक्यत्वे धर्मत्वादिना बोधो यथायथं समभिव्याहारालभ्यः । यद्यप्याधेयत्वरूपधर्मशक्यत्वे तथा वक्तुं युक्तं

---

१ गुणवचनब्राह्मणादिभ्यः कर्मणि चेति. पा. सूत्रेण. २ सूत्रस्येति तद्व्याख्यानस्योपलक्षणम् । सूत्रपाठेऽनुपलम्भात् ।

धिकरण्याभाववत्तया, व्याप्यत्वासिद्धस्य विशिष्टव्याप्त्यभाववत्तया, असाधारणानुपसंहारिणोर्व्याप्तिसंशयाधायकत्वेन व्याप्तिज्ञानप्रतिबन्धकत्वम् ॥ आश्रयासिद्धस्वरूपासिद्ध्योः पक्षधर्मताज्ञानप्रतिबन्धकत्वम् ॥ उपाधिस्तु व्यभिचारज्ञानद्वारा

## नीलकण्ठी.

नेनान्वयः। एवमग्रेपि। हेतौ साध्याभाववद्वृत्तित्वस्येव साध्यतावच्छेदके हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वस्यापि व्यभिचारतया तद्ग्रहस्य हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावरूपो योऽव्यभिचारः तद्ग्रहप्रतिबन्धकत्वमिति भावः। हेतौ साध्याभाववद्वृत्तित्वप्रकारकग्रहस्य व्याप्तिग्रहप्रतिबन्धकत्वं तु न मणिमन्त्रादिन्यायेन। **विशिष्टव्याप्त्यभाववत्तया** हेतुव्यापकतावच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्याभावरूपतया। **व्याप्तिसंशयाधायकत्वेनेति**। हेतौ असाधारण्यादिज्ञानदशायां हेतुसाध्ययोः सामानाधिकरण्यनिश्चयासंभवेन पक्षान्तर्भावेन च साध्यसंशयत्वेन व्याप्तिसंशयसंभवान्न व्याप्तिनिश्चय इति प्राचीनमतमभिप्रेत्येदम्। **पक्षधर्मताज्ञानप्रतिबन्धकत्वमिति**। पक्षे पक्षतावच्छेदकविरहस्य हेतुविरहस्य च निश्चयदशायां हेतौ पक्षतावच्छेदकविशिष्टपक्षवृत्तित्वग्रहासंभवादिति भावः। ननु पक्षत्वोक्तिरसंगता हेतौ उपाधिग्रहदशायामपि व्याप्तिनिश्चयासंभवेन उपाधिज्ञानस्य व्याप्तिनिश्चयप्रतिबन्धकताया अवश्यं वक्तव्यतया उपाधेरपि हेत्वाभासलक्षणाक्रान्तत्वादत आह— **उपाधिस्त्विति। व्यभिचारज्ञानद्वारेति**। तथा च हेत्वाभासलक्षणे

## भास्करोदयाख्यव्याख्या.

तथापि भावपदस्य धर्मे लक्षणाङ्गीकारापत्तेस्तस्य भावस्त्वतलाविति प्रणयितुः पाणिनेः स्वारसिकप्रयोक्तृत्वभङ्गापत्तेः। एवंच घटत्वं पटत्वमित्यादौ त्वाद्यर्थे भावे प्रकृत्यर्थस्याधेयत्वसंबन्धेनान्वये घटवृत्तित्वविशिष्टं घटत्वमित्याद्येव बोधः। स्वोत्तरवृत्तिप्रत्ययजन्योपस्थितत्वावच्छेदकार्थं एव स्ववृत्तित्वसंबन्धताभ्युपगमेन न द्रव्यत्वादिकमादाय पटे न घटत्वमित्याद्यनुपपत्तिलेशावसर इति विद्वांसो विशेषेण विचारयन्तु। पर्वतो वह्निमान्प्रमेयत्वादित्यत्र प्रमेयत्वनिष्ठसाध्याभाववद्वृत्तित्वरूपसाधारण्यस्य प्रतिबन्धकतावच्छेदकं रूपमाह—**अव्यभिचारेत्यादिना**। अव्यभिचारवत्तयेत्यर्थः। **तद्ग्रहस्य** साध्याभाववदवृत्तित्वाभावज्ञानस्य। **एवमग्रेऽपीति**। शब्दो नित्यः कृतकत्वादित्यत्र कृतकत्वरूपसाध्यव्यापकीभूताभावप्रतियोगिकत्वरूपविरुद्धस्य व्याप्तिज्ञानप्रतिबन्धकत्वमपीत्यर्थः। तदाह दीपिकायां **विरुद्धस्य सामानाधिकरण्याभाववत्तयेति**। व्याप्तिपदेन सिद्धान्तव्याप्तेः पूर्वपक्षव्याप्तेश्च बोधादुभयप्रतिबन्धकत्वं संभवतीति। तदुपपादयति—**हेताविल्यादिना**। हेतौ साध्याभाववद्वृत्तित्वप्रकारकं यज्ज्ञानं तस्य हेतौ साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानं प्रत्येव प्रतिबन्धकत्वं तदभाववत्ताज्ञानमुद्रयेति कथं हेतुमन्निष्ठेति व्याप्तिज्ञानप्रतिबन्धकतेति मनसिकृत्योत्तरयति—**मणिमन्त्रादिन्यायेनेति**। एतेन हेतौ साध्याभाववद्वृत्तित्वप्रकारकग्रहे साध्यतावच्छेदकस्य

व्याप्तिज्ञानप्रतिबन्धकः ॥ सिद्धसाधनं तु पक्षताविघटकतया आश्रयासिद्धे अन्तर्भवतीति प्राञ्चः ॥ निग्रहस्थानान्तरमिति नवीनाः ॥

इति तर्कदीपिकायामनुमानं समाप्तम् ॥ * ॥

## नीलकण्ठी.

साक्षादनुमितितत्करणान्यतरप्रतिबन्धकत्वस्यैव निवेशनीयतया परमुखनिरीक्षकस्योपाधेर्न हेत्वाभासत्वमिति भावः । ननु तथापि सिद्धिसत्त्वेऽनुमित्यनुदयात् तद्विषयस्य साध्यवत्पक्षस्यापि हेत्वाभासत्वमावश्यकमित्याशङ्कां जरन्नैयायिकमतमवलम्ब्येष्टापत्त्या परिहरति—**सिद्धसाधनं त्विति । पक्षताविघटकतयेति ।** तन्मते पक्षतायाः साध्यसंशयरूपतया तद्विघटकत्वं साध्यनिश्चयस्याक्षतमिति भावः । **अन्तर्भवतीति** । तथा च न विभागव्याघात इति भावः । दर्शितमतमतिशिथिलमित्यालोच्याह—**निग्रहेति** । नच सिद्धान्तेऽनुमितिं प्रति सिद्धेः प्रतिबन्धकतया तद्विषयस्य कथं हेत्वाभासता नेति वाच्यम् । सिषाधयिषायाः सिद्धिप्रतिबन्धकतायाम् उत्तेजकतया केवलं सिषाधयिषासहितसिद्धौ प्रतिबन्धकत्वाभावेन तद्विषये हेत्वाभासलक्षणासंसर्गादिति । अधिकमस्मदीयाभिनवदीधितिव्याख्यायां तर्ककर्कशविचारचातुरीधुरीणैरनुसंधेयम् ॥ इत्यनुमानपरिच्छेदः ॥ * ॥

## भास्करोदयाख्यव्याख्या.

हेतुमन्निष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वसिद्ध्या एतद्रूपेणापि प्रतिबन्धकताङ्गीकार्या मणित्वेन मन्त्रत्वेन वेति भावः । दीपिकायां **व्याप्यत्वासिद्धस्येति ।** धूमवान्वह्नेरित्यादौ वह्न्यादेः वह्निमान्नीलधूमादित्यादौ नीलधूमत्वस्य गुरुतया प्रतियोगितानवच्छेदकत्वेन नीलधूमादेश्च व्याप्यत्वासिद्धस्येत्यर्थः । दीपिकायाम**साधारणानुपसंहारिणोरिति** । शब्दोनित्यः शब्दत्वादित्यत्र शब्दत्वरूपसाध्यासमानाधिकरणस्य, सर्वमनित्यं , प्रमेयत्वादित्यत्रात्यन्ताभावाप्रतियोगिसाध्यकत्वरूपानुपसंहारिणश्चेत्यर्थः । **परमुखनिरीक्षकस्येति** । व्यभिचारज्ञानमुखनिरीक्षकस्येत्यर्थः । **सिद्धिसत्त्वेऽनुमित्यनुदयादिति** । साध्यनिश्चयेन साध्यसन्देहरूपपक्षताया अभावादिति भावः । **निग्रहस्थानान्तरमितीति** । प्रतिवादिपराजयस्थानविशेष इत्यर्थः । वादिप्रयुक्तहेतौ हेत्वाभासरूपदोषोद्भावने निगृहीतो यथा वादी एवं सिद्धसाधनदोषोद्भावनेऽपीत्याशयः । जरन्नैयायिकमतानुसारेणैवोपक्रमोपसंहारयोर्बोधनेऽपि सिद्धान्तमते हेत्वाभासत्वमाशङ्कते—**नचेति** । **केवलमिति** । मुख्यमित्यर्थः । प्रतिबन्धकत्वाभावेनेत्यनेनान्वयि । सिषाधयिषासहितसिद्धिदशायां सिद्धेः सिषाधयिषासहितत्वात्सिषाधयिषाविरहविशिष्टत्वाभावेन सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षतायाः सत्त्वेन नानुमितिविरोधित्वेन हेत्वाभासत्वप्रसक्तिर्नव्यमत इति हृदयम् । अत्राधिकलेखने प्रेक्षावतां प्रकरणाध्ययने प्रथमं प्रवृत्त्यभावप्रसंगादुपेक्षितमस्माभिर्नाशक्तिप्रयुक्तमित्याह—**अधिकमित्यादि** । अधिकं पुष्कलम् । **अस्मदीयाभिनवदीधितिव्याख्यायाम् ।** पदवाक्यप्रमाणपारावारीणपण्डितेन्द्रनीलकण्ठविरचिताभिनवदीधितिव्याख्यायाम् ।

## अथ उपमानम् ।

**उपमितिकरणमुपमानम् ॥ संज्ञासंज्ञिसंबन्धज्ञानमुपमितिः । तत्करणं सादृश्यज्ञानम् । तथाहि कश्चिद्गवयशब्दवाच्यमजानन्कुतश्चिदारण्यकपुरुषाद् 'गोसदृशो गवयः' इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति ॥**

### नीलकण्ठी.

**उपमानं लक्षयतीति** । अवसरसंगत्योपमानं निरूपयतीत्यर्थः । उपमितिरूपं व्युत्पादयति मूले—**संज्ञेति** । **संज्ञा** गवयपदम् **संज्ञी** गवयः । तयोः संबन्धः शक्तिः तज्ज्ञानमित्यर्थः । लक्षणं तु उपमिनोमीत्यनुव्यवसायगम्योपमितित्वमेवेति ध्येयम् । **वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यतीति** । एतेन स्मरणं सादृश्यदर्शनजन्यं उद्बोधकान्तरजन्यं वा । उभयमपि सादृश्यदर्शनस्य सहकारि, न तु सादृश्यदर्शनजन्यमेव स्मरणं सहकारीति सूचितम् । प्राञ्चस्तु 'वाक्यार्थं स्मरन्' इत्यत्र वर्तमानसामीप्ये प्रत्ययः । वाक्यार्थं स्मरिष्यन्नित्यर्थः । एवं च वाक्यार्थस्मरणस्य सादृश्यदर्शनजन्यतालाभेन व्यापारतालाभ इत्याहुः ।

### भास्करोदयाख्यव्याख्या.

तर्के यः कर्कशो विचारः दुरूहकठिनविचारः तत्र या चातुरी चातुर्यं तत्र ये धुरीणास्तैरनुसंधेयं नेतरैरित्यर्थः । **इति श्रीतर्कसंग्रहदीपिकाप्रकाशव्याख्यायां भास्करोदयाख्यायां भगवदर्पितायामनुमानपरिच्छेदः ॥ * ॥**

**उपमानं लक्षयतीति** । एतदर्थमाह—**अवसरेत्यादिना** । अत्र यद्वक्तव्यं तत्प्रागेवाभ्यधायि । **तयोः संबन्धः संगतिरिति** । शक्तिग्राहकं च व्याकरणादीति बोध्यम् । **तज्ज्ञानमिति** । गवयो गवयपदवाच्य इत्येव सामान्यज्ञानं न त्वयं गवयो गवयपदवाच्य इति, गवयान्तरे शक्तिग्रहाभावप्रसङ्गात् । ननु सादृश्यज्ञानस्यासाधारणकारणत्वात्तज्जन्यत्वलक्षणस्यौचित्येपि उपमिनोमीत्यनुव्यवसायसिद्धोपमितित्वरूपत्वे लाघवमालोच्यं तदाह—**लक्षणं त्वित्यादि** । **एतेनेति** । वाक्यार्थस्मरणपूर्वकं पिण्डदर्शनस्य तद्धेतुत्वाङ्गीकारेणेत्यर्थः । **उभयमपीति** । उक्तोभयविधस्मरणमपीत्यर्थः । **सादृश्यदर्शनस्येति** । करणीभूतसादृश्यज्ञानस्येत्यर्थः । **सहकारीति** । चक्रचीवरादिवदुपकरणमित्यर्थः । **सादृश्यजन्यमेव स्मरणं सहकारीति** । एवेनोद्बोधकान्तरजन्यस्मरणव्यवच्छेदः । **सहकारीति** । नत्वित्यध्याहृत्य सहकारिकारणं नेत्यर्थः । एतन्मते व्यापाराभावेन व्यापारवदसाधारणकारणस्यैव करणत्वात् सादृश्यज्ञानस्य तदसंभवतात्पर्येण व्यापारत्वमङ्गीकुर्वतां स्मरणस्यार्वाचीनानामभिप्रायं वर्णयति—**प्रांचस्त्विति** । **वर्तमानसामीप्ये प्रत्यय इति** । वर्तमानसामीप्ये वर्तमानवद्वेत्यनुशासनेन भविष्यति लटि शतृप्रत्यय इत्यर्थः । **एवंचेति** । वाक्यार्थस्मरणस्य गोसदृशपिण्डदर्शनोत्तरकालिकत्वस्य बोधिते चेत्यर्थः । **व्यापारता-**

**तदनन्तरम् 'अयं गवयशब्दवाच्यः' इत्युपमितिरुत्पद्यते ॥ इत्युपमानम् ॥**

उपमानं लक्षयति ॥ उपमितीति[1] ॥ इत्युपमानम् ॥ * ॥

## नीलकण्ठी.

**तदनन्तरम्** इत्यादि । सादृश्यदर्शनानन्तरम् । गवयो गवयपदवाच्य इत्याकारिका गवयत्वरूपलघुधर्मधर्मितावच्छेदकिकोपमितिरुत्पद्यते इत्यर्थः । इदमुपलक्षणम् । वैधर्म्यदर्शनेनाप्युपमितिरिति ध्येयम् । वैशेषिकास्तु पदवाच्यत्वव्याप्यसादृश्यादिपरामर्शात् पदवाच्यत्वस्य अनुमितिरेव । अतो नोपमानं प्रमाणान्तरमित्याहुः । तच्चिन्त्यम् । व्याप्तिज्ञानमन्तरेणापि पदवाच्यत्वप्रमितेरनुभवसिद्धत्वादित्यन्यत्र विस्तरः ॥ * ॥ इत्युपमानपरिच्छेदः ॥ * ॥

## भास्करोदयाख्यव्याख्या.

**लाभ इति** । सादृश्यदर्शनानन्तरं गवये गोनिरूपितसदृशत्वज्ञानोत्तरं गवयो गवयपदवाच्य इत्याकारिका गवये गवयपदशक्तिबोधविषयत्वरूपा । इदमुपमित्यन्वयि । **गवयत्वरूपेति** । गवय इत्यर्थः । सः लघुधर्मः धर्मितावच्छेदको यस्या इति बहुव्रीहौ कः । तस्माल्लघुधर्मधर्मितावच्छेदकिकोपमितिरिति समुदितार्थः । **इदमुपलक्षणमिति** । उपमितेः सादृश्यजन्यस्वमित्यर्थः । **वैधर्म्यदर्शनेनापीति** । विरुद्धो धर्मो यस्य स विधर्मा तस्य भावो वैधर्म्यम् । विरुद्धधर्म इति यावत् । यत्किंचिद्दर्शनेनापीत्यर्थः । **वैशेषिकास्त्विति** । काणादा इत्यर्थः । **पदवाच्यत्वव्याप्येत्यादि** । गवयप्रसिद्धं गोसादृश्यं तत्र गवयपदवाच्यत्वम् । एवं चैत्रो मैत्रसदृश इत्यत्र मैत्रसादृश्यवति चैत्रे चैत्रपदवाच्यत्वसत्त्वात्सादृश्यस्यैतद्व्याप्यत्वात्तत्पदवाच्यत्वव्याप्यसादृश्यवान् गवय इति परामर्शात्तत्पदवाच्यत्वविधेयकानुमितिरेवेत्यर्थः । तत्सिद्धमर्थमाह—**अत इत्यादि** । **व्याप्तिज्ञानमन्तरापीति** । व्याप्तिज्ञानविरहकालेऽपीत्यर्थः । **पदवाच्यत्वप्रमितेः** । पदवाच्यत्वप्रकारकप्रमात्मकज्ञानस्य । **अनुभवसिद्धत्वादिति** । यथार्थानुभवसिद्धत्वादुपमानं प्रमाणान्तरमवश्यमेष्टव्यमित्यर्थः । सादृश्यं प्राभाकरमतेऽतिरिक्तः पदार्थः । षड्भावानन्तर्भूतत्वे सत्यभावानन्तर्भूतत्वादित्यनेन । यद्यन्तर्भवेत्तदा यथा गोत्वं तथाश्वत्वमिति नित्यत्वेन तद्गतसादृश्यानुपपत्तिं मन्यते । नैयायिकाश्च न क्षमन्ते तस्य तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वरूपत्वाद्यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे । स च प्रकृते आह्लादः सुखविशेषस्वरूपः । एतेनातिरिक्ताऽकल्पनेन लाघवमित्यन्यत्र स्पष्टम् । स च प्रतियोगिनि सर्वसाधारण्येन जन्यतयाऽनुयोगिनि तु रसिकस्यैव । **यथा** । 'झटिति प्रविश गेहे मा बहिस्तिष्ठ कान्ते ग्रहणसमयवेला वर्तते शीतरश्मेः । तव मुखमकलङ्कं वीक्ष्य नूनं स राहुर्ग्रसति तव मुखेन्दुं पूर्णचन्द्रं

१ क्वचित् वाक्यार्थज्ञाने पदार्थज्ञानस्य हेतुत्वेन उपमितिं लक्षयति—संज्ञासंज्ञीति ॥ करणमाह—तदिति ॥ उपमानं रूपकत्वेन विविच्य दर्शयति—तथाहीति, इत्यधिकः पाठ उपलभ्यते ।

## अथ शब्दः ।

**आप्तवाक्यं शब्दः ॥ आप्तस्तु यथार्थवक्ता । वाक्यं पद-समूहः ॥ यथा गामानय शुक्लां दण्डेनेति ॥**

शब्दं लक्षयति—आप्तेति ॥ वाक्यं लक्षयति—वाक्यमिति ॥

**शक्तं पदम् ॥ अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसंकेतः शक्तिः ॥**

### नीलकण्ठी.

**शब्दं लक्षयतीति** । उपजीव्योपजीवकभावसंगत्या शब्दं निरूपयतीत्यर्थः ।

### भास्करोदयाख्यव्याख्या.

विहाय' इति । 'मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितं स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ । स्रवन्मूत्रक्लिन्नं करिवरकरस्पर्धि जघनं अहो निन्द्यं रूपं कविजनविशेषैर्गुरु कृतम्' इत्यनुभवानुसारेण विशिष्यत इत्यलम् । इति तर्कसंग्रहदीपिकाप्रकाशव्याख्यायां भास्करोदयाख्यायां भगवदर्पितायामुपमानपरिच्छेदः ॥ * ॥

शब्दं लक्षयतीति संगतिपूर्वकं लक्षयितुं लक्षणया व्याचष्टे—**उपजीव्येत्यादिना** । शब्दविषयकलक्षणस्वरूपप्रामाण्यप्रकारकज्ञानानुकूलशब्दप्रयोगानुकूलकृतिमान्ग्रन्थकार इत्येवं प्रथमान्तमुख्यविशेष्यको बोधः । **नन्वाक्षिप्तस्याप्राधान्यानुभवाल्लोके, शास्त्रे च क्रियाप्रधानमाख्यातमिति महाभाष्यकारवचनविरोधात्ते विभक्त्यन्ताः पदमिति गौतमसूत्रे क्रियाप्रधानमाख्यातं यथा पचतीति न्यायवार्तिककारवचनविरोधात् क्रियाप्राधान्यस्यैव प्रमाणतयाभिमतप्रथमान्तमुख्यविशेष्यकबोधोद्घोषः सद्बुद्धिं नाध्यारोढुमीष्टे । तथाहि**—ते विभक्त्यन्ताः पदमिति गौतमसूत्रं न्यायवार्तिककार इत्थं व्याख्यत् । द्वयी विभक्तिः स्वादयस्तिवादयश्च । तत्र स्वाद्यन्तं नाम तिवाद्यन्तमाख्यातम् । अभिधेयस्य क्रियान्तरयोगाद्विशिष्यमाणरूपशब्दो नाम, यथा ब्राह्मण इति ॥ क्रियाकारकसमुदायः कारकसंख्याविशिष्टः । क्रियाकालयोगाभिधायि क्रियाप्रधानमाख्यातम् । यथा पचतीति ॥ इदमित्थं वाचस्पतिमिश्रा व्याख्यन् । क्रियान्तरं क्रियाविशेषः तत्संबन्धाद्विशिष्यमाणरूपः पर्यवसितार्थकशब्दो नाम यस्याभिधेयं नियमेन क्रियाविशेषमाकाङ्क्षति तन्नामेति फलितम् । यत्रापि क्रियापदं नास्ति तत्राप्यस्तीत्यस्त्येव । उदाहरणं ब्राह्मण इति । राज्ञः पुरुष इत्यादेरपि पुरुषादिद्वारा तदाकाङ्क्षत्वं बोध्यम् । यद्वा तदभिधेयस्य राजेत्यादौ तदाकाङ्क्षत्वं बोध्यम् । अथ नामार्थमाह—क्रियेत्यादि । क्रियाशब्देन जात्यादिप्रवृत्तिनिमित्तं, कारकं तदाश्रयः । स च कारकगतसंख्यायुक्तो नामार्थः । यद्वा कारकं कर्मादिशक्तिः । संख्याग्रहणं लिङ्गस्याप्युपलक्षणम् । अयम-

१ आदिना गुणक्रिये । २ तत् प्रवृत्तिनिमित्तम् । ३ स च तदाश्रयश्च ।

भास्करोदयाख्यव्याख्या.

व्ययातिरिक्तनामार्थं इति बोध्यम्। एवं च सर्वत्र नामपदेनाव्ययातिरिक्तमेव। एवंच नामार्थादिव्युत्पत्तिषु अव्ययातिरिक्तत्वविशेषणदानमिति प्रवाद एव। आख्यातलक्षणमाह—क्रियाकालेति। क्रियायाः यः कालयोगः पौर्वापर्यक्रमः कालयोगेन तस्यानुभवात् तेन घटादीनां व्यवच्छेदः। नन्विदं भुक्त्वेत्यादावतिव्याप्तमतः क्रियाकालेति। क्त्वान्तादौ हि क्रियाविशेषमन्तरेण पर्यवस्यन्ती क्रिया गम्यते पचतीत्यादौ न सर्वत्र तथा। क्वचित्तत्संबद्धापि यथा पचति भवतीति, एवं च यद्वाच्या क्रिया क्वचित्क्रियान्तरानाकाङ्क्षा तदाख्यातमिति फलितम्। एतत्पक्षे कर्तव्यमित्यस्य नामलक्षणाक्रान्तत्वाभावात् क्रियान्तरानाकाङ्क्षत्वाच्च आख्यातत्वमेवापतति। एवं पचतिरूपमित्यादेरपि। अत्र क्रियाप्रधानमिति निरुक्तसमानाकारशब्देन निरुक्तभाष्योक्तरीत्या प्रत्ययार्थकालकारकसंख्यापेक्षया धात्वर्थप्रधानत्वं सूचितम्। पञ्चमे न्यायभाष्येपि क्रियाकालयोगाभिधाय्याख्यातं धात्वर्थमात्रं च कालाभिधानविशिष्टमिति कालेनाभिधानेन कारकेण च विशिष्टं धात्वर्थमात्रमाख्यातार्थ इति तदर्थः। तस्यैव व्याख्यानं क्रियाप्रधानमिति वार्तिककृता कृतं तत्रैव सूत्रे प्रकरणान्तरे वार्तिककार आह—विशेषणविशेष्यभावस्यैकविधत्वाद्यदि गोशब्दस्य तिष्ठतिशब्दस्य चैक्यमभिधेयं भवति ततो विशेषणविशेष्यभावापन्नयोर्गोशब्दतिष्ठतिशब्दयोः सामानाधिकरण्यं युज्यते नान्यथेति। अनेन स्पष्टमेव कारकस्य प्रत्ययार्थतोक्ता विशेषणता चोक्ता। एवंच कृतिर्वाच्या प्रथमान्तार्थमुख्यविशेष्यको बोध इति चार्वाचां शुष्कलाघवादितर्कैकशरणानां कुकल्पनाविलसितमिति स्पष्टमेवेति चेन्न। भाष्यवार्तिकतात्पर्यानवधारणात्। तथाहि क्रियते निष्पाद्यते यया सा क्रिया कृतिस्तस्याः कालयोगः वर्तमानादिकालसंबन्धः। तथाच जनकतासंबन्धेन धात्वर्थप्रकारककृतिविशेष्यकबोधजनकमाख्यातमिति आख्यातार्थावधारणा। एवं भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानीति यास्कवचने भावशब्देन भावयतीति व्युत्पत्त्या जनकतासंबन्धेन धात्वर्थोत्पादनात्कृतिरेवैवं च चैत्रः पचतीत्यादौ चैत्रकर्तृकवर्तमानकालिका पाकानुकूला कृतिस्तदनुकूला वर्तमानकालिका भावनेति वा बोधः। एतेन क्रियाप्रधानमाख्यातमिति महाभाष्यं व्याख्यातम्। ननु भ्वादिसूत्रे क्रियाशब्देन धात्वर्थप्रत्यययोऽनुपपन्नोऽनया व्युत्पत्त्येति चेन्न तेनापि फलोत्पादात्फलकरणकत्वाभावादेवं तर्हि पुनरप्यन्यतरविशेष्यकबोधप्रसक्त्या विनिगमकं दुर्वचमिति दुर्वचम्। स्वानुभवानुरोधेन कृतेरेव विवक्षणीयतयाऽदोषात्। न्यायवार्तिककाराणां तु कृतिमात्र एव तात्पर्यावधारणात्। अत्रार्थे कृञ्धातोर्बाहुलकत्वात्क्रन्ः शचेति भावविहितस्य अकर्तरि च कारके संज्ञायामित्यधिकृत्य श्रणीभुवोऽनुपसर्गे इति विहितस्य च करणकर्त्रोर्विधानसाधुत्वमिच्छन्ति केचित्। परे तु करणं क्रिया कृञः शचेति भावे शः। प्रधानशब्दः प्रधानत्वविशिष्टार्थः। क्रियायाः प्रधान इति तत्पुरुषः षष्ठ्या निरूपित-

१ क्रियान्तरान्वयिनी।

## भास्करोदयाख्यव्याख्या.

त्वमर्थः । तस्य च प्रधानत्वान्वयाक्रियानिरूपितप्रधानत्वाश्रय इत्यर्थः । स यत्रास्ती-त्यर्थेऽर्शआद्यजन्तः अन्यपदार्थः आख्यातं तेन क्रियानिरूपितप्रधानत्वाश्रयोऽर्थात्कृतिरूपार्थाधिकरणं वाचकतयाख्यातमिति बोधोऽतो न प्रयोगक्लिष्टकल्पना । नापि नामलक्षणे क्रियाशब्देन धात्वर्थासंगतिः । भाव्यते उत्पाद्यते अनेनेति भावः कृतिः सा प्रधानं यस्य तदाख्यातमिति यास्कार्थः । नचैवमपि प्रथमान्तार्थमुख्यविशेष्यकबोधोऽसिद्ध इति वाच्यम् । प्रधानकृत्याक्षिप्तस्यापि प्रधानत्वमित्याशयात् । एवं च. पश्य मृगो धावति इत्यादौ धावनकर्तृमृगकर्मकविधिविषयदर्शनसंबोध्यस्त्वमिति बोधः । मृगस्य दृशिक्रियायां कर्मत्वे द्वितीयापत्तिस्तु वाक्यार्थभूतकर्मतासंबन्धेनान्वयाद्वारणीया । एतेन द्वितीयायां शतरि धावन्तमित्याद्यापादनमनुपादेयम् । केवलमृगपदार्थस्य कर्मत्वेन दृशिक्रियान्वयतात्पर्ये मृगं पश्येति तु भवत्येव । धावनक्रियाविशिष्टमृगकर्मकदर्शनविधेयत्वे विशेषणीभूते धावने तत्त्वं नानुपपन्नम् । मृगकर्तृकोत्कटधावनकर्मकदर्शनस्यैव विधेयत्वतात्पर्यात् । एतेन सुन्दरस्तण्डुलं पचतीत्यादौ तण्डुलरूपनामार्थस्य कर्मतासंबन्धेन पचिक्रियायामन्वये नामार्थधात्वर्थयोः साक्षाद्भेदसंबन्धेनान्वयान्नामार्थेत्यादिव्युत्पत्तिविरोधापत्तिशङ्का निरस्ता वाक्यार्थस्य धात्वर्थे भेदेनान्वयास्वीकारे क्षतिविरहात् । ननु धावनानुकूलकृत्याश्रयमृगरूपार्थस्य नामार्थत्वाद्व्युत्पत्तिविरोधः प्रकृतेऽपि सम इति चेन्न । नामार्थपदेन केवलनामार्थतात्पर्यादेवमप्यन्तरङ्गत्वात्प्रथमैव युक्तेति चेत्प्रधानकार्य-[१]स्यान्तरङ्गादपि बलवत्त्वस्य भाष्यसंमतत्वेनादोषात् । नीलविशिष्टघटस्य दर्शनकर्मत्वे द्वितीयासंपादनं तु क्रियान्तरकर्तृत्वावरुद्धार्थस्य कर्मत्व एव कर्मतासंबन्धस्य वाक्यार्थत्वाभ्युपगमेन 'श्रुत्वा ममैतन्माहात्म्यं तथाचोत्पत्तयः शुभाः' इत्यत्र तद्वारणाय सन्तीत्यध्याहार्यम् । 'पश्य लक्ष्मण पम्पायां बकः परमधार्मिक' इत्यत्रेव । एवंच नीलघटो जानामीत्यनुपपत्तिं 'श्रुत्वा ममैतन्माहात्म्य'मित्यादेरार्षत्वं चाश्रित्य मृगस्य दृशिक्रियायां कर्मत्वे द्वितीयापत्तिवारणाय वाक्यार्थस्य कर्मत्वाभ्युपगमोऽनुचित इति वदन्तो वैयाकरणकेसरिणः प्रष्टव्याः । एवं च क्रियान्तरकर्तृत्वावरुद्धप्रथमान्तार्थस्य क्रियान्तरे कर्मतासंबन्धेनान्वये उपस्थितेरङ्गीकारान्न कुत्रापि दोषलेशः । अत्राप्यस्तीत्यध्याहारे च नीलघटो जानामीतीष्यत एवेत्येवं सुधियो विदांकुर्वन्तु । पचतिभवतीत्यतः वर्तमानपाकानुकूला कृतिर्भवतीति बोधादेकवाक्यत्वाक्षतिरित्यविकलमखिलम् । क्रियामुख्यविशेष्यकबोधे चैत्रः पचतीत्यादावाश्रयस्याधेयतासंबन्धेनैव क्रियायामन्वयौचित्येन चैत्रो न पचतीत्यादौ नञः समभिव्याहारे आधेयतासंबन्धेन पाकक्रियाकर्त्रभावबोधात्प्रतियोग्यभावान्वया[३]विति न्यायाद्वृत्त्यनियामकाधेयतासंबन्धेनाभावप्रत्यायनासंभवात्प्रथमान्तार्थमुख्यविशेष्यकबोध एव मुख्य इति । किंच । प्रयातिते गुरुस्त्वं तच्चरणावभिवाद-

१ तथाच मृगमात्रस्य कर्मत्वाभावात्तद्बोधकमृगपदान्न द्वितीया । २ प्रधानकार्यं सर्वतो बलवदिति न्यायस्वरूपम् । ३ प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ इति न्यायस्वरूपम् ।

## भास्करोदयाख्यव्याख्या.

येत्यादौ तच्छब्देन गुरोरप्रधानस्य परामर्शासंगतिः सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात् । किंच । त्रयः काला इत्यादौ ईश्वरेण ज्ञायन्त इति योग्यक्रियाध्याहारेणास्तिर्भवन्तीपरः प्रथमपुरुष इति कात्यायनवाक्यमुपलक्षणविधया योग्यक्रियान्वयतात्पर्यग्राहकमिति ते सर्वैरनुसर्तव्या इति तच्छब्देन कालत्रयस्य परामर्शः । क्रियाप्राधान्ये तु न स्यात् । ननु कर्मप्रत्ययसमभिव्याहारे फलाश्रयमुख्यविशेष्यकबोधस्य वैयाकरणसंमतत्वेन वादिनोरेकविषयतया न दोषावसर इति चेन्न नव्यशाब्दिकसिद्धान्ते आश्रयप्रकारकफलमुख्यविशेष्यकबोधस्यैव तत्राभ्युपगमात् । तस्यापि धात्वर्थत्वेन क्रियात्वव्यपदेशः । वस्तुतस्तु नैयायिकमतेपि न सर्वत्र प्रथमान्तार्थमुख्यविशेष्यक एव बोधः किंतु यथायथं तत्तद्विशेष्यकः । इत्थं च चैत्रः पचतीत्यादौ प्रथमान्तार्थमुख्यविशेष्यकबोधेऽपि पश्य मृगो धावति इत्यादौ मृगकर्तृकधावनस्य विषयतया दर्शनान्वयेन क्रियाविशेष्यकबोधाङ्गीकारेऽपि बाधकाभावः विशेषणविशेष्यभावस्य तात्पर्यग्रहमात्रार्थतया क्वचिद्धात्वर्थविशेष्यकबोधाङ्गीकारे क्षतिविरहात् । अत एव पचतिभवतीत्यादौ पाकानुकूला कृतिर्भवतीत्यादिभावनाविशेष्यकबोधाङ्गीकारे बाधकाभावात् । अन्धः आकाशं न पश्यतीत्यतः आकाशविषयकदर्शनाभाववानन्ध इति प्रथमान्तार्थमुख्यविशेष्यकबोधाप्रसिद्ध्या विशेष्यभूते दर्शन एवान्धवृत्तित्व—आकाशविषयकत्वोभयाभावप्रकारकत्वाङ्गीकार आवश्यक इति ध्येयं धीमद्भिरित्यलम् । यच्च तत्रैव सूत्रे प्रकरणान्तरे वार्तिककार आह—विशेषणविशेष्यभावस्यैकविधत्वाद्यदि गोशब्दस्य तिष्ठतिशब्दस्य चैक्यमभिधेयं भवति ततो विशेषणविशेष्यभावापन्नयोर्गोशब्दतिष्ठतिशब्दयोः सामानाधिकरण्यं युज्यते नान्यथेत्यनेन स्पष्टमेव कारकस्य प्रत्ययार्थतोक्तेति कथं कृतेः प्रत्ययार्थत्वमित्युक्तं तदपि न युक्तं वार्तिकतात्पर्यानवधारणात् । तथाहि भूतलं घटवद्भूतले घट इत्यत्र यथा न तथात्र विशेषणविशेष्यभावव्यत्यासाभावतात्पर्यकमिदमत्र गौस्तिष्ठति तिष्ठति गौरत्रेतीति बोधनाय वार्तिककार आह—विशेषणविशेष्यभावस्यैकविधत्वादिति । विशेषणविशेष्यभावस्यैकरूपत्वादित्यर्थः । यदेव तिष्ठति शब्दोपस्थाप्यगतिप्रतिबन्धानुकूलकृतिरूपं गवि विशेषणताश्रयं यदेव च गोशब्दोपस्थाप्यगोरूपं विशेष्यताश्रयं तत्तदेवोक्तस्थलवन्न विपरीतमिति निर्गलितार्थः । एकविधत्वमेव स्पष्टयति—यदीत्यादिना । यदीत्यस्य भवतीत्यनेनान्वयः । गोशब्दस्याभिधेयं निरुक्ततिङन्तसमभिव्याहृतप्रथमान्तगोशब्दजन्यबोधीयविशेष्यताश्रयीभूतं तिष्ठतिशब्दस्य चाभिधेयं प्रथमान्तगोशब्दसमभिव्याहृततिष्ठतीति तिङन्तजन्याबोधनिरूपिततिङन्तार्थनिष्ठप्रकारतानिरूपितविशेष्यताश्रयीभूतं चैकं भवतीत्यर्थः । ततः तदेत्यर्थः । स्वोपस्थाप्यार्थद्वारा विशेष्यविशेषणभावापन्नयोर्गोशब्दतिष्ठतिशब्दयोः सामानाधिकरण्यमेकव्यक्तिवृत्तित्वं प्रथमान्तगोशब्दसमभिव्याहृततिष्ठतिजन्यबोधीयस्वार्थनिष्ठप्रकारतानिरूपितविशेष्यता-

---

१ अस्तिः असधातुः । भवन्तीति लटः प्राचां संज्ञा । भुवो झिच् । कृदिकारादिति ङीष् ॥

## भास्करोदयाख्यव्याख्या.

संबन्धेनाधिकरणं यत् गोवस्तु तदेव तिङन्तसमभिव्याहृतस्वजन्यबोधीयतिङन्तार्थ-प्रकारतानिरूपितविशेष्यतासंबन्धेन गोशब्दाधिकरणं भवतीति निरुक्तसंबन्धेन एकव्यक्तिवृत्तित्वं तयोर्बोध्यम्। नान्यथा। न प्रकारान्तरेण तयोरेकवृत्तित्वरूपसामानाधिकरण्यं न युज्यत इत्यर्थः। तस्मात्सुकल्पनाविलसितमेवान्यथा स्वतन्त्रप्रमाणाग्रगण्यसूत्रवार्तिकविरुद्धत्वे तन्मूलकत्वेन प्रथमान्तमुख्यविशेष्यकबोधं लाघवादाख्यातस्य कृत्यर्थत्वं च वर्णयन्तः सर्वे दीधितिकारादयः प्रमाणप्रसिद्धिं कथमुद्वहेयुरिति कुशाग्रधियां कुकल्पनाविलसिताभिधानं सुकल्पनया विलासयन्तु। अथाख्यातस्य कर्तरि शक्तिः लः कर्मणीति सूत्रे कर्तरि कृदिति सूत्रादनुकृष्य-माणस्य कर्तृरूपार्थस्य परिच्छेदकतया कर्तृपदस्य नेतरार्थकत्वमनुशासनविरोधादिति वैयाकरणमतं तन्न। कर्तरीति पदस्य लक्षणया कर्तृत्वबोधकतया कृत्यर्थपरिच्छेदकत्वात्। न च लक्षणायां गौरवं कृतीनामनन्तानां शक्यतावच्छेदकत्वमपेक्ष्यैकस्य कृतित्वस्य शक्यतावच्छेदकत्वे लाघवात्। अनन्यलभ्यार्थन्यायेनात्रैव शक्तेरुचितत्वाच्च। नच चैत्रः पचतीत्यत्रानभिहितकर्तरि तृतीयापत्तिः कर्तृगतैकत्वादिसंख्यानभिधाने तृतीयेत्यनुशासनार्थत्वात्। अतएव चैत्रेण पच्यते तण्डुल इत्यत्र तण्डुलपदोत्तरं न द्वितीया। तदनभिधायकत्वं च तद्विशेष्यकसंख्याप्रकारकशाब्द-बोधानुकूलत्वम्। न तद्गतसंख्यानिष्ठवृत्त्यनिरूपकत्वम्। चैत्रेण पच्यते तण्डुल इत्यत्रैकत्वत्वावच्छिन्ने एकत्वमात्रे एकवचनवृत्त्यावेकत्वस्याख्यातनिरूपितत्वाच्चैत्रप-दोत्तरं तृतीयानापत्तेरिति वदन्ति। **वस्तुतस्तु**। प्रथमया परया बाधान्न तृतीयाप्रसङ्गः। नचैवं सति पचन्तं देवदत्तं पश्य पचते देवदत्ताय देहीत्यादौ शतृशानचादीनामपि लादेशत्वाविशेषेण कृतिमात्रबोधापत्तौ नामार्थयोरिति व्युत्पत्तौ संकोचनीयत्वापात इति वाच्यम्। व्युत्पत्त्यनुरोधेन कर्तृपदं कृत्सु स्वार्थपरं तिङ्क्षु कृतिपरमिति वैषम्याङ्गीकारेणोपपत्तेः। अभिधानस्य प्रायेण तिङ्कृत्तद्धितसमासैरङ्गीकारात् कृदादीनां च संख्याऽवाचकतया कर्तृकर्मगतसं-ख्यानभिधायकत्वेन तृतीयानियामकत्वस्य दुर्वचतया कृदादिसमभिव्याहारे तृती-यानापत्तिरित्यादि वदन्तोऽपि समाहिताः। कर्त्रनभिधायकत्वस्यैवात्राभ्युपेयत्वात्। सति तात्पर्ये एकस्यैव नानार्थे शक्तौ वैलक्षण्यस्याबाधकत्वात्। **यत्तु** तिवादीनां कर्तृवाचकत्वे पचतिरूपं पचतिकल्पं देवदत्त इत्यादौ रूपप्कल्पबन्तनामार्थस्य देवदत्तेन सममभेदान्वयापत्तिरित्याहुः। अत्रेत्थमगत्याकृत्याक्षिप्तकर्त्रभेदेनादोष **इति**। रूपप्कल्पपौ तु कृतिप्राशस्त्यन्यूनतामादायैव साधू। कर्तृपदस्य कर्तृत्वपर-तया कर्तरि विशेषणतया भासमानव्यापारमात्रबोधकत्वेन तात्पर्यमर्यादया चेतने कृतेरचेतने व्यापारस्य बोधाद्रथो गच्छतीत्यादौ नानुपपत्तिलेशावकाशः। **यच्चोक्तं** व्यापारार्थत्वे व्यापारस्य धातुलभ्यत्वेनानन्यलभ्यो हि शब्दार्थ इति न्यायविरोध इति। **तदपि** धातोः फलमात्रे शक्तिमभ्युपेत्य व्यापारमात्रे आख्यातस्य शक्तिं चाभ्युपेत्य। तयोश्च जन्यजनकभावादिसंसर्गेणान्वयात्प्रत्ययोपनीतवर्तमान-

## नीलकण्ठी.

अत्र ज्ञायमानशब्दस्य शब्दप्रमाणतया शब्दे उपमानोपजीवकत्वाभावात् उपमितिशाब्दबोधरूपफलयोः संगतिर्बोध्या । तथाहि,—शक्तिपरिच्छित्तिरेवोपमितिः ।

## भास्करोदयाख्यव्याख्या.

त्वादिविशिष्टव्यापारे प्रकृत्यर्थफलस्यानुकूलतासंबन्धेनान्वये कर्तृप्रत्ययसमभिव्याहारे तण्डुलं पचतीत्यादौ तण्डुलवृत्तिफलविशेषजनकवर्तमानकालिकव्यापारवांश्चैत्र इति, चैत्रेण पच्यते तण्डुल इत्यादौ तु चैत्रनिष्ठव्यापारजन्यफलविशेषशाली तण्डुल इत्यर्थः । फलव्यापारयोर्विशेषणविशेष्यभेदादेव कर्तृकर्मप्रत्ययव्यवहारा इति प्रोचुर्भट्टाचार्याः । आख्यातदीधितौ तेनैव दत्तोत्तरत्वात् । ननु फलस्य धातुलभ्यत्वाद्वितीयाया न कर्मत्वमर्थं इति चेत्फलान्वयिवृत्तित्वस्यैव तदर्थत्वादेवं व्यापारान्वयिवृत्तित्वस्यैव तृतीयार्थत्वादित्यनवद्यम् । **यत्त्वाहुरिह जरन्नैयायिकाः** । आख्यातस्य यत्नो वाच्यः, पचति पाकं करोतीति करोतिना सर्वाख्यातविवरणात् व्यवहारादिव बाधकं विना विवरणादपि व्युत्पत्तेः । किं करोतीति यत्नप्रश्ने पचतीत्युक्ते तस्य यत्नार्थकत्वं विनाऽनुपपत्तेश्चेति । जानातीत्यादावाश्रयत्वे नश्यतीत्यादौ च प्रतियोगित्वे निरूढलक्षणेति **नव्याः** । अधिकमन्यत्रानुसंधेयम् । अत्र शाब्दप्रमितिकरणं शब्दः । शाब्दत्वं च शब्दात्प्रत्येमीत्याद्यनुभवसिद्धो जातिविशेषः । प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणं बाधितार्थज्ञानजन्यशब्दाद्ययथार्थशाब्दबोधानुत्पत्तेः । अनुकरणशुकादिवाक्याच्च यथायथं यथार्थायथार्थशाब्दबोधोदयसंभवात् अत्रार्वाचीनमते ज्ञायमानशब्दस्य करणत्वं न तु शब्दज्ञानस्य करणत्वं यस्य शाब्दबोधस्तस्यार्थस्मारकतया शब्दस्य हेतुत्वमित्यभिमानेन मौने पुस्तकदर्शनमात्रेण श्लोकादौ शब्दाभावेऽपि शाब्दोदयानुपपत्तिनिरासं मध्यमात्मकशब्द एव शाब्दकरणमिति मन्यमानमतानुसारेण पूर्वोत्तरयोरुपजीव्योपजीवकभावः साक्षादसंभवीत्याक्षिप्य परम्परया तत्साधयिष्यन् एतदनुपपत्त्यैव फलयोस्तदिति परोक्तं व्यवस्थापयन्नाह—**अत्रेत्यादि** । अत्र शब्दनिरूपणे इत्यर्थः । **ज्ञायमानशब्दस्य शब्दप्रमाणतयेति** । ज्ञानविषयीभूतशब्दस्य शाब्दप्रमितिकरणशब्दस्वरूपतयेत्यर्थः । **शब्दे उपमानोपजीवकत्वाभावादिति** । गोसदृशो गवय इति सादृश्यज्ञानोपजीव्यतानिरूपितोपजीवकत्वं शक्तिपरिच्छित्तिरूपोपमितौ प्रसिद्धं न शब्द इति भावः । **उपमितिशाब्दबोधरूपफलयोः संगतिर्बोध्येति** । उपमानजन्योपमितिशब्दजन्यशाब्दबोधरूपफलयोः संगतिर्बोध्येत्यर्थः । ननु शब्दं लक्षयतीति ग्रन्थेनोपमानशब्दयोः संगतिरुक्ता कथं संगच्छतामिति चेच्छब्दपदे लक्षणया शाब्दबोधो विवक्षणीय इत्यभिप्रायात् । **तथाहीति** । उक्तफलयोः संगतिमेवोपपादयतीत्यर्थः । **शक्तिपरिच्छित्तिरेवोपमितिरिति**

---

१ अथवा सूक्ष्मशब्दोच्चारणाच्छाब्दोऽत एवोच्चारितः शब्दः प्रत्यायको नानुच्चारित इति भाष्यादित्याहुः ॥ वाक् चतुर्विधा, परा पश्यन्ती मध्यमा वैखरी च, तत्र परा वाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता। हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा॥ इति ॥

## नीलकण्ठी.

तस्याश्च शाब्दबोधोपजीव्यत्वेन फलयोरुपजीव्योपजीवकत्वसंभवः। तादृशसंगतेश्च फलनिष्ठत्वेऽपि स्वाश्रयकरणत्वात्मकपरम्परासंबन्धेन करणनिष्ठत्वात् करणयोरनन्तराभिधानप्रयोजकत्वम्। शब्दज्ञानस्य प्रमाणत्वाङ्गीकर्तृनवीनमते तूपमितेः शक्तपदविषयकत्वेन शब्दप्रमाणतया तत्र च उपमानजन्यत्वस्याक्षततया स्वरूपयोरपि संगतिरिति मन्तव्यम्। मूले **आप्तवाक्यं शब्द** इति। शब्द इति लक्ष्यनिर्देशः प्रमाणशब्द इति तदर्थः। आप्तवाक्यमिति लक्षणम्। भवति हि पयसा सिञ्चतीत्यादिशब्दः आप्तोक्तवाक्यम्। नतु वह्निना सिञ्चतीत्यादिशब्दः तदुच्चारणकर्तुः यथार्थवक्तृत्वरूपाप्तत्वाभावात्। प्रकृतवाक्यार्थगोचरयथार्थज्ञानजन्यवाक्यं प्रमाणशब्द इति तु निष्कर्षः। वाक्यप्रयोगे वाक्यार्थज्ञानस्य हेतुत्वाल्लक्षणसंगतिः। स्फुटमेतत्। शब्दमणौ।

## भास्करोदयाख्यव्याख्या.

शक्तिनिर्णय एवेत्यर्थः। **तस्याश्चेत्यादि**। तस्या उक्तोपमितेः। शाब्दबोधोपजीव्यत्वेन शब्दशक्तिनिर्णयोत्तरमेव शब्दादर्थोपस्थितेरनुभवादिति भावः। अन्यदुक्तार्थकम्। उक्तरीत्या फलनिष्ठत्वसंभवेऽपि शब्दं लक्षयति ग्रन्थस्वारस्यभङ्गापत्तिमालोच्याह—**स्वाश्रयेत्यादि**। स्वं उपजीव्योपजीवकत्वं तदाश्रयोक्तफले तत्करणत्वमुपमानशब्दगतं तद्रूपपरम्परासंबन्धेन करणयोरुपमानशब्दयोरनन्तराभिधानप्रयोजकत्वं संगतिरिति समुदितार्थः। मौनिश्लोकादौ वैखरीरूपशब्दाभावेऽपि शब्दज्ञानादेव शाब्दबोधोऽनुभवसिद्ध इत्यभिप्रेत्याह—**शब्दज्ञानस्येत्यादि**। गवये शक्तं यद्गवयपदं तद्विषयकत्वेनोपमितेः **शब्दप्रमाणतया**। शाब्दप्रमितिकरणस्वरूपतयेत्यर्थः। **उपमानजन्यत्वस्य** सादृश्यज्ञानजन्यत्वस्य **अक्षततया** अबाधिततया **स्वरूपयोरपि** शब्दज्ञानोपमानकरणयोरपि संगतिरिति **मन्तव्यम्**। स्वीकर्तव्यमिति समुदितार्थः। उपकाराय मूलमूलं विवृणोति—**मूलेत्यादिना**। अप्रमाणशब्दस्य आप्तोक्तित्वस्याभावो यतः आप्तस्य यथार्थवक्तृत्वादत आह—**प्रमाणशब्द इति तदर्थ इति**। **आप्तवाक्यमिति लक्षणमिति**। अत्र भावप्रधानो निर्देशः। तादृशवाक्यमुदाहरति—**भवतीत्यादि**। तद्व्यतिरेकिणमुदाहरति—**नत्वित्यादिना**। तत्र हेतुमाह—**तदित्यादिना**। प्रमाणशब्दनिष्कृष्टार्थं दर्शयति—**प्रकृतेत्यादिना**। एतेन शुकादिप्रयुक्ताबाधितार्थकवाक्यस्यानुक्रियमाणद्वारा प्रमाणशब्दत्वं ध्वनितम्। प्रमाणशब्दात्मकवाक्ये वाक्यार्थज्ञानजन्यत्वविशेषणं प्रयोगहेतुतया सार्थकमित्याह—**वाक्येत्यादिना**। **स्फुटमेतच्छब्दमणाविति**। तत्र हि 'प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यशब्दः प्रमाणमिति' प्रयोगहेतुभूतं प्रयोगकारणीभूतं यदर्थतत्त्वज्ञानं यदर्थविषयकं तत्त्वज्ञानं तज्जन्यः प्रमाणं शब्द इत्यन्वयः। प्रमाणं शब्द इति लक्ष्यनिर्देशो बोध्यः। प्रथमतो येनकेनापि प्रमाणेन वक्तुर्वाक्यार्थज्ञानं ततः परस्य वाक्यार्थज्ञानं भवत्विति वाक्यार्थज्ञानेच्छा ततो वाक्यार्थज्ञानरूपेष्टसाधनताज्ञाना-

## भास्करोदयाख्यव्याख्या.

त्कृतिसाध्यताज्ञानसहकृतात्कण्ठाभिघातादादौ चिकीर्षा ततः कण्ठाभिघातादिसाध्यककण्ठाद्युपादानकप्रवृत्तिः । ततः कण्ठादिचेष्टाविभागादिक्रमेण कण्ठाभिघाताद्युत्पत्तिः । ततो वाक्योत्पत्तिरिति प्रणाल्या प्राचां नये परम्परया वक्तृवाक्यार्थबुबोधयिषापूर्वकवाक्यत्वावच्छिन्नं प्रति वक्तृवाक्यार्थज्ञानस्य हेतुतया सर्वत्र लक्षणं संगमनीयम् । पदप्रयोजनं यथायथमूहनीयम् । ननु केवलप्रमाणशब्दस्य लक्ष्यत्वादत्र वाक्यात्मकस्य तत्त्वोक्तिर्विरुद्धेति चेन्न उक्तप्रणाल्या वाक्यात्मकस्यैव तत्त्वेन मणिकृदभिप्रायात् । सर्वत्र वाक्यादेवार्थबोधजननाद्वारमित्यादौ यथायथं पिधेहि उद्घाटयेति वा क्रियामध्याहृत्यैव तद्वाक्यार्थबोधस्य वक्तृतात्पर्यानुमानात्सर्वानुभवसिद्धत्वात् । अत एव तत्र वाक्यस्फोटो मुख्यो वाक्यादेवार्थप्रत्ययादिति स्पष्टं व्याकरणनिबन्धेषु । तत्रहि वाक्यादेवार्थबोधस्य सुर्वानुभवसिद्धत्वेन वाक्यस्यैव वर्णव्यतिरिक्तस्य वाचकत्वं व्यवस्थापयन्त्यभिज्ञा इति । तथाहि—वर्णानां प्रत्येकं वाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसंगात्समुदायस्य वाचकत्वमुपेयं तत्तु न युक्तम् । वर्णानामुत्पत्तिपक्षे यौगपद्येनानुत्पत्त्या अभिव्यक्तिपक्षे तु अनुविनाशिक्रमिकाभिव्यक्त्या समुदायाभावात्समुदायत्वमेकबुद्धिविषयत्वम् । नच पक्षद्वयेपि पूर्ववर्णानुभवसंस्कारसहकृतान्त्यवर्णानुभवहेतुकैकस्मृत्युपारूढवर्णानां वाचकत्वमस्त्विति वाच्यम् । तथाच सति सरो रस इत्यादावर्थप्रतीत्यविशेषप्रसङ्गात् । नच संस्कारवशादव्यवहितोत्तरत्वसंबन्धेन पूर्ववर्णवत्त्वं तदुत्तरवर्णे प्रत्यक्षेण गृह्यते । एवमुपस्थितविशिष्टतद्वर्णवत्त्वं तदुत्तरवर्णे । तथाच सरो रस इत्यादौ विशेषोपपत्तिरिति वाच्यम् । तथापि वर्णसमूहरूपपदस्य कदाप्यसत्त्वेन तत्र शक्तेः कल्पयितुमशक्यत्वात् । नच पूर्वपूर्ववर्णजाः शब्दाः शब्दजशब्दन्यायेन चरमवर्णप्रत्यक्षपर्यन्तं जायमाना एव सन्तीति न काप्यनुपपत्तिरिति वाच्यम् । तथापि गामानयेत्येकं वाक्यमित्यबाधितैकप्रतीतेः सर्वसंमताया विना वाक्यस्फोटमनिर्वाहात् । न खल्वियमभिन्नवस्तुविषया बुद्धिः परस्परव्यतिरिक्तनानावर्णानेव गोचरयितुमर्हति । नच वनमिति बुद्धेर्वृक्षा इव वाक्यमिति बुद्धेर्वर्णा एव विषया भवन्तीति वाच्यम् । तत्रैकदेशस्थैवात्रैकबुद्धिविषयत्वादेरनुसन्धानाभावात् । तस्मादेकोऽनवयवो वाक्यस्फोटः शब्दब्रह्मापरनामधेयोऽङ्गीकार्यः । स्फुटत्यर्थोऽस्मादिति स्फोटः । सच वर्णवानिव ध्वनिप्रकाश्यः । यथा पटे नानारञ्जकद्रव्याहितनानावर्णोपरागः क्रमेण तथैकस्मिन्नेव स्फोटे उच्चारणक्रमेण क्रमवानिव तत्तद्वर्णस्य रूपानुरागः । स तु विवर्ताधिष्ठाने शब्दब्रह्मणि वियदादिरिवाविद्याकल्पितो व्यावहारिकनित्यत्ववानिति न दोषः । नच स्फोटस्यैकत्वेन कथमस्मादविलक्षणाद्विलक्षणतत्तदर्थबोध इति शङ्क्यम् । यतो मणिकृपाणदर्पणादौ मुखमभिन्नमपि भिन्नमिव नियतगौरत्वादिवर्णपरिमाणविशेषमप्यनेकविधवर्णपरिमाणमिव यथा प्रतीयते तथा प्रयत्नभेदभिन्नेषु ध्वनिषु स्फोट एकोऽप्यनेकवर्णात्मेव निरवयवोऽपि सावयव इव प्रतीयते । तथाचौपाधिकभेदः स्फोटस्येति विलक्षणबोधोपपत्तिः । तत्र प्रतिवाक्यं संकेतग्रहा-

## भास्करोदयाख्यव्याख्या.

संभवाल्लघूपायेन तदन्वाख्यानाय कल्पनया पदानि विभज्य तेषु प्रकृतिप्रत्ययभागान्कल्पयित्वा कल्पितान्वयव्यतिरेकाभ्यां तत्तदर्थविभागं शास्त्र एव परिकल्पयन्तिस्माचार्याः। एवं तत्तदवयवतत्तदर्थबोधनेन समुदायस्य तत्तदर्थस्य च बोधने तात्पर्यमृषीणामिति स्थितम्। परन्तु कृतकस्यानित्यत्वनियमादस्यापि शब्दप्रयोगोभयोत्पन्नयत्नाभिहताग्निना नाभिप्रदेशात्प्रेरितो वायुर्वेगान्मूर्धपर्यन्तं गत्वा प्रतिनिवृत्तो वक्त्रं प्राप्योक्तयत्नसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य वर्णानभिव्यनक्तीत्युक्तत्वात्परम्परया कृतकत्वमादायानित्यत्वं कथं न प्रलपेयुरस्य चैकत्वे सर्वप्रतीतिविरोधात्। नचाविद्ययात्मानेकत्व इवास्यानेकत्वभ्रम इति वाच्यम्। एकत्वे बोधवैलक्षण्यानुपपत्त्यौपाधिकमेदस्य तैरङ्गीकारात्। वास्तविक एवेति वयं ब्रूमः। स एवायं शब्द इत्यमेदप्रत्ययोत्पत्तिस्तु भेदमूलकसादृश्यग्राहकतयोपपद्यते। नच शब्दानामनित्यत्वे कथमुद्घुष्टाः शब्दाः स्मर्येरन्निति वाच्यम्। अनित्यघटस्येव बाधाभावात्। ननु नित्यत्वे प्रतिवाक्यं प्रयत्नानपेक्षणात्सदावर्तेरन्प्रकाशेरंश्च सदा व्यञ्जकाभावादिति चेन्न। अनित्यत्वेऽपि व्यञ्जकेन तज्ज्ञानस्याप्रतिहतत्वात्। सिद्धान्तनयेऽपि ब्रह्मातिरिक्तस्य सर्वस्यानित्यत्वाङ्गीकारात्। नच ब्रह्मात्मत्वमङ्गीकर्तॄणामनित्यत्वापादनं दृष्टान्तप्रायमिति वाच्यम्। आरोपमात्रत्वेन श्रद्धाजाड्यस्य भवत्कुलप्रसिद्धत्वेऽपि सर्वैरङ्गीकारे मानाभावात्। अपिच भवन्नय एव "एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुक् भवती"ति महाभाष्ये पतञ्जल्युक्तेः स्फोटात्मकब्रह्मज्ञानस्य स्वर्गलोकयोः कामधुक्त्वं दर्शितं न निरतिशयस्वरूपानन्दावाप्तिरूपं फलम्। तथाच ब्रह्मत्वं मनःकल्पितमेव। किंचैकशब्दसम्यग्ज्ञानाद्यस्य कस्यचित्तत्फलधुक्त्वमापद्यते। एकोऽखण्डः सर्ववाक्यात्मा स्फोट इति ज्ञानादेव तदिति चेत्तदैकज्ञानमात्रेण तदेकोच्चारणमात्रेण वा तत्त्वप्रसङ्गात्। सर्वस्फोटात्मब्रह्मज्ञानं तदुच्चारणं च योगिनामेव नास्मदादीनामिति व्याकरणाध्ययने सर्वेषां प्रवृत्तिर्न स्यात्। किं च ब्रह्मणो विवर्ताधिष्ठानत्वात्स्वर्गलोकयोर्विवृत्तत्वेन विवृत्तफलभोक्तृकामनायाः सिद्धान्तशास्त्रविरुद्धत्वात्। तस्मादारोपितब्रह्मत्वं शालिग्रामशिलाविष्णुन्यायेन साधनावस्थापन्नं सांकेतिकं बोध्यमस्माकं तु कार्यमात्रमनित्यं तेन वेदस्य पौरुषेयत्वेनानित्यत्वसिद्धिः। प्रामाण्यमीश्वरोक्तत्वादेव। तल्लक्षणं तु शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वं शब्दातिरिक्तं शब्दोपजीविप्रमाणातिरिक्तं च यत्प्रमाणं तज्जन्यप्रमितिविषयार्थको यस्तदजन्यत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यो यः प्रमाणशब्दस्तत्त्वमित्यर्थः। वेदजन्यप्रमितिविषयार्थस्य शब्दप्रमाणजन्यत्वं तथा शब्दोपजीव्यनुमानप्रमाणजन्यत्वं न तु तदतिरिक्तप्रत्यक्षप्रमाणजन्यत्वं वेदविषयार्थस्य चक्षुरविषयत्वात्। एवं यत्किंचिच्छब्दजन्यवाक्यार्थज्ञानजन्यप्रमितिविषयोऽर्थो न वेदस्येति लक्षणसमन्वयः। व्यासादिचाक्षुषजन्ये भारतादौ दृष्टार्थकायुर्वेदादौ चातिव्याप्तिवारणाय सत्यन्तम्। उत्तरखण्डं

पदलक्षणमाह—शक्तमिति ॥ अर्थस्मृत्यनुकूलपदार्थसंवन्धः शक्तिः । सा च पदार्थान्तरमिति मीमांसकाः, तन्निरासार्थमाह–अस्मादिति ॥ डित्थादीनामिव घटादीनामपि संकेत एव शक्तिः न तु पदार्थान्तरमित्यर्थः ॥

## नीलकण्ठी.

मीमांसकमतनिरासकत्वेनाग्रिममूलमवतारयितुं तन्मतसाधारण्येन शक्तिपदार्थमाह—**अर्थस्मृत्यनुकूलेति** । शाब्दवोधजनकार्थस्मृत्यनुकूलो घटादिपदघटादिरूपार्थयोः संवन्धः शक्तिरित्यर्थः । **अनुकूलत्वम्** इह प्रयोजकत्वम् । तच्च कारणतावच्छेदके पदपदार्थसंवन्धेऽप्यक्षतम् । घटादिपदतदर्थयोरन्यसंवन्धवारणाय अनुकूलान्तं विवक्षितार्थकम् । अन्यसंवन्धज्ञानस्यार्थस्मृतिजनकत्वेऽपि शाब्दवोधजनकस्मृतिजनकत्वाभावात् । अर्थस्मृत्यनुकूलत्वस्यादृष्टादिसाधारण्यात् विशेष्यमिति बोध्यम् । **पदार्थान्तरमिति** । तत्तत्पदार्थतावच्छेदकाभावकूट-

## भास्करोदयाख्यव्याख्या.

शब्दजन्यवाक्यार्थज्ञानजन्यप्रमितिविषयार्थकशब्दे परार्थानुमितौ च तन्निरासायेति ध्येयम् । अधिकं मणिग्रन्थे द्रष्टव्यमित्यलम् । नन्वेवमपि प्रयोगविषयस्य द्वारमित्यादेर्न वाक्यत्वमिति चेन्न । सर्वत्र न पदसमूहो वाक्यम्, अर्थाध्याहारेण क्रियान्वितपदस्यैव प्रयोगविषयत्वात्क्रियान्वितार्थकं तदिति तदभिप्रायान्न तद्विलक्षणमिति ध्येयम् । ननु किं परमतसिद्धशक्तिपदार्थनिरूपणेनेहेत्याशङ्कां मनसिकृत्य तदभिप्रायं वर्णयंस्तदवतारयति—**मीमांसकेत्यादिना** । स्पष्टप्रतिपत्तये तदर्थमाह—**शाब्देत्यादिना** । पदपदार्थयोः संवन्धज्ञानादेकसंवन्धिन्यायेनार्थस्मरणद्वारा शाब्दवोध एव तत्फलमित्याशयेनाह—**शाब्दवोधजनकेति** । शाब्दवोधजनिका या अर्थस्मृतिस्तदनुकूलो यो घटादिपदघटादिरूपार्थयोः संवन्धः शाब्दवोधनियामकः सम्यक् वध्नातीति व्युत्पत्त्या विना शब्दं शाब्दस्याप्रयोजकतया शाब्दप्रयोजकरूपः शक्तिपदार्थ इत्यर्थः । अनुकूलत्वस्यान्यत्र जनकत्वपर्यायतया प्रकृते शब्दादर्थस्मृत्युपकारकत्वे तदसंभवमुद्धर्तुमाह—**अनुकूलत्वमित्यादि** । **घटादिपदतदर्थयोरित्यादि** । घटादिपदं घटाद्यानुपूर्वीकं शक्तं घटादिरूपोऽर्थः घटपदवोधविषयत्वधर्मावच्छिन्नः कम्बुग्रीवादिमान्योऽर्थः तयो**रन्यसंवन्धवारणाया**काशभूनिष्ठयोः कालादिसंवन्धवारणाया**नुकूलान्तं** शाब्दाद्यनुकूलान्तमित्यर्थः । एतत्संवन्धातिरिक्तसंवन्धस्य शाब्दवोधजनकपदार्थास्मारकत्वात् । **विवक्षितार्थकम्** । प्रयोजकत्वरूपमित्यर्थः ॥ घटादिशक्त्यन्तं विशेष्यदलं सार्थकयति—**अर्थेत्यादिना** । नन्वदृष्टस्य जन्मान्तरानुभूतार्थस्मारकत्वात्किं शाब्दवोधजनकार्थस्मृत्यनुकूलत्वे विचिकित्सेति चेन्न । असंवद्धशशश्रृङ्गादेरस्मारकत्वाच्छक्तिसंवन्धासंवन्धपदादेवादृष्टस्येह जन्मजन्मान्तरीयस्मारकत्वस्य शास्त्रसिद्धत्वात् । उपनिषद्वाक्यैः श्रुतपूर्वस्यैव ब्रह्मणो गर्भस्थवामदेव्यस्मृतेः । **पदार्थान्तरमितीति** । क्लृप्तपदार्थतावच्छेदकेतरपदार्थतावच्छेदकवत्त्ववदित्यकर्थकत्वे नैयायिकमतेऽतिरिक्तपदार्थत्वस्याप्रमितत्वेन तदर्थव्याघातादर्थान्तरं तन्मतसाधारण्येनोद्भावयति—**तत्तत्पदार्थेत्यादिना** । तत्तत्पदार्थतावच्छेदकाभावानां प्रत्येकं

## नीलकण्ठी.

वदित्यर्थः । तेन अतिरिक्तपदार्थत्वस्यान्यमताप्रसिद्धत्वेऽपि न व्याघातः । 'अस्मात्पदादयमि'त्यादि मूलस्य 'एतत्पदजन्यबोधविषयोऽयमर्थः' इत्याकारकेश्वरेच्छाशक्तिरित्यर्थः । न तु पदार्थान्तरमिति । नच ईश्वरीयज्ञानस्येच्छायाः कृतेर्वा

## भास्करोदयाख्यव्याख्या.

प्रसिद्धानां कुत्राप्यसत्त्वेन तत्कूटवत्त्वस्य प्रत्येकं प्रसिद्धेर्न व्याघातसंभावनेति भावः । उपकाराय मूलवाक्यं विवृणोति—अस्मादित्यादिना । अस्मादितीदमर्थस्य पदेऽभेदेनान्वयात्पञ्चम्या जन्यत्वार्थकत्वाच्च तव्यतः कर्मणि विहितस्य विषयत्वार्थकत्वादयमक्षरस्वारसिकः शक्तिपदार्थ इत्यर्थः । इदमुपलक्षणमिदं पदममुमर्थं बोधयत्विति पदविशेष्यकेश्वरेच्छारूपशक्तेरपीति बोध्यम् । कर्मकर्तृप्रत्ययसमभिव्याहारे पदेनोच्यतेऽर्थोऽर्थं वक्ति पदमित्यत्र पदनिष्ठप्रकारतानिरूपितजन्यत्वनिष्ठप्रकारतानिरूपितबोधनिष्ठप्रकारतानिरूपितबोधविषयत्वनिष्ठप्रकारतानिरूपितविषयताश्रयोऽर्थ इत्येवमुक्तस्थलेऽपि पञ्चम्यर्थजन्यतया बोधः । पदनिष्ठभगवदिच्छीयविषयतानिरूपकं शाब्दबोधविषयत्वप्रकारतान्तर्गतशाब्दबोधप्रकारतानिरूपकजन्यत्वप्रकारतानिरूपकनिरूपितत्वसंबन्धावच्छिन्नप्रकारताश्रयः पदमिति च बोध इति ध्येयम् । अस्मादित्यादीश्वरेच्छारूपसंकेतग्राह्या शक्तिः पदार्थान्तरं नोक्तसंकेतस्वरूपा मानाभावाद्वह्निनिष्ठदाहानुकूलशक्तिवदिति वदतां मीमांसकानां मतं गौरवान्निराकर्तुमाह—नतु पदार्थान्तरमिति । उक्तेश्वरसंकेतरूपक्लृप्तपदार्थातिरिक्तपदार्थत्वधर्मावच्छिन्नो न शक्तिपदार्थ इत्यर्थः । नच मीमांसकानां मन्त्रात्मिकैव देवता न तदतिरिक्त ईश्वरः तदनुष्ठानरूपकर्मविशेषादेवाखिलेष्टसिद्धिः कर्मणैवेति भगवद्वचनं चानुकूलं स्वर्गप्राप्तिरेव मोक्षो 'न स पुनरावर्तत' इति श्रुतिरप्येतत्परैवेति मतम् । तथाच तत्संकेताग्रहात्कथं तेषां शाब्दबोध इति चेत्संकेतत्वमात्रेणैव शक्तेः शाब्दबोधहेतुत्वाङ्गीकारादत एवापभ्रष्टादपि शाब्दबोधः अपभ्रष्टाच्छक्तिभ्रमाच्छाब्दबोध इति सिद्धान्तः । केचित्तु साधुशब्दस्मरणाच्छाब्दबोधमङ्गीकुर्वन्ति । आधुनिकसंकेतितचैत्रादिशब्दानामेकादशे द्वादशे वेत्यादिस्मृतिघटकनामपदस्य चैत्रादिपदपरत्वेन शक्तत्वाच्छाब्दबोधः । नच स्मृतिषु मन्वादीनामेवेच्छाविषयत्वान्नोक्तोक्तिसंभव इति वाच्यम् । स्मृतेः श्रुतिप्रतिपाद्यार्थप्रतिपादकत्वात्परम्परयेश्वरेच्छाविषयत्वानपायात् । मीमांसको विनिगमनाविरहमापादयन् दूषयति—न चेत्यादिना । नैयायिकमताभिप्रायेणाह—कृतेर्वेति । वेदरूपशब्दस्यापि कृतिविषयत्वेन कार्यत्वस्वीकारात् । इच्छारूपत्वे विनिगमकं निदर्श-

---

१ यथोक्तं हरिणा—ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः । तादात्म्यमुपगम्यैव शब्दार्थस्य प्रकाशकाः ॥ न शिष्टैरनुगम्यन्ते पर्याया इव साधवः । न यतः स्मृतिशास्त्रेण तस्मात्साक्षादवाचकाः ॥ अम्माऽम्मेति यदा बालः शिक्षमाणः प्रभाषते । अव्यक्तं तद्विदां तेन व्यक्ते भवति निर्णयः ॥ एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते । तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते ॥ इति । २ एकादशे द्वादशे वाह्नि पिता नाम कुर्यात् इति.

## नीलकण्ठी.

शक्तिरूपत्वमिति विनिगमनाविरहादतिरिक्तैव शक्तिरिति वाच्यम् । आधुनिकसंकेतस्येच्छारूपतया शक्तेरपि इच्छारूपत्वे संकेतज्ञानस्यानुगतकारणभावः संभवति नान्यथा इत्येवं विनिगमकसंभवेन इच्छाया एव शक्तित्वस्वीकारात् । नच भगवदिच्छायाः सकलविषयिण्याः शक्तित्वस्वीकारे घटपदबोद्धव्यत्वप्रकारकतदिच्छायाः पटेऽपि सत्त्वात् घटपदवाच्यत्वस्यातिप्रसङ्गः । एवं गङ्गापदजन्यबोधविषयत्वप्रकारकेच्छायाः तीरेऽपि सत्त्वेन शक्त्यैव तद्बोधसंभवे लक्षणोच्छेदापत्तिरिति वाच्यम् । यतः तत्तत्पदवाच्यत्वं तत्तत्पदजन्यबोधविषयत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतावत्त्वम् । तादृशप्रकारतानिरूपितविशेष्यतासंबन्धेन तदिच्छावत्त्वं वा । तथाच तादृशस्य घटपदवाच्यत्वस्य पटेऽसत्त्वान्नातिप्रसङ्गः । गङ्गादिपदजन्यत्वस्य बोधांशे, बोधविषयत्वस्य च तीरांशे, स्वातन्त्र्येण भानमीश्वरेच्छायामुपेयते । इत्थं च विशकलितभानस्थले निरूप्यनिरूपकभावापन्नविषयताया अभावेन गङ्गादिपदजन्यत्वप्रकारतानिरूपितबोधविषयितानिरूपितविषयत्वप्रकारतानिरूपितविशेष्यतासंबन्धेन इच्छावत्त्वस्य तीरेऽसत्त्वान्न क्षतिरिति संक्षेपः । विशिष्टे शक्ति व्यवस्था-

## भास्करोदयाख्यव्याख्या.

यति—**आधुनिकेत्यादिना** । **आधुनिकसंकेतस्य** । शास्त्रकारादिपारिभाषिकनदीवृद्ध्यादिपदसंकेत**स्येच्छारूपतया** न तु कृतिरूपतया शब्दानां नित्यत्वादिति भावः । **शक्तेरपि** तादृशसंकेतरूपशक्तेरपि **इच्छारूपत्वे** इच्छारूपत्वाङ्गीकारे **संकेतज्ञानस्य** संकेतत्वेन संकेतज्ञानस्या**नुगतकारणभावः** एकरूपत्वेन कारणत्वं संभवति । **अन्यथा** क्वचित्कृतिरूपत्वे ज्ञानरूपत्वे वाऽनुगतकारणभावः न संभवतीत्यन्वयः । **इत्येवं** एवं सति **विनिगमकसंभवेना**नुगतकारणत्वरूपप्रमाणसंभवेन **इच्छाया एव** । एवेन कृतेर्व्यावृत्तिः । **शक्तित्वस्वीकारात्** । शाब्दबोधानुकूलशक्तिरूपपदार्थाङ्गीकारादिति समुदितार्थः । तन्मात्रविषयिण्या भगवदिच्छायाः शक्तिरूपत्वे दोषमाशङ्कते—**नचेत्यादिना** । **घटपदबोद्धव्यत्वप्रकारकतदिच्छायाः** घटपदजन्यबोधविषयत्वप्रकारकेश्वरेच्छायाः । **पटेऽपि सत्त्वात्** । भगवदिच्छाया वस्तुमात्रविषयत्वादिति तात्पर्यम् । भगवतः सर्वकर्तृत्वे भगवदिच्छायाः सर्वविषयत्वेऽपि तत्तत्पदवाच्यत्वनियामिका तत्तदर्थविषयिणी तत्तत्पदोपाधिभेदनिबन्धना भिन्नैवेश्वरेच्छावगन्तव्येति तात्पर्येण समाधिमाह—**यत इत्यादिग्रन्थेन** । **ईश्वरेच्छीयविशेष्यतावत्त्वम्** । ईश्वरेच्छीयविशेष्यताश्रयत्वं तत्तदर्थगतं भिन्नमित्यर्थः । सामञ्जस्येन प्रकारान्तरमाह—**तादृशेत्यादिना** । तद्विवक्षया पूर्वोक्तदोषं विघटयति विस्पष्टम्—**तथाचेत्यादिना** । तथाचेत्यस्य तत इत्यर्थः । लक्षणोच्छेदापत्तिमुच्छेदयति—**गङ्गेत्यादिना** । **स्वातन्त्र्येण** निरूप्यनिरूपकभावेन । **तीरेऽसत्त्वात्** निरूप्यनिरूपकभावापन्नेश्वरेच्छीयविशेष्यतावत्त्वस्य वाऽसत्त्वात् । **संक्षेपः** विस्तरस्त्वस्मदीयाभिनवमणिप्रभायामधिकजिज्ञासुभिर्जिज्ञासितव्य इत्यर्थः ।

गवादिशब्दानां जातावेव शक्तिः । विशेषणतया जातेः प्रथममुपस्थितत्वात् ॥ व्यक्तिलाभस्त्वाक्षेपादिति केचित् ॥ तन्न ॥ गामानयेत्यादौ वृद्धव्यवहारेण सर्वै-श्रानयनादेर्व्यक्तावेव संभवेन जातिविशिष्टव्यक्तावेव शक्तिकल्पनात् ॥

## नीलकण्ठी.

परिहर्तुं मीमांसकमतमुपन्यस्य दूषयति—**गवादीति** । विशेषणीभूतजातिग्रहम-न्तरा विशिष्टग्रहासंभवेन विशिष्टे शक्तिकल्पनं न संभवति अतो जातिग्रहस्य प्रथममपेक्षितत्वे जातावेव शक्तिकल्पनमुचितं लाघवात् इत्याह—**विशेषणत-येति** । **प्रथममुपस्थितत्वादिति** । विशिष्टग्रहात् पूर्वमवगतत्वादित्यर्थः । कथं तर्हि व्यक्तिलाभ इत्यत आह—**व्यक्तीति** । **आक्षेपादिति** । अर्थापत्ति-प्रमाणादित्यर्थः । **व्यक्तावेव संभवेनेति** । अनुपपत्तिप्रतिसंधानशून्यतादशा-यामपि व्यक्तिभानस्य अनुभवसिद्धत्वेन चेत्यपि बोध्यम् । **विशिष्टव्यक्तावेव**

## भास्करोदयाख्यव्याख्या.

स्वमतव्यवस्थापनस्य परमतनिराकरणपूर्वकत्व एव सामर्थ्यावधारणमिति तस्योप-न्यासपूर्वक एव प्रेक्षावतां प्रवृत्तिबोधनाय प्रवृत्तं ग्रन्थमवतारयति—**विशिष्टे-त्यादिना** । विशिष्टे जात्याकृतिविशिष्टे । **दूषयति** जातिशक्तिवादिनां भाट्टानां कार्यान्वितशक्तिवादिनां प्राभाकराणां च दूषयतीत्यर्थः । **लाघवादिति** । व्यक्तिभेदेन शक्तिभेदकल्पनायामानन्त्यगौरवदोष इति भावः । **प्रथममुपस्थि-तत्वादितीति** । विशिष्टं नाम विशेषणविशेष्यसंबन्धावगाहिज्ञानसंबन्धि । तज्ज्ञाने विशेषणज्ञानस्य प्रथममपेक्षा मारहरो हर इत्यत्र मारग्रहमन्तरा मारहरत्व-विशिष्टहरज्ञानासंभवादिति भावः । ननु विशिष्टज्ञानस्य विशेषणविशेष्यतत्संबन्ध-त्रितयविषयकात्मकतयाऽविशेषेणैवोपस्थितेरपेक्षेति चेन्न । त्रितयविषयकत्वेऽपि विशेषणसंबन्धं विशेष्येऽवगाह्यैव विशिष्टमवगाहते न पुरो विशेष्यमात्रमत एव ज्ञातपूर्वकेऽपि विशेष्ये विशेषणोपस्थितेरेव विशिष्टबुद्धिजननम् । **आक्षेपादि-तीति** । येन विना यदनुपपन्नं तेन तदाक्षिप्यत इति न्यायादित्यर्थः । तन्न्यायार्थ-मेव तन्मतेऽर्थापत्तिप्रमाणान्तरत्वेन परिगृह्यतेऽत एवाह—**अर्थापत्तिप्रमाणा-दित्यर्थ इति** । आक्षेपादित्यस्यानुमानादित्यर्थेन गोत्वं गवाश्रितं जातित्वाद्घट-त्वादिवदित्यनुमानेनानुमान एवान्तर्भावान्न प्रमाणान्तरमिति नैयायिकाः । **व्यक्ता-वेव संभवेनेतीति** । एवेन जातिव्यवच्छेदः । गौर्नष्टा गौर्जाता गामानयेत्यादौ समभिव्याहृतान्वयस्य जातौ बाधात् परम्परासंबन्धेन तदन्वयोपगमेऽन्वयितावा-च्छेदकतया गोत्वत्वादिभानस्वीकारापत्तेः । नहि स्वरूपेण पदार्थस्य पदार्थान्तरा-न्वयितया भानमिष्टापत्तौ च शक्यतावच्छेदकं गोत्वत्वं वाच्यम् । तच्च गवेतरास-मवेतत्वे सति सकलगोसमवेतत्वरूपम् । तथाच गोव्यक्तीनां शक्यतावच्छेदका-नुप्रवेशात्तवैव गौरवम् । अस्माकं जातिप्रकारकबोधाङ्गीकर्तॄणां स्वरूपेण प्रकारत्वा-भ्युपगमे बाधविरह इत्यादिकं शक्तिवादादिभ्योऽधिकजिज्ञासुभिर्जिज्ञासितव्यम् । जा-तिशक्त्यङ्गीकारेऽनुपपत्त्यैव गौरस्तीत्यतो गोव्यक्तिबोधो युष्माकमस्माकं तु गोत्ववि-शिष्टगोव्यक्तिबोधोऽनुपपत्तिमन्तरेणैव सर्वानुभवसिद्धोऽनुभवः प्रमाणमित्याशयेन

शक्तिग्रहश्च वृद्धव्यवहारेण ॥ तथाहि—व्युत्पित्सुर्बालो'गामानय' इत्युत्तम-

## नीलकण्ठी.

**इति** । एवकारेण केवलजातिकल्पनव्यवच्छेदः । अत्रेदं बोध्यम्—जातितद्वैशिष्ट्य-तदाश्रयेषु त्रिषु शक्तिः कल्पनीया पदार्थद्वयसंबन्धस्य पदद्वयसमभिव्याहारलभ्य-त्वेनान्यस्याशक्यस्य शाब्दबोधे भानासंभवादिति । नव्यास्तु लक्ष्यतावच्छेदकत्वग्र-हमात्रेण लक्ष्यतावच्छेदकस्य यथा शाब्दबोधे भानम्, तथा शक्यतावच्छेदक-त्वग्रहमात्रेण शक्यतावच्छेदकस्य शाब्दबोधे भानं संभवति शक्यतावच्छेदके च शक्तिर्न कल्पनीयेति वदन्ति ।

**शक्तिग्रहश्च वृद्धव्यवहारेणेति** । शक्तिग्रहश्च वृद्धव्यवहारादिना भवती-त्यर्थः । आदिना व्याकरणादिपरिग्रहः । अत एव 'शक्तिग्रहं व्याकरणोपमानको-शाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद् विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः' । इत्यभियुक्तोक्तिः सङ्गच्छते । व्याकरणात् प्रकृतिप्रत्ययादीनां शक्तिग्रहः ।

## भास्करोदयाख्यव्याख्या.

विनापि चं क्वचित्समुच्चय इति न्यायेनार्थान्तरं समुच्चाययति—**अनुपपत्तीत्या-दिना** । **केवलजातिशक्तिकल्पनव्यवच्छेद इति** । जात्याकृतिविशिष्टव्य-क्तावेव शक्तिकल्पनं न्याय्यं नापि जातौ नाप्याकृतौ नापि व्यक्तौ पृथक् तत्तद्रूपे-णावोधात्तद्व्यवच्छेद इत्यपि बोध्यम् । ननु 'जात्याकृतिव्यक्तयः पदार्थ' इति सूत्रं प्रणयति स्म गौतममहर्षिः स किंविशिष्टे शक्तिं कल्पयांचकार विशिष्टपदानुपन्यासा-द्बहुवचनानुपपत्तेश्चेति चेन्न । अर्थपदोत्तरैकवचनार्थे एकत्वविवक्षया पार्थक्येन तत्कल्पनव्यवच्छेदेन समुदायशक्तावेव पर्यवसानात् । सूत्रे साक्षादनुपन्यस्तमपि उपक्षणविधया अनुग्राह्यमित्याशयेनाह—**अत्रेदमित्यादि** । **तद्वैशिष्ट्ये** जाति-निष्ठाश्रयितानिरूपिताश्रयतालक्षणसंबन्धविशेषे **तदाश्रयेषु** जातितत्संबन्धोभया-श्रयेषु व्यक्तिषु । **अशक्यस्य शाब्दबोधे भानासंभवात्** । पदशक्त्युपस्था-प्यार्थस्यैव शाब्दबोधे भाननियमात् । तत्संबन्धस्य शाब्दे भानान्यथानुपपत्त्या तदंशेपि **शक्तिः कल्पनीयेति** पूर्वेणान्वयबोधः । स्वतन्त्रमतं दर्शयति—**नव्यास्त्विति** । **लक्ष्यतावच्छेदकत्वग्रहमात्रेणेति** । लक्ष्यतावच्छेदकत्व-प्रकारकज्ञानमात्रेणेत्यर्थः । एवमुत्तरत्रापि । **चेति** । चेन शक्यतावच्छेदकत्वेनोप-स्थितजातेस्तद्वैशिष्ट्यस्य च समुच्चयः । शक्तिग्रहमित्यादिवृद्धवचनात् वृद्धव्यवहारे-णेतीतरोपलक्षकमित्याशयकमित्यर्थापयति—**शक्तीत्यादिना** । तेन वृद्धव्यवहारेण च भवतीत्यर्थकरणेन इतरेतरद्वन्द्वोत्तरविभक्त्यर्थान्वयस्य वर्तिपदार्थविषयकत्वनि-यमाभिप्रायेण व्याकरणादीत्यादिप्रतीकयति—**व्याकरणादीति** । **प्रकृतिप्रत्य-यादीनां शक्तिग्रह इति** । प्रत्ययविधानुद्देश्यतावच्छेदकाक्रान्तत्वरूपप्रकृतित्वस्य धातुनामनिपातसाधारणत्वेन नामनिपातयोर्व्याकरणस्य शक्तिग्राहकत्वात्सर्वं नाम धातुजमाहेति महाभाष्यवचनात्प्रकृतिपदं सर्वप्रकृतिभूतप्रधानधातुपरमन्यथा कोशाद्युपादानवैयर्थ्यप्रसङ्गात् । तदर्थनिर्णायकश्च धातुपाठः । प्रत्ययार्थनिर्णायकं

वृद्धवाक्यश्रवणानन्तरं मध्यमवृद्धस्य प्रवृत्तिमुपलभ्य गवानयनं च दृष्ट्वा मध्यमवृ-

## नीलकण्ठी.

उपमानात् शक्तिग्रहस्तु अधस्ताद्दर्शितः । 'अप्येकदन्तहेरम्बलम्बोदरगजाननाः' इति कोशादेकदन्तादिशब्दाः गणेशत्वविशिष्टे शक्ता इत्यर्थकाद् गणेशत्वविशिष्टे शक्तिग्रहः । तत्रैकदन्तादिशब्दानामेव पदार्थतया तेषां विभिन्नत्वेन द्वन्द्वोपपत्तिः । 'कोकिलः पिकपदवाच्यः' इत्याप्तवाक्यात् पिकपदस्य कोकिले शक्तिग्रहः । व्यवहारतः शक्तिग्रहमुपपादयति—**व्युत्पित्सुरिति** । शक्तिग्रहेच्छावान् इत्यर्थः । **उत्तमवृद्धेति** । प्रयोजकवृद्धेत्यर्थः । **मध्यमवृद्धस्येति** । प्रयोज्यवृद्धस्येत्यर्थः । गवानयनं दृष्ट्वा प्रवृत्तिमुपलभ्य चेत्यन्वयः । उपलभ्येत्यस्यानुमायेत्यर्थः । 'इयं क्रिया प्रयत्नपूर्विका, विलक्षणक्रियात्वात् स्वीयक्रियावत्' इत्यनुमानप्रयोगो बोध्यः ।

## भास्करोदयाख्यव्याख्या.

'वर्तमाने लडि' त्यादिकं बोध्यम् । आदिपदमादेशग्राहकमादेशानामेव तदागमे हि दृश्यते इति न्यायेन निर्णायकत्वात्प्रत्ययार्थनिर्णयो लाघवमूलक इति नान्यतरवैयर्थ्यमिति सुधियो विभावयन्तु । एकदन्तादिशब्दानां गणेशत्वविशिष्टैकार्थप्रतिपादकत्वेन कर्मधारयापत्त्या बहुवचनानुपपत्तिं प्रतिसंधाय समाधिमाह—**तत्रेत्यादिना** । **तत्र** कोशे । **एकदन्तादिशब्दानामेव पदार्थतया** एकदन्तादिशब्दानामेकाराद्युत्तरत्वादिघटितानुपूर्वीकाणामेवैकदन्तादिपदप्रतिपाद्यार्थपरतया कोशस्य नामलिङ्गानुशासनत्वान्नामार्थयोरभेदारोपादिति भावः । हेत्वर्थे तृतीयाऽतएव हेतोस्तेषां भिन्नत्वमित्यन्वयः । अत्रापि हेत्वर्थ एव तृतीया तेन यतो भिन्नत्वमतो हेतोर्द्वन्द्वोपपत्तिरित्यन्वयबोधः । ननु शब्दार्थयोस्तादात्म्ये किं मानमिति चेन्न । 'ओमित्येकाक्षरं ब्रह्मेति' 'सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेकां वाचमभिष्यन्दमानां तामन्ये विदुरन्यामिव च नानारूपामात्मनि सन्निविष्टामिति' 'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिन' इत्यादिश्रुतिस्मृतिवचनेभ्यः, इति चेदग्निशब्दोच्चारणे मुखदाहापत्तेर्गङ्गाशब्दोच्चारणे पिपासाहानापत्तेश्च दुरुद्धरत्वेनारोपमूलक एवाभेदप्रत्ययः क्वचित्तत्प्रामाण्यादिति निष्कर्षः । **केचित्तु** । भेदसहिष्णुमभेदमङ्गीकृत्य बोधं वा तदङ्गीकृत्योक्तदोषं परिजहुरित्यलं पल्लवितेन । **व्यवहारतः शक्तिग्रहमुपपादयतीति** । यद्यपि व्यवहारत्वेन व्यवहारमात्रस्य शक्तिग्राहकत्वेऽप्यभियुक्तोक्तिर्विशेषरूपेण व्यवहारफलिकेति मूलं स्वार्थपरमेवेति यथाश्रुते योजयितुं शक्यम् । तथाप्यत्रत्यव्यवहारस्य न सामान्यपरत्वं तेनोक्तव्याख्यानं समंजसमेव तदेव दर्शितं मूले **तथाहीत्यादिना** । कार्यान्वितशक्तिवादिनां प्राभाकाराणां मतं निरसयद्व्यवहारशक्तिग्रहप्रकारप्रदर्शकमूलं विवृणोति—**शक्तिग्रहेच्छावानिति** । व्युत्पत्तुमिच्छतीति व्युत्पित्सुरिति व्युत्पत्त्या व्युत्पत्तेः शक्तिग्रहरूपत्वेनेच्छासन्नर्थान्तर्भावेणैव तदर्थंकरणादिति भावः । **प्रयोजकेति** प्रकर्षे योजयतीति हेतुमण्ण्यर्थान्तर्भावेण युजेः कर्तरि ण्वुल् । तथाच गवानयनकार्ये यत्किंचित्कर्मकयोजनया मध्यमवृद्धोपन्यासो मूले इति बोध्यम् । **इयं क्रियेति** । घटानयनक्रियेत्यर्थः । **अनुमानप्रयोगो बोध्य इति** । इदमुपल-

द्धप्रवृत्तिजनकज्ञानस्यान्वयव्यतिरेकाभ्यां वाक्यजन्यत्वं निश्चित्य 'अश्वमानय गां बधान' इति वाक्यान्तरे आवापोद्वापाभ्यां गोपदस्य गोत्वविशिष्टे शक्तिः अश्वपदस्य अश्वत्वविशिष्टे शक्तिः, इति व्युत्पद्यते ॥

## नीलकण्ठी.

**प्रवृत्तिजनकज्ञानस्य ।** गवानयनगोचरप्रयत्नजनकगवानयनज्ञानस्य[1] वाक्यस्य विशिष्टेर्थे शक्तिर्न कल्पनीया तादृशार्थस्य समभिव्याहारलभ्यत्वात् । 'अनन्यलभ्यो हिशब्दार्थः' इति न्यायात् इत्यभिसन्धिमानाह—**अश्वमानयेत्यादि । आवापोद्वापाभ्यामिति । आवापः** संग्रहः । **उद्वापः** त्यागः । **व्युत्पद्यत**

## भास्करोदयाख्यव्याख्या.

क्षणम् । घटानयनगोचरो यत्नः घटानयनगोचरज्ञानजन्यः । तद्गोचरप्रयत्नत्वात् । यो यद्गोचरो यत्नः स तद्गोचरज्ञानजन्यः । स्वीयस्तन्यपानयत्नवत् । एवं घटानयनगोचरं ज्ञानं घटमानयेति शब्दजन्यं तदन्वयव्यतिरेकानुविधायित्वाद्यदन्वयव्यतिरेकानुविधायि तत्तज्जन्यं यथा घट इत्येवं चानयनक्रियान्विते शक्तिं निश्चिनोतीति तात्पर्यम् । अन्यथा पदार्थसंसर्गरूपान्वयांशस्य शाब्दे भानानुपपत्तिः । तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्यतदुपस्थितित्वेन हेतुतायाः शाब्दबोधे सामान्यत एव क्लृप्तत्वादन्यथा घटपदादाकाशस्यापि बोधापत्तिः । संसर्गताभिन्नविषयतायास्तादृशोपस्थितिजन्यतावच्छेदकत्वे च गौरवमिति प्राभाकरमतम् । न चेतरान्वितघटस्य वाक्यप्रतिपाद्यतया वाक्यार्थबोधे पदार्थबोधस्य हेतुत्वात्पदार्थबोधे पदशक्तिग्रहस्य हेतुत्वात्पदशक्तिग्रहकाले वाक्यार्थान्वयांशस्यानुपस्थितत्वात्तदंशे शक्तिग्रहो निर्मूल एवेति वाच्यम् । गामानयेत्यादीतरपदसमभिव्याहृतवाक्यश्रवणानन्तरं विशेषरूपेणार्थान्तरमनन्तर्भाव्य केवलान्वयांशान्तर्भावेण शक्तिग्रहस्य शाब्दधीहेतुत्वमभ्युपेयं पदार्थान्तरस्य पदान्तरलभ्यतया तदंशान्तर्भावेण शक्तिग्रहेऽनन्यलभ्यन्यायविरोध इति भाट्टमतम् । मतद्वयस्यैकोक्त्यैव निरसने मूलतात्पर्यं निष्कृष्य व्याख्यायते—**गवानयनेत्यादिना । गवानयनगोचरः** गोकर्मकानयनविषयको **यः प्रयत्नः ।** मध्यमवृद्धसंबन्धीति शेषः । **तज्जनकगवानयनज्ञानस्य वाक्यस्य** प्रयत्नजनकगोकर्मकानयनज्ञानजनकवाक्यस्य वाक्यजन्यवाक्यार्थज्ञानात्प्रवृत्तेर्लोके दृष्टचरत्वतात्पर्येण **विशिष्टेऽर्थे शक्तिर्न कल्पनीया** पदार्थसंसर्गरूपान्वयांशविशिष्टे केवलान्वयांशविशिष्टे वा शक्तिर्न कल्पनीया । **तादृशार्थस्य** उक्तवाक्यार्थसंसर्गरूपान्वयांशस्य केवलान्वयांशस्य वा **समभिव्याहारलभ्यत्वात् ।** समभिव्याहृतानयनादिपदोपस्थाप्यत्वात् केवलान्वयांशस्यापि पदसमभिव्याहारगम्यत्वाभिप्रायेणेति समुदितार्थः । तत्रैव मानमाह—**अनन्यलभ्येत्यादिना ।** नचैवं सति शाब्दे भानानुपपत्तिरिति वाच्यम् । सामान्यतस्तद्विषयकबोधे वृत्तिज्ञानजन्यतदुपस्थितित्वेन न हेतुता स्वतन्त्रवृत्तिज्ञानाद्विश्रृङ्खलभावेनैकपदोपस्थितयोः पदार्थतत्त्वावच्छेदकयोर्विशेष्यविशेषणभावक्रमेण

[1] घटानयनगोचरप्रयत्नजनकघटानयनज्ञानस्येति मुद्रितपु. पाठः.

ननु सर्वत्र कार्यपरत्वाद्व्यवहारस्य कार्यवाक्ये एव व्युत्पत्तिः, न सिद्धे इति चेत्

## नीलकण्ठी.

इति । व्युत्पत्त्याश्रयो भवतीत्यर्थः । वाक्यस्य शेषाद्यथा यवमयश्चरुर्भवतीत्यत्र यवशब्दः आर्यव्यवहाराद्दीर्घशूकविशिष्टस्य वाचकः । म्लेच्छव्यवहारात् कङ्गोर्वा-चको वेति संदेहे 'वसन्ते सर्वसस्यानां जायते पत्रशातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः ।' इति वाक्यशेषाद्दीर्घशूकविशिष्टे शक्तिनिर्णयः । कङ्गौ तु शक्तिभ्रमात् प्रयोगः विवरणाद्यथा 'पचति, पाकं करोति' इति यत्नार्थककरोतिना सर्वाख्यातव्याख्यानात् आख्यातस्य यत्नत्वविशिष्टे शक्तिग्रहः । सिद्धपदसान्निध्या-च्छक्तिग्रहस्तु 'विकसितपद्मे' इत्याद्यग्रिमग्रन्थ एव स्फुटीभविष्यतीत्यलं पल्लवितेन ।

**व्यवहारस्य कार्यपरत्वादिति** योजना । कार्यपरत्वं च कृतिसाध्यानयना-दिरूपक्रियातात्पर्यकत्वम् । **व्युत्पत्तिः** । शक्तिग्रहः । व्यवच्छेद्यं स्फुटयति—न

## भास्करोदयाख्यव्याख्या.

शाब्दबोधापत्तेः । किंतु तद्धर्मप्रकारेण तद्विषयकशाब्दबोधे वृत्तिज्ञानजन्यतद्धर्मा-वच्छिन्नतद्विषयकोपस्थितित्वेनैव हेतुता वाच्या । एवं च तत्संसर्गकबोधस्य किंचिद्धर्मप्रकारेण तद्विषयकत्वाभावाद्वृत्तिज्ञानात्तदनुपस्थितावपि तत्संसर्गकशा-ब्दबोधः संभवत्येवेति स्थितमन्यत्र, तेन न दोषावसर इत्यलम् । **आवापोद्वा-पाभ्यामितीति** । अयंभावः । गामानयेति वाक्यश्रवणोत्तरं मध्यमवृद्धक्रिया-प्रवृत्त्या तद्विशिष्टे गृहीतापि शक्तिर्विजातीयवधानेत्येतद्घटितवाक्यश्रवणानन्तरं विजातीयमध्यमवृद्धक्रियाप्रवृत्त्या त्यक्ता भवति । तेन[1] सत्येवमुभयानुस्यूतघटप-दस्यैव घटरूपार्थे शक्तिर्न गौरवात्तत्तत्क्रियाविशिष्टे तस्य तस्य तेन गृह्यत इति । अन्यथा[2] अर्थवादानां विध्युपकारकाणां श्रुतिस्मृतीतिहासपुराणानां सिद्धार्थपराणा-मप्रामाण्यमापद्येतैवं द्वारमित्येकाकारकमात्रप्रयोगेऽनुभवसिद्धो बोधो भज्येत । अध्याहृतक्रियया तत्त्वोपपादनं कर्तृतात्पर्यविषयक्रियाभेदेन विनिगमनाविरहेण विकर्षितमतएव सुभ्रूपहसितं मिश्रैः 'प्रसिद्ध एव लोकेऽस्मिन् बुद्धबन्धुः प्रभाकरः' इति । **दीर्घशूकविशिष्टस्य वाचक इति** । लम्बकर्णविशिष्टस्य बोधक इत्यर्थः । **दीर्घशूकविशिष्टे शक्तिनिर्णय इति** । ननु गोधूमानामपि तथात्वादनिर्णयस्त-दवस्थ एवेति चेन्न । वैजात्यनिवेशेन व्यवच्छेदात् । ननु व्यवहारस्य शक्तिग्राह-कत्वमुक्तं तेन म्लेच्छव्यवहारोपि कङ्गावम्लेच्छितं[3] एवेत्याशङ्कायामाह—**कङ्गौ त्वित्यादि** । शक्तिभ्रमः शक्तिग्राहकप्रमाणाभावमूलक इति भावः । **पचती-त्यादि** व्याख्यातं पुरस्तात् । **कार्यपरत्वं चेत्यादि** । नच कृतिसाध्यस्थि-तिक्रियातात्पर्यकत्वेन सिद्धेपि कार्यान्वितशक्तिग्रह इति घट्टकुटी[4]प्रभातन्यायप्रसर

१ बालेन. २ संसर्गांशेऽपि तदङ्गीकारे. ३ नापभाषित एव. ४ शौल्किकभयान्निशायां मार्गान्तरेण गच्छतः क्षपितनिशस्य घट्टकुट्यां शुल्कशालायां यथा प्रभातं कस्यचिद्वञ्चकस्य तथा तव सिद्धे शक्तिकल्पनभिया व्यवहारस्य कार्यपरत्वमास्थाय कार्यान्विते स्वार्थे पदानां शक्तिमभ्युपगच्छतोऽपि प्रद्वाद आपन्न इति घट्टकुटीप्रभातन्यायस्वरूपम्.

॥ न ॥ 'काञ्च्यां त्रिभुवनतिलको भूपतिः' इत्यादौ सिद्धेऽपि व्यवहारात् । 'विकसितपद्मे मधूनि पिबति मधुकरः' इत्यादौ प्रसिद्धपदसमभिव्याहारात् सिद्धेऽपि मधुकरादिव्युत्पत्तिदर्शनाच्च ॥

लक्षणाऽपि शब्दवृत्तिः ॥ शक्यसंबन्धो लक्षणा ॥ 'गङ्गायां घोषः' इत्यत्र गङ्गापदवाच्यप्रवाहसंबन्धादेव तीरोपस्थितौ तीरेऽपि शक्तिर्न कल्प्यते ॥ सैन्धवादौ लवणाश्वयोः परस्परसंबन्धाभावात् नानाशक्तिकल्पनम् ॥ लक्षणा त्रिविधा

## नीलकण्ठी.

**सिद्धे इति । सिद्धेऽपि व्यवहारादिति ।** तथा च सिद्धेऽपि शक्तिग्रहस्त्वावश्यकः । अन्यथा तत्राऽनुभवसिद्धस्य शाब्दबोधस्यापलापापत्तेरिति भावः ।

**तीरेऽपि शक्तिर्न कल्प्यत इति ।** गङ्गापदस्येति शेषः । नन्वेवं सैन्धवादिपदानां नानार्थकत्वानुपपत्तिः । एकत्र शक्तिरन्यत्र लक्षणेत्येव निर्वाहादत आह—**सैन्धवादाविति ।** आदिना हर्यादिपदपरिग्रहः । **संबन्धाभावादिति ।**

## भास्करोदयाख्यव्याख्या.

इति वाच्यम् । अव्यावर्तकस्थितिक्रियानपेक्षणेन क्रियापदस्य विशेषक्रियापरत्वात् । अन्यथा न सिद्धेति मूले व्यवच्छेद्यासंगतिस्तद्व्यवच्छेदाधायकव्याख्यानासंगतिश्च स्यात् । उपसंहरति—**तथाचेत्यादिना । अन्यथेति ।** सिद्धे शक्तिग्रहानङ्गीकारे इत्यर्थः । सिद्धेशक्त्यनङ्गीकारे प्रसिद्धशाब्दबोधानुपपत्तिरेव मूलमित्याह—**तत्रेत्यादिना । तीरेऽपि शक्तिर्न कल्प्यत इतीति ।** अन्यथा क्वापि लक्षणाप्रसङ्ग एव न स्यादिति भावः । आदिना पुष्पवन्तादिपरिग्रहः । **संयोगादिरूपसंबन्धाभावादित्यर्थ इति ।** यद्यपि लवणाश्वयोः संयोगोपि संभवति यत्राश्वे निक्षिप्तं लवणं तथापि निरन्तरतत्संबन्धस्यैव ग्रहणतात्पर्येणार्थकथनमिति बोध्यम् । पुनरादिना संयुक्तसंयुक्तत्वादिरूपपरंपरासंबन्धग्रहणे लवणाश्वयोस्तत्सत्वादनुपपत्तिस्तदवस्थैवेति चेदादिना समवायादीनामेव परामर्शान्न दोषावसरः । अन्यथा संयुक्तसमवायादीनामपि ग्रहणे गङ्गापदवाच्यप्रवाहसंयुक्ततीररूपार्थसमवायस्य तीरत्वेपि सत्त्वात्तेन संबन्धेन तीरत्वेपि लक्षणापत्त्या तीरत्वे न लक्षणेति सिद्धान्तव्याकोप आपद्येत । ननु शक्यादशक्योपस्थितिरूपाया तस्याश्चाङ्गीकारात्पदवृत्त्यन्तरकल्पनायां गौरवाल्लाक्षणिकं पदं नानुभावकमिति सिद्धान्ताच्च न पदं लक्षणावृत्त्यान्यार्थबोधकमिति चेन्न । शाब्दत्वावच्छिन्नं प्रति वृत्त्या पदजन्यपदार्थोपस्थितेर्हेतुत्वेन तदनभ्युपगमे आकाशादेः शाब्दबोधे भानापत्तेः प्रागेव प्रपञ्चितत्वात् । शक्यार्थबोधं प्रत्येव तथा हेतुत्वं लक्षणाजन्यशाब्दत्वावच्छिन्नं प्रति तु स्वरूपतस्तत्पदार्थत्वेन हेतुत्वाङ्गीकारे मानाभाव इत्याभाति । **वैयाकरणास्तु** शक्यतावच्छेदकारोपो लक्षणेत्याचक्षते । तथाहि—आरोपितशक्यतावच्छेदकरूपेणाऽन्यव्यक्तिबोधे लक्षणेति यथा गङ्गायां घोष इत्यतः शक्यतावच्छेदकप्रवाहत्वस्य तीरविशेषे आरोपाद्गङ्गात्वरूपेणैव तीरबोधो न तीरत्वेन । तथाच गौर्वाहीक इतिवत्तीरे आरोपेणान्वयानुपपत्त्या प्रयुक्तमिदं वाक्यमन्यथाऽप्तोक्तत्वानुपपत्तिर-

## भास्करोदयाख्यव्याख्या.

तत्तीरलक्षकमिदमिति वोद्धा बुध्यतीत्यभिप्रेत्येति बोध्यम्। एवं छत्रिणो यान्तीत्यादावच्छत्रिषु छत्रित्वस्य, काकेभ्यो दधि रक्ष्यतामित्यादौ दध्युपघातकमात्रे काकत्वादेरारोपः। अत एव 'पुंयोगादाख्यायामि'ति सूत्रे भाष्ये गोपीत्यादौ गोपपदस्य गोपसंवन्धि—स्त्रीत्वाश्रयगोप्यां लक्षणायामण्प्रत्ययान्तसाधुतामापाद्यैतदर्थे एतदसाधुत्वमाशङ्क्य समाहितं नावश्यमयमेवाभिसंबन्धो भवति तस्येदमिति। किन्तु तन्मूलकः सोऽयमित्यभिसंवन्धोस्तीत्युक्त्वा चतुर्भिः प्रकारैरतस्तस्मिन्स इत्येतद्भवति तात्स्थ्यात्ताद्धर्म्यात्तत्सामीप्यात्तत्साहचर्यान्मञ्चा हसन्ति सिंहो माणवको गङ्गायां घोषः यष्टीः प्रवेशयेत्युक्तम्। कैयटोपि आरोप्यते ताद्रूप्यमिति। अत एव गङ्गायां मीनघोषौ स्त इत्युपपद्यते। अन्यथा गङ्गापदस्याजहत्स्वार्थलक्षणायामपि गङ्गात्वतीरत्वोभयाश्रययोर्गङ्गातीरोभययोर्घोषमत्स्योभयान्वये एकधर्मावच्छिन्नेऽन्वयरूपसाहित्याभावात् द्वन्द्वानुपपत्तिरिति। किंचात्रार्थे गौतमोपि 'सहचरण-स्थान—तादर्थ्य—वृत्त—मान—धारण-सामीप्य-योग-साधना—धिपत्येभ्यो ब्राह्मणमञ्च—कट—राज—सक्तु—चन्दन—गङ्गा—शाटका—न्न—पुरुषेष्वतद्भावेऽपि तदुपचार'इति। **अस्यार्थः** तस्य भावस्तद्भावस्तद्धर्मस्तदभावेपि तदुपचार इत्यर्थः। स च तद्धर्मारोपेण। आरोपनिमित्तानि च सहचरणादीनि। यष्टीः प्रवेशयेत्यत्र भोजनकाले यष्टिधरब्राह्मणकर्मकप्रवेशनतात्पर्यान्यथानुपपत्त्या यष्टित्वारोपो ब्राह्मणे। एवं मञ्चाः क्रोशन्तीत्यत्र तात्स्थ्याद्बालेषु मञ्चत्वस्य, वीरणेष्वास्ते इत्यत्र तादर्थ्यात्कटत्वारोपः' अयं राजा यमः, प्रस्थः सक्तुः, तुला चन्दनं, गङ्गायां घोषः, कृष्णः शाटकः। अन्नं प्राणाः, कुलस्य राजेत्येतेषु यथाक्रमं वृत्तादिनिमित्तेन यमत्वाद्यारोपो वोध्यः। न्यायवार्तिककारोपि साहचर्यं नाम यष्टिकया संवन्धस्तत्संवन्धात्तु यष्टिकावानित्येव स्यान्न तु यष्टिकेति यष्टिकावानिति तु मुख्य एव, तस्मादुपचारबीजमन्यद्वक्तव्यमुच्यते। यष्टिकायां तावदयं यष्टिकाशब्दो यष्टिकात्वजातिनिमित्तकः, तत्र संयुक्तसमवेतां जातिं ब्राह्मणे समवायेनाध्यारोप्य ब्राह्मणं यष्टिकेत्याहेत्याह। हरिरपि 'एकमाहुरनेकार्थं शब्दमन्ये परीक्षकाः। निमित्तभेदादेकस्य सार्वार्थ्यं तस्य भिद्यते। सर्वशक्तेः स्मृतस्यैव[1] शब्दस्यानेकधर्मिणः। प्रसिद्धभेदाद्गौणत्वं मुख्यत्वं चोपचर्यते' इत्याहेति। तथाच कथं संगच्छतां शक्यसंवन्धो लक्षणेति **चेदुच्यते**। गङ्गायां घोष इत्यादावारोपितगङ्गात्वेन तीरवोधे तस्य ज्ञानस्य भ्रमत्वं। तदुत्तरं तदधिकरणकघोषदर्शनप्रवृत्तिर्न स्यात्प्राप्तात्मकज्ञानस्यैव प्रवृत्तिजनकत्वात् शुक्तिरूप्यादौ चाकचक्यादिनाऽऽरोपितरजते विशेषदर्शनेनारोपितरजतवोधे रजते रजतार्थिनः प्रवृत्तेः सर्वानुभवविरुद्धत्वात्। **केचित्तु** मध्ये व्यञ्जनया मुख्यगङ्गापदार्थभेदस्यापि प्रतीतेः व्यञ्जनाजन्यज्ञानेन नाप्रामाण्यग्रहः। यथा 'वाले तवाननविधूदयजातवेला आश्वारभन्ते तिमिरं निरन्तरम्' इत्यादौ प्रियानने आहार्येन्दुभेदेनाप्रामाण्यग्रहस्य व्यञ्जनावृत्त्या रसिकजनसंमतत्वाच्चमत्कारातिशयायैव तदङ्गीकारात्तदभ्युपगमेनादोष इति चेद्वृत्त्यन्तरसहकारेणैवंविधलक्षणाङ्गीकारे वीजाभावाद्व्यञ्जनावृत्तेश्चालंकारिक-

१ स्तुतस्यैवेति पाठान्तरम्.

## भास्करोदयाख्यव्याख्या.

मात्राभिमतत्वादस्मदीयलक्षणानुसरणमेव निर्दुष्टमुत्पश्यामः । उक्तभाष्यकैयटाभ्यां सोयमित्यभिसंबन्धोत्तरं ताद्रूप्यारोपश्च शक्तपदबोध्यत्वेन शक्यतावच्छेदकारोपबुद्धिमात्रं यथा हरिमुच्चारयेदित्यत्र हरिपदबोध्येऽर्थे श्रीनिवासे उच्चारणकर्मशब्दतावच्छेदकारोपबुध्या शब्दार्थयोस्तादात्म्यव्यवहारपदस्याप्रामाण्यविषयत्वात्तस्य प्रमाणत्वे दोषस्य प्रागेवोक्तत्वात् । ननु महर्षीणां महापण्डितानां कण्ठरवोक्तेऽन्यथार्थतात्पर्यकल्पने स्वेष्ट एव प्रामाण्याभासः प्राप्नुयादिति चेत्सति न्याये तात्पर्यान्यथाकल्पनस्यादुष्टत्वात् भवदर्थकल्पने भवन्तः कुतो वा गौर्वाहीक इति वद्ब्रज्ञातीरं यष्टिर्ब्राह्मण इत्यभेदप्रत्ययं न मनुध्वे । उक्तदिशैव नोक्तगौतमसूत्रविरोधः । संयुक्तसमवेतां जातिं ब्राह्मणे इत्यादिन्यायवार्तिककारवचनमपि लक्षणायास्तत्पदबोध्यत्वेन तद्धर्मप्रकारकान्यधर्मिविशेष्यकबोधस्तद्बोधकपदान्तराभावादित्यर्थतात्पर्यकमेव । हरिवचनेनापिमुख्यत्वमर्थे शक्त्या तत्पदबोध्यत्वं गौणत्वं वृत्त्यन्तरेण तत्त्वमित्यर्थान्नारोपबुद्धिर्लक्षणाया वास्तविकीत्याभाति । अन्यथा किमवलम्ब्य शक्यसंबन्धरूपं नैयायिकशिरोमणयः सर्वेप्यमन्यन्त स्वशास्त्रीयसूत्रवार्तिकविरोधादतस्तात्पर्यमेवं संकल्प्य संमतेयमिति संमतयः संबुध्यन्ताम् । शक्यसंबन्धरूपलक्षणायामस्मदभिमतायामेव शक्यतावच्छेदके न लक्षणेति प्राचां प्रवादोऽपि साधीयान्भवति । उपस्थितेस्तत्त्वे शक्यतावच्छेदकारोपस्य वा तत्त्वे उपस्थितेर्लक्ष्यतावच्छेदकविशिष्टलक्ष्यविषयत्वाल्लक्ष्यतावच्छेदकविशिष्टलक्ष्ये शक्यतावच्छेदकारोपाच्च लक्ष्यतावच्छेदकांशेऽपि तत्त्वात्तत्प्रवादोऽसाधीयान् स्यात् । अस्मन्मते तु शक्यसंबन्धस्य साक्षात्संयोगस्य तीरत्वविशिष्टतीर एव सत्त्वात्तदुपपत्तिः । शक्यतावच्छेदकविशिष्टे शक्तिर्न विशेषणविधया शक्यतावच्छेदकांशेऽपि यद्वत्तद्वदिति बोध्यम् । अथैतन्मते स्वज्ञानजन्यपदार्थोपस्थितिसंबन्धेन लाक्षणिकपदस्यानुभावकत्वसंभवाल्लाक्षणिकं पदं नानुभावकमिति सिद्धान्तभङ्गप्रसङ्गः । शक्यादशक्योपस्थितिर्लक्षणेति मते शक्यतावच्छेदकारोपो वा लक्षणेति मते लाक्षणिकार्थस्य तटस्थतया भानान्न तद्गोचरानुभवजनकत्वमिति चेत्सत्यम् । लाक्षणिकमननुभावकमित्यस्योद्देश्यविधेयभावतयाऽननुभावकत्वे तात्पर्यात् उद्देश्यविधेयभावेनान्वयं प्रति शक्तिमत्त्वस्यैव नियामकत्वात् विधेयार्थे लक्षणाभावादेव 'न विधौ परः शब्दार्थः' इति सिद्धान्तसंगतिः । अस्मन्मत एव गङ्गायां घोष इत्यादौ विभक्त्यर्थाधिकरणत्वस्य तीररूपार्थे प्रकृत्युपस्थापितेऽन्वयात्प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिसमन्वयो नेतरमते, तटस्थतया प्रकृत्यनुपस्थाप्यत्वात् । उपकुम्भमित्यादौ उपाद्यर्थसामीप्यादौ विभक्त्यर्थान्वयाद्व्युत्पत्तिव्यभिचारो नाशङ्कनीयः । तत्र तत्र संकोचस्यैव प्रामाणिकनैयायिकशिरोमणिभिः कल्पितत्वात् । अन्यथा लक्षणाया एव वैयर्थ्यं नैयायिकमते, वैयाकरणमते उपकुम्भमित्याद्यव्ययीभावे विशिष्टे शक्तिकल्पनवैयर्थ्यं च स्यात् । नन्वेवमपि शक्तिलक्षणयोः पदार्थोपस्थितिद्वारा शाब्दबोधकारणत्वेऽनन्तकार्यकारणभावप्रसङ्गः । परस्परं व्यभिचारोऽतिप्रसङ्गश्च स्यादिति चेन्न । शक्तित्वाव-

जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा चेति ॥ यत्र वाच्यार्थस्यान्वयाभावः तत्र जहल्लक्षणा। यथा मञ्चाः क्रोशन्ति॥ यत्र वाच्यार्थस्याप्यन्वयः तत्र अजहदिति॥

## नीलकण्ठी.

संयोगादिरूपसंबन्धाभावादित्यर्थः। इदमुपलक्षणम्—प्रसिद्धयोरर्थयोः कुत्र शक्तिः कुत्र लक्षणेत्यत्र विनिगमकाभावेन उभयत्र शक्तिकल्पनस्यावश्यकतेति। **मञ्चा इति**। मञ्चपदं मञ्चस्थपुरुषे लाक्षणिकम्। वाच्यर्थस्य क्रोशनकर्तृत्वान्वयासंभवा-

## भास्करोदयाख्यव्याख्या.

च्छिन्नसांसर्गिकविषयतानिरूपितपदनिष्ठप्रकारतानिरूपितार्थनिष्ठविशेष्यताकग्रहत्वेनैक-रूपेण हेतुत्वस्याभिमतत्वात्। अस्ति च यत्र केवलशक्तिसंबन्धेन पदप्रकारकं ज्ञानं भवति तत्र तादृशविषयताशालिपदप्रकारकज्ञानस्य सुलभत्वात्। यत्र शक्य-संबन्धेनापि पदप्रकारकं ज्ञानं तत्रापि तादृशज्ञानस्य विद्यमानत्वान्न दोष इत्यलम्। परोक्तलक्ष्यतां निरस्य प्रेक्षावतां प्रकारान्तरेण शेमुषीविशेषाय मूलोक्तमेवार्थं स्वामीष्टतयोपलक्षयति—**इदमुपलक्षणमित्यादिना**। **विनिगमकाभावे-नेति**। एकतरार्थे शक्तिमुपगच्छतोऽन्यतरार्थे लक्षणा वक्तव्या। विपर्यासेन शक्तिमुपगच्छतो विपर्यासेन विपरीतार्थे लक्षणेति शक्तिलक्षणे अपि द्वे वृत्ती सर्वेष्वर्थेष्वापद्येयातामिति तत्त्वम्। **वाच्यार्थस्येति**। मञ्चपदवाच्यार्थस्येत्यर्थः। **क्रोशनकर्तृत्वान्वयासंभवादिति**। आह्वानकर्तृत्वस्य संबोधनक्रियाकर्तृत्व-रूपार्थस्य चेतनधर्मत्वादस्य चान्तरालिकक्षेत्रस्थचतुस्तम्भनिर्मितक्षेत्ररक्षकाधिष्ठा-नस्थानविशेषपरत्वात्तत्कर्तृत्वान्वयासंभव इति भावः। **अथ** कोयं संबोधनपदार्थः। ज्ञानमिच्छा च संबोधनपदार्थः। प्रकृत्यर्थस्य ज्ञाने निष्ठतासंबन्धेनान्वयः। तस्य चोद्देश्यतासंबन्धेन इच्छायामन्वयः। तस्याः विषयतासंबन्धेन क्रियायामन्वयः। एवंच राम मां पाहीत्यस्य रामनिष्ठज्ञानोद्देश्यकेच्छाविषयो मदभिन्नैकत्वसंख्याविशि-ष्टाश्रयनिष्ठदुःखनिवृत्त्यनुकूलस्त्वदभिन्नैकत्वविशिष्टाश्रयनिष्ठो व्यापार इति बोध इति वृत्तिकारादयः। क्रियायाः प्राधान्याद्वैयाकरणमते। **नैयायिकनये तु** रामनि-ष्ठज्ञानोद्देश्यकेच्छाविषयो मदभिन्नैकत्वसंख्याविशिष्टाश्रयनिष्ठदुःखनिवृत्त्यनुकूल-व्यापारवदभिन्नैकत्वसंख्याविशिष्टाश्रयस्त्वमिति प्रथमान्तमुख्यविशेष्यको बोधः। **कैयटादीनां मते** बोधनीयार्थविषयकज्ञानानुकूलव्यापारानुकूलव्यापारः संबोध-नपदार्थः। **नव्यवैयाकरणनये** प्रयोक्तृतात्पर्यविषयीभूतार्थग्रहणसादरत्वं संबोध-नपदार्थः। बोधः पूर्ववत् सर्वत्र यथायथं मतभेदेन बोध्यः। **गदाधरभट्टाचा-र्याणां मते तु** वक्तुरव्यवहितशब्दजन्यबोधाश्रयत्वेनेच्छा संबोधनप्रथमार्थः। राम मां पाहीत्यत्र वक्तुर्याऽव्यवहितमां पाहीति शब्दजन्य प्रार्थ्यमानमत्कर्मकपा-लनविषयकबोधाश्रयत्वेन इच्छा तस्याः विषयतासंबन्धेन प्रकृत्यर्थविशेषणतया भानं तथाच राम मां पाहीत्यत्र मत्कर्मकरक्षणबोधाश्रयत्वेनेच्छाविषयस्त्वमिति

---

१ शक्तिमत्पदजन्योऽयमर्थ इति ज्ञानविषयत्वेनेत्यर्थः। २ शक्तिमत्पदप्रकारतानिरूपित-दीरनिष्ठार्थविशेष्यतायाः सत्त्वात्।

यथा छत्रिणो गच्छन्ति ॥ यत्र वाच्यैकदेशत्यागेन एकदेशान्वयः तत्र जहदजहदिति ॥ यथा तत्त्वमसीति । गौण्यपि लक्षणैव लक्ष्यमाणगुणसंबन्धस्वरूपा ॥ तथा अग्निर्माणवक इति ॥

## नीलकण्ठी.

दिति भावः । **वाच्यस्यापीति** । अपिना लक्ष्यसमुच्चयः । **छत्रिण इति** । एकसार्थवाहित्वेन छत्र्यच्छत्रिषु गमनकर्तृत्वान्वयतात्पर्यानुपपत्तिरेव लक्षणाबीजम् । नच छत्रिन्नित्यस्य मतुवर्थकेन्प्रत्ययान्ततया पदसमूहरूपत्वेन तच्छक्त्याप्रसिद्ध्या शक्यसंबन्धरूपलक्षणाया अभावेन कथमिदमुदाहरणमिति वाच्यम् । प्रतिपाद्यसंबन्ध एव लक्षणा इत्येतदभिप्रायेण तदुदाहरणदानात् । अन्यथा 'काकेभ्यो दधि रक्ष्यताम्' इत्याद्युदाहर्तव्यम् । तत्र काकपदस्य काकतदितरसाधारणदध्युपघातकत्वावच्छिन्नपरत्वात् । केचित्तु छत्रपदस्यैकसार्थे लक्षणा । तद्धितार्थः संबन्धी । तथा चैकसार्थसंबन्धिनो गच्छन्तीत्यन्वयबोध इत्याहुः । **तत्त्वमसीति** । अत्र तत्पदवाच्ये सर्वज्ञत्वादिविशिष्टे त्वंपदवाच्यस्यान्तःकरणादिविशिष्टस्याभेदानुपपत्त्या उभयत्र विशेषणांशपरित्यागः । तथा च तत्पदलक्ष्यस्य शुद्धस्य त्वंपदलक्ष्येण सहाभेदान्वयोपपत्तिरित्यभिप्रायः । इदमुदाहरणं तु जीवब्रह्मणोरैक्यं ब्रुवतां

## भास्करोदयाख्यव्याख्या.

बोधः । **केचित्तु** । मञ्चस्थानां पुरुषाणां क्षेत्रस्थव्रीहियवाद्यनपनोदनाय पशुशुकादीनां शब्दमात्रकरणे क्रोशनमिह शब्दमात्रं विवक्षितं न धात्वर्थरूपमित्याहुः । **वाच्यस्यापीतीति** । क्वचिद्दीपिकापुस्तके वाच्यार्थस्यापीति पाठो न बहुष्विति तात्पर्येणैवं प्रतीकं बोध्यम् । **छत्रिण इतीति** । छत्र्यच्छत्रिषु गच्छत्सु बाहुल्याच्छत्रिणां छत्रिणो यान्तीत्यच्छत्रिषु यानकर्तृत्वानुपपत्त्या छत्रिपदमजहत्स्वार्थलक्षणया छत्र्यछत्र्युभयबोधकमिति भावः । **एकसार्थवाहित्वेन** । सामानाधिकरण्येन । **तच्छक्त्याप्रसिद्ध्येति** । प्रकृतिप्रत्यययोः पृथगर्थस्य कोशव्याकरणप्रसिद्ध्या समुदायशक्यबोधकत्वेन छत्रसंबन्धरूपार्थस्येन्नन्तसमुदायानुपस्थाप्यत्वेन तत्संबन्धिसंबन्धस्य छत्रिष्वभावाच्छक्यसंबन्धरूपलक्षणासंभव इति भावः । समाधत्ते—**प्रतिपाद्येत्यादिना** । समुदायस्य समुदायार्थाशक्तत्वेपि समुदायार्थबोधकत्वे समुदायस्य तद्बोध्यसंबन्ध एव लक्षणेत्यनुशयेन न दोष इति तात्पर्यार्थः । प्रतिपाद्यपदं बोध्यार्थकम् । **अन्यथा** । प्रतिपाद्यसंबन्धो लक्षणेत्यनङ्गीकारे । तर्हि कथं तत्र लक्षणेत्याशङ्क्य समाधत्ते—**केचित्त्विति** । **अभेदान्वयानुपपत्तेरिति** । अन्तःकरणादिविशिष्टस्य किंचिज्ज्ञत्वेन सर्वज्ञभेदस्य विरुद्धधर्मनिमित्तस्य सर्वलोकसिद्धत्वादभेदोक्तिरद्वैतवादिनां निर्युक्तिकेति चेत्सर्वमात्मैवाभूत्तत्केन कं पश्येन्नेह नानेत्याद्यनेकश्रुतिकदम्बावलम्बितत्वेन तत्सिद्धस्वरूपैक्ये संपादनीये विशेषणांशस्यौपाधिकस्यापि पदार्थतया तत्त्वंशब्दार्थयोरभेदान्वयोपपादकश्रुतिविरोधापत्तेरित्यर्थः । **विशेषणांशस्य परित्याग इति** । जहदजहल्लक्षणयेति शेषः । **शुद्धस्येति** । शुद्धचैतन्यस्येत्यर्थः । **त्वंपदलक्ष्येणेति** ।

## नीलकण्ठी.

ब्रह्मवादिनां सिद्धान्ताभिप्रायेण । नैयायिकमते तस्यासंमतत्वात् । नैयायिकरीत्या तु 'सोयं देवदत्तः' इत्यादौ 'तत्तांशस्येदानीमसंभवात् हानम्' इदंतांशस्य संभवाद्-हानमिति जहदजहल्लक्षणामाचक्षते । परे तु 'घटो नित्यः' इत्यादौ घटत्वस्य 'सोऽयं देवदत्तः' इत्यादौ तत्तांशस्योपलक्षणतया भाने न किंचिद्बाधकमिति किं जहदजहल्लक्षणयेति वदन्ति । गौण्या वृत्त्यन्तरत्वं निराचष्टे—**गौण्यपीति** । ननु 'गङ्गायां घोषः' इत्यत्र तीरे शक्यस्य प्रवाहस्येव 'अग्निर्माणवकः' इत्यादौ माणवके शक्यस्याग्नेः साक्षात्संबन्धो न संभवतीति कथं लक्षणया निर्वाह इत्यत आह—**लक्ष्यमाणेति** । लक्ष्यमाणो यो गुणः शुचित्वादिः तत्संबन्धरूपा इत्यर्थः । अयमभिप्रायः—शक्यसंबन्धो हि लक्षणा । स च क्वचित् साक्षात्संबन्धः । क्वचित्परंपरासंबन्धः । एवंच शक्यस्याग्नेः स्वनिष्ठशुचित्ववत्त्वसंबन्ध एव लक्षणेति । आलङ्कारिकाः पुनरेवमाहुः 'तीरे घोषः' इति प्रयोगे स्वायत्ते 'गङ्गायां घोषः'

## भास्करोदयाख्यव्याख्या.

लक्षणया त्वंपदोपस्थाप्यशुद्धचैतन्येनेत्यर्थः । **ऐक्यं ब्रुवतां ब्रह्मवादिनामिति** । अत्र ब्रह्मवादिनामिति विशेषणादितरेषां द्वैतवादिनामवास्तविकब्रह्मवादित्वसूचनाद्द्वैतमताभिमानो ध्वनितः । **तस्यासंमतत्वादिति** । जीवपरब्रह्मणोरैक्यस्यानभिप्रेतत्वादित्यर्थः । मोक्षदशायां जीवपरब्रह्मणोः साम्यबोधकतया श्रुतिसमन्वयं भेदवादिनो नैयायिकशिरोमणयः स्वमते इच्छन्तीति न श्रुतिविरोधस्तन्मत इति बोध्यम् । **हानम्** । त्यागः । **इदन्तांशस्य संभवादहानमिति** । सन्निकृष्टत्वरूपेदन्तांशस्य देवदत्ते चक्षुःसंयुक्ते परोक्षत्वरूपतत्तांशस्यासंभवादभेदान्वयानुपपत्तिर्लक्षणाबीजमिति भावः । **जहदजहल्लक्षणामिति** । जहतीति जहत् कर्तरि शतरि (?)रूपं स्वार्थैकदेशकर्मणः शेषत्वेनान्वयः । न जहतीत्यजहत् । कर्मधारयोत्तरकर्मधारये निष्पन्नादस्माद्वाच्यैकदेशत्यागेनैकदेशान्वय इत्यर्थलाभ इति बोध्यम् । स्वोत्प्रेक्षितार्थं दर्शयति—**परेत्वित्यादि—वदन्तीत्यन्तेन** । घटोनित्य इति वाक्ये घटत्वविशिष्टघटेनित्यत्वान्वयानुपपत्त्या घटत्वोपलक्षकत्वं घटपदस्य यथा, तथा सोऽयं देवदत्त इति वाक्ये तच्छब्दस्य तत्तोपलक्षकत्वं तेन तद्वैशिष्ट्याभावेनाभेदान्वयो न बाधित इति प्रयोजनाभावात्तदङ्गीकारो विफल इति भावः । उत्तरग्रन्थमवतारयितुमाशङ्कते—**नन्विति** । **लक्ष्यमाण इति** । गृह्यमाण इत्यर्थः । **शुचित्वादिरिति** । आदिना तेजःपुञ्जायमानत्वादिपरिग्रहः । **क्वचित्साक्षात्संबन्ध इति** । साक्षात्संबन्ध एव क्वचिदित्यन्वयः । तेन गङ्गायां घोष इत्यादौ न संयुक्तसमवायमादाय तीरत्वादौ लक्षणया लक्ष्यतावच्छेदके न लक्षणेति सिद्धान्तव्याकोपः । **क्वचित्परम्परासंबन्ध इति** । अग्निर्माणवकः सिंहो माणवक इत्यादावित्यर्थः । अग्निर्माणवकइत्यत्र परम्परासंबन्धमन्वाचष्टे—**एवंचेति** । एवं स्वनिष्ठशूरत्ववत्त्वसंबन्धेन सिंहपदशक्यार्थसंबन्धस्य माणवके सत्त्वाचेति बोध्यम् । अतिरिक्तां व्यञ्जनावृत्तिं दूषयितुं तदङ्गीकुर्वतामालङ्कारिकाणां मतमनुवदति—**आलङ्कारिकाः पुनरेवमाहुरिति** । **स्वायत्त इति** ।

व्यञ्जनापि शक्तिलक्षणान्तर्भूता शब्दशक्तिमूला अर्थशक्तिमूला च अनुमानादिना

## नीलकण्ठी.

इत्यनन्विताभिधानं शैत्यपावनत्वादिप्रतीत्यर्थम् । नच सा प्रतीतिर्लक्षणयाऽप्युपपद्यते । केवलतीरलक्षणया एवानुपपत्तिपरिहारे शैत्यपावनत्वादिविशिष्टलक्षणायां मानाभावात् । तस्माद्व्यञ्जनावृत्तिरवश्यमङ्गीकर्तव्येति । तन्मतं निरस्यति—**व्यञ्जनापीति । शक्तिलक्षणान्तर्भूतेति** । अयं भावः—व्यञ्जके नानार्थकस्थले 'दूरस्था भूधरा रम्याः' इत्यादौ भूधरशब्देन पर्वतानामिव राज्ञामपि शक्त्यैव प्रतीतिः संभवति । 'गङ्गायां घोषः' इत्यादौ तु शैत्यपावनत्वादिविशिष्टतीरप्रतीतिरपि लक्षणासाम्राज्यादेव । तत्र लक्षणाकल्पिकायाः तात्पर्यानुपपत्तेरेव सद्भावात् किमतिरिक्तव्यञ्जनयेति । ननु शब्दशक्तिमूलाया व्यञ्जनाया अन्यथासिद्धत्वेऽपि अर्थशक्तिमूलायास्तस्या नान्यथासिद्धिः । तथाहि 'गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्' । इत्यादौ 'हे प्रिय भवद्गमनोत्तरं मम प्राणवियोगो भविष्यति । अतो न गन्तव्यम्' इत्याद्यर्थो व्यज्यते । न ह्यत्र शक्तिलक्षणाभ्यां निर्वाहः । इत्थं च व्यञ्जनाया आवश्यकतेत्यत आह—**अर्थशक्तिमूला चेति** । चस्त्वर्थे । **अनुमानादिनेति** । अनुमानप्र-

## भास्करोदयाख्यव्याख्या.

स्वाधीने इत्यर्थः । **अनन्विताभिधानमिति** । अन्वयित्वाभावकथनमित्यर्थः । **शैत्यपावनत्वादिप्रतीत्यर्थमिति** । गङ्गाशब्दस्य तीरलक्षकत्वे गङ्गासामीप्यसंबन्धितीररूपार्थबोधाच्छैत्यपावनत्वादिवैशिष्ट्यं तीरे व्यज्यत इति व्यञ्जनावृत्तिरावश्यिकीति तेषामाकूतम् । नैयायिकः शङ्कते—**नचेति । लक्षणयाऽप्युपपद्यत इति** । अन्वयानुपपत्तिमूलिकयेत्यादिः । **मानाभावादिति** । तात्पर्यानुपपत्तेर्लक्षणाबीजत्वमनङ्गीकृत्येदम् । उपसंहरति—**तस्मादिति** । लक्षणया शैत्यपावनत्वादिप्रतीतेरसंभवादित्यर्थः । **तन्मतम्** । आलङ्कारिकमतम् । तन्मतनिरासकतात्पर्यं वर्णयति—**अयं भाव इति** । 'दूरस्था भूधरा रम्याः समीपस्थाश्च वर्वराः[१]' इत्यादौ दूरस्थरम्यत्वेन समीपस्थवर्वरत्वेन च साम्याद्भूधरशब्देन राजानोऽपि व्यज्यन्ते । 'राजसेवा मनुष्याणामसिधारावलेहनम्' । इत्यत्रानवस्थितचित्तकत्वाद्दूरस्थरम्यत्वमिति वदतः शक्त्याऽन्यथासिद्धिं दर्शयति—**नानार्थेत्यादिना** । एतेन सैन्धवादौ शक्त्यैव तत्तदर्थबोधः । तत्तात्पर्यज्ञानादिति सिद्धम् । **साम्राज्यादेवेति** । माहात्म्यादेवेत्यर्थः । **तात्पर्यानुपपत्तेरेव सद्भावादिति** । शैत्यपावनत्वादिविशिष्टतीराधिकरणकघोषतात्पर्येण प्रयुक्तवाक्यात्तथाविधतीररूपार्थबोधे तत्तात्पर्यानुपपत्तिरेव बीजमिति भावः । पुनरावश्यकतामाशङ्कते—**नन्विति । शब्दशक्तिमूलाया इति** । शब्दशक्तिः मूलं यस्या इति बहुव्रीहिः । शब्दस्य गङ्गाशब्दस्य प्रवाहे शक्तेः शैत्यपावनत्वादेः प्रवाहवृत्तित्वात्तच्छक्तेः शब्दस्य तस्यैव व्यज्यमानत्वादियं शब्दशक्तिमूलेत्यभिधीयत इति भावः । **अर्थ-**

---

१ वर्वरो मूर्खः । सच समीपस्थ एव कथंचिदुपकरोति, सेवाकृत्येषु ।

अन्यथासिद्धा ॥ तात्पर्यानुपपत्तिर्लक्षणाबीजम् ॥ तत्प्रतीतीच्छया उच्चरितत्वरूपता-

## नीलकण्ठी.

कारस्तु—'इयं मदीयगमनोत्तरकालिकप्राणवियोगवती । विलक्षणशब्दप्रयोक्तृत्वात्' इत्यादिरूपः । आदिना संभावनादिपरिग्रहः । उत्कटैकतरकोटिकसंशयः **संभावना** । औत्कट्यं च विषयताविशेषः । यदि पुनरानुभविकलोकानां स्वरसवाही 'शब्दादमुमर्थं प्रत्येमि' इत्यनुभवः, तदा वैयञ्जनकी प्रतीतिः गीर्वाणगुरूणामप्यशक्यवारणेति व्यञ्जनासिद्धिरप्रत्यूहैवेति मन्तव्यम् । अन्वयानुपपत्तेर्लक्षणाबीजत्वे 'यष्टीः प्रवेशय' इत्यादौ लक्षणानुपपत्तिः । तात्पर्यानुपपत्तेस्तथात्वे तु तस्यास्तत्रापि सत्त्वेन यष्टिपदस्य यष्टिधरे लक्षणा संभवतीत्याशयेनाह—**तात्पर्यानुपप-**

## भास्करोदयाख्यव्याख्या.

**शक्तिमूलाया इति** । अर्थस्य तात्पर्यविषयीभूतार्थस्य शक्तिः तात्पर्यविशेषबोधकतारूपा सैव मूलं यस्या इत्यर्थः । अर्थशक्तिमूलां तामुदाहरति—**तथाहीति** । **गच्छेत्यादि** । इयं च स्वीया प्रौढा च 'स्वामिन्येवानुरक्तेति' तल्लक्षणात् । अनुरागप्रकर्ष उत्तरार्धेन द्योत्यते । पूर्वार्धेन प्रौढत्वमिति बोध्यम् । मरणरूपार्थ एव गमनाभावार्थबोधक इति तन्मूलकात्तादृशार्थव्यञ्जनादिति भावः । अर्थशक्तिमूलाया अनन्यथासिद्धिं स्पष्टयति—**नह्यत्रेत्यादिना** । अयं भावः । इह जन्मपदस्य न गमनाभावे शक्तिर्न वा जन्मपदशक्यमरणसंबन्धमादाय गमनाभावे लक्षणाऽतात्पर्यार्थत्वादिति । सिद्धान्तयति—**इत्थंचेति** । शक्तिलक्षणाभ्यामनिर्वाहत्वे चेत्यर्थः । अर्थशक्तिमूला चेत्यत्र चस्य समुच्चयार्थत्वे उभयोरनुमानादिनाऽन्यथासिद्धत्वं दुर्निरूपमिति त्वर्थत्वेन व्याख्यायते—**चस्त्वर्थ इति** । **इत्यादिरूप इति** । यन्नैवं तन्नैवं तथा 'गच्छ गच्छसि चेत्कान्त मा विशङ्कस्व मत्कृते । त्वयार्जितानि भोग्यानि भोक्ष्येऽहं भाग्यशालिनी' इति व्यतिरेकदृष्टान्तपरिग्रहः आदिपदमहिम्नेति बोध्यम् । **उत्कटैकतरकोटिकः संशयः संभावनेति** । तेन स्थाणुर्वेत्यादिरूपस्य संशयत्वेऽपि न संभावनात्वं विरुद्धोभयकोटिकत्वादिति भावः । स्वस्वानुभवानुसारेण पदार्थप्रौढ्यं मत्वाऽर्थाङ्गीकारमादर्शयति—**यद्यपीत्यादिना** । स्वरसवाहीत्यनुभवविशेषणम् । **अमुमर्थं** व्यज्यमानमरणरूपार्थं **प्रत्येमि** प्रतीत्याश्रयः । **गीर्वाणगुरूणामप्यशक्यवारणेति** । **यथा** प्रत्यक्षेऽप्यनुमिनोमीत्येव स्वरसवाहितर्करसिकानां प्रत्ययः । 'प्रत्यक्षाकलितमप्यर्थमनुमानेनैव बुभुत्सते तर्करसिका' इति मणिकारोक्तेरेवं व्यञ्जनानुभवाद्व्यञ्जनापि शक्यवारणा गुरूणां नेत्यर्थः । षष्ठ्यर्थः कर्तृत्वं । **अप्रत्यूहा** अनिवार्या । तल्लक्षणं मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसंबन्धासंबन्धसाधारणं प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धसंस्कारविशेषो व्यञ्जनेति स्पष्टं मञ्जूषायाम् । सिंहावलोकनन्यायेन तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वं द्रढय्य तात्पर्यानुपपत्तिमूलिकया लक्षणयाऽन्यथासिद्धिं द्रढयितुमाह—**अन्वयेत्यादि** । **लक्षणानुपपत्तिरिति** । यष्टिकर्मकप्रवेशनरूपान्वयस्य सद्भावादिति शेषः । **तथात्वेत्विति** । लक्षणायां बीजत्व इत्यर्थः । भोजनकाले तथाप्रयोगात्तदनुपप-

त्पर्यज्ञान च वाक्यार्थज्ञाने हेतुः॥ नानार्थानुरोधात्॥ प्रकरणादिकं तात्पर्यग्राहकम्

## नीलकण्ठी.

**त्तिरिति । तत्प्रतीतीति** । तीरादिरूपार्थप्रतीतीत्यर्थः । **नानार्थेति** । 'सैन्धवमानय' इत्यादिनानार्थकस्थले सैन्धवपदस्य अश्वे लवणे च शक्तेः तुल्यतया शाब्दबोधे तात्पर्यग्रहस्य कारणत्वमन्तरा न नियतकाले तत्तद्बोधोपपत्तिरिति तत्र तत्कारणत्वस्यावश्यकत्वे तदनुरोधेन सर्वत्र तदावश्यकतेति भावः । नच मौनिश्लोकादौ शाब्दबोधानुपपत्तिः । तत्र निरुक्ततात्पर्यस्य असत्त्वादिति वाच्यम्। तात्पर्यस्य तत्तत्प्रतीतीच्छारूपत्वपर्यवसानेन तत्र तादृशतात्पर्यसत्त्वेनादोषात्। नच तथापि तत्तत्प्रतीतीच्छारहितशुकाद्युच्चारितवाक्यादपि शाब्दबोधस्यानुभविकतया तत्रानुपपत्तेः परिहारासंभव इति शङ्क्यम्। तत्रेश्वरीयेच्छामादायैवानुपपत्तेः परिहारसंभवादित्यलमनल्पजल्पनेन । **प्रकरणादिकमिति** । आदिना 'सशङ्ख-

## भास्करोदयाख्यव्याख्या.

त्तिरेव तद्बीजत्वेनैष्टव्यं ते इति सूचितम्। गङ्गायामित्यादावपि तात्पर्यानुपपत्तिरेव तीरलक्षिकेत्याह—**तीरादीत्यादि । नानार्थेतीति** । एकार्थकजन्यबोधे शक्तिज्ञानादेरेव कारणत्वं न तात्पर्यज्ञानस्य तद्ग्राहकप्रकरणादेरनपेक्षणादिति चेदत आह—**सैन्धवमानयेत्यादि** । आदिना हर्यादिपरिग्रहः । **नियतकालं तद्बोधोपपत्तिरिति** । एतत्पदजन्यबोधविषय एतत्काले अयमेवेति बोधानापत्तिरित्यर्थः । **तत्र** नानार्थकस्थले । **तत्कारणत्वस्य** । तात्पर्यज्ञानकारणत्वस्य । **तदनुरोधेन** । एकत्र सिद्धा युक्तिरन्यत्रापीति न्यायानुरोधेन । **सर्वत्र** एकार्थकानेकार्थसामान्ये । **तदावश्यकता** तात्पर्यज्ञानस्य कारणत्वावश्यकता । **भावः** मूलतात्पर्यमिति सकलार्थः । उक्तलक्षणलक्षिततात्पर्याव्याप्तिपूर्वकशाब्दाव्याप्तिमाशङ्कते—**नचेति । निरुक्ततात्पर्यस्येति** । तत्प्रतीतीच्छयोच्चरितत्वरूपस्येत्यर्थः । **असत्त्वादिति** । विशेष्याभावप्रयुक्तविशिष्टाभावाङ्गीकारादिति भावः । **इच्छारूपत्वपर्यवसानेनेति** । अयं भावः । इच्छां विनोच्चारणासंभवेनेच्छैव तात्पर्यरूपा अनुच्चारणे शब्दाभावाच्छब्दोच्चारणे इच्छाया अनुस्यूतत्वादिति । **तत्तत्प्रतीतीच्छारहित इति** । तत्तदर्थप्रतीतीच्छारहित इत्यर्थः । **शुकाद्युच्चारित इति** । आदिना सारिकाबालकादिपरिग्रहः । **तत्रानुपपत्तेरिति** । शुकाद्युच्चारितवाक्ये उच्चरितत्वरूपविशेष्यमात्रासत्त्वेऽप्यर्थज्ञानाभावात्तत्प्रतीतीच्छारूपविशेषणाभावप्रयुक्तविशिष्टतात्पर्याभावाच्छाब्दानुपपत्तेरिति भावः । **तत्रेति** । शुकाद्युच्चारितवाक्ये इत्यर्थः । **ईश्वरीयेच्छामादायैवेति** । पारम्पर्येणेत्यादि । **सिद्धान्तिनस्तु**—तत्प्रतीतिजननस्वरूपयोग्यत्वे सति तदन्यमात्रप्रतीतीच्छयानुच्चरितत्वस्य तल्लक्षणत्वात् मौनेः श्लोकादौ अर्थज्ञानशून्यपुरुषोच्चरितवेदादौ शुकाद्युच्चरितशब्दादौ चार्थप्रतीतिजननस्वरूपयोग्यत्वात्तदन्यप्रतीतीच्छाभावप्रयुक्तोच्चरितत्वाभावेन तात्पर्यसद्भावादन्वयबोध इत्याहुः । प्रथमदलेनैवोक्तलक्षणत्वे द्वितीयदलं सैन्धवमानयेति वाक्यस्य लवणानयनतात्पर्यात्प्रयोगस्तदा सैन्धवपदेऽश्वप्र-

द्वारमित्यादौ पिधेहीति शब्दाध्याहारः ॥ ननु अर्थज्ञानार्थत्वात् शब्दस्यार्थमवि-

## नीलकण्ठी.

चक्रो हरिः पूज्यः' इत्यादौ हरिशब्दस्य भगवति तात्पर्यनिर्णायकस्य 'सशङ्खचक्रः' इति विशेषणादेः परिग्रहः । कथं प्रकरणादेस्तात्पर्यग्राहकत्वमिति चेत् इत्थम् 'इदं सैन्धवपदं लवणबोधेच्छयोच्चरितम्, भोजनप्रकरणे उक्तत्वात्' इत्यादिरीत्या गृहाण ।

प्रभाकरमतं निराकरिष्यमाणः स्वसिद्धान्तं दर्शयति—**द्वारमिति** । **अर्थज्ञानार्थत्वाच्छब्दस्येति** । शब्दज्ञानस्य अर्थज्ञानफलकत्वादित्यर्थः । एतावता प्रथमत एवार्थानुसंधाने लाघवमिति सूचितम् । किं च 'अर्थं बुद्ध्वा वाक्यरचना' इति न्यायेनार्थज्ञानमन्तरा आकाङ्क्षितशब्दानुसंधानरूपशब्दाध्याहारस्यैवासंभवेन प्रथमतः अर्थाध्याहारस्यैवावश्यकतेत्याह—**अर्थमपीति** । यथा कथंचिदुपस्थितपदार्थानां शाब्दबोधानुदयेन पदजन्यत्वस्योपस्थितिविशेषणताया आवश्यकतया

## भास्करोदयाख्यव्याख्या.

तीतिजननस्वरूपयोग्यत्वात्तद्बोधवारणाय मात्रपदमुभयबोधप्रतीतीच्छयोच्चरितवाक्यजन्यशाब्दबोधसंग्रहायेति बोध्यम् । **स्वतन्त्रास्तु** । स्वीयजातीयवाक्यप्रयोगे तत्प्रतीतीच्छयोच्चरितत्वरूपं तात्पर्यमस्त्येव । भाषान्तरीयान्योच्चारितवाक्यानुपूर्वीसजातीयानुपूर्वीकवाक्यप्रयोगे तद्वाक्यप्रयोक्तृपुरुषतात्पर्यस्यैव कारणत्वमित्याहुः । **सशङ्खचक्रो हरिः पूज्य इत्यदाविति** । 'शूलपाणिः सदा भव्यं वृषाकपिरनुत्तमः । पार्वत्या सुसमाश्लिष्टो मह्यं देयान्महेश्वरः' इति । 'वृषाकपाय्यावस्माकमैहिकामुष्मिकं फलम् । विदधेतां विशेषेण शैववैष्णवशक्तिके'त्याद्यादिपदग्राह्यं बोध्यम् । **भोजनप्रकरण उक्तत्वादिति** । ननु भोजनप्रकरण एव ग्रामान्तरगमनतात्पर्येण सैन्धवमानयेति प्रयोगे शाब्दबोधानुपपत्तिरितिचेन्न । तद्बोधकविशेषणस्य क्रियाविशेषस्य तत्परिचायकस्यैव वा तद्बोधनैयत्यादिति ध्येयम् । **प्राभाकरमतमिति** । मूले न चेत्याक्षिप्तार्थाध्याहाररूपं मतमिति बोध्यम् । **सिद्धान्तमिति** । मणिकारसिद्धान्तमित्यर्थः । **मूले द्वारमित्यादौ पिधेहीति शब्दाध्याहार इति** । आदिना कूपादिसंग्रहः । पिधेहीत्यनेन पिधेहीतीत्यादीति बोध्यं तेन निवर्तस्वेत्याद्यध्याहार इति बोध्यम् । **अर्थज्ञानफलकत्वादिति** । अर्थज्ञानफलजनकत्वादित्यर्थः । **प्रथमत एवेति** । शब्दज्ञानात्पूर्वत एवेत्यर्थः । **अर्थानुसंधान इति** । अर्थोपस्थितावित्यर्थः । युक्तिमप्याह—**किंचेति** । **अर्थं बुध्वा वाक्यरचनेति** । रचनेत्यनेन आकाङ्क्षिततत्तच्छब्दयोजनया तद्वाक्यप्रयोगलाभाच्छुकादिवाक्यप्रयोगस्यार्थबोधपूर्वकत्वाभावेऽपि न न्यायविरोधः । **अर्थज्ञानमन्तरा इति** । पिधानादिरूपार्थज्ञानं विनेत्यर्थः । **आकाङ्क्षितशब्दानुसंधानरूपेति** । अर्थद्वारकाकाङ्क्षाविशिष्टशब्दोपस्थितिरूपेत्यर्थः । **आहेति** । प्राभाकर इति शेषः । **यथाकथंचिदुपस्थितपदार्थानामिति** । प्रत्यक्षेण स्मरणादिना वोपस्थितपदार्थानामित्यर्थः । **शाब्दानुदयेनेति** । सुरभिचन्दनमित्यादिशब्दजन्यबोधे सुरभ्यंशस्यालौकिकप्रत्यासत्त्या भानेऽपि

ज्ञाय शब्दाध्याहारासंभवादर्थाध्याहार एव युक्त इति चेत् ॥ न ॥ पदविशेषजन्यपदार्थोपस्थितेः शाब्दज्ञाने हेतुत्वात् ॥ अन्यथा 'घटः कर्मत्वमानयनं कृतिः' इत्यत्रापि शाब्दज्ञानप्रसङ्गात् ॥

पङ्कजादिपदेषु योगरूढिः । अवयवशक्तिर्योगः समुदायशक्ती रूढिः । नियत-

## नीलकण्ठी.

तादृशोपस्थितिसंपत्तये शब्दाध्याहार एव अनायत्त्या अनुसर्तव्य इत्याह—पदविशेषेति । विशेषपदस्यापि प्रयोजनं दर्शयितुम् 'घटः कर्मत्वम्' इत्याद्यनुधावनम् । तत्र कर्मत्वादिपदजन्यकर्मत्वाद्युपस्थितेः सत्त्वेऽपि घटपदोत्तरामादिपदजन्यकर्मत्वाद्युपस्थितेरसत्त्वेन न सिद्धान्तिमते शाब्दबोधप्रसङ्ग इति भावः । पदविशेषजन्येत्यत्र वृत्त्या पदविशेषजन्येत्यपि बोध्यम् । तेन 'घटमानय' इत्यादौ घटादिपदादाकाशादेरुपस्थितावपि न शाब्दबोध इति दिक् ।

यद्यपि पदं तावच्चतुर्विधम्—यौगिकं, रूढं, योगरूढं यौगिकरूढं, चेति । योगोऽवयवशक्तिस्तन्मात्रेणार्थप्रतिपादकमाद्यम् । यथा पाचकादिपदम् ।

रूढिः—समुदायशक्तिः । तन्मात्रेणार्थप्रतिपादकं द्वितीयम् । तथा गवादिपदम् । योगरूढिभ्यां परस्परसहकारेणार्थप्रतिपादकं तृतीयम् । यथा पङ्कजादिपदम् । यौगिकं च तद्रूढं चेति व्युत्पत्त्या योगेन रूढ्या च परस्परासहकारेणार्थप्रतिपादकं चतुर्थम् । यथा उद्भिदपदम् । योगेन तरुगुल्मादेः रूढ्या तु यागविशेषस्य वाचकम् । तथापि योगरूढं प्रदर्श्य तत्र योगरूढ्योः स्वरूपप्रदर्शनेन तद्रीत्या । अन्यत्रापि बोद्धुं शक्यमित्यभिप्रायेण पङ्कजादिपदे योगरूढिं प्रदर्शयति—पंकजादीति । योगरूढिरिति । योगसहिता रूढिरित्यर्थः । ननु पङ्कजादिशब्देष्वपि योग एवास्तु तावतैव निर्वाहादित्याशङ्क्य पङ्कजशब्दस्य पद्मत्वावच्छिन्ने वृत्तिमन्तरा

## भास्करोदयाख्यव्याख्या.

न तस्य शाब्दमित्याशयः । उपस्थितिविशेषणताया इति । पदार्थोपस्थितिविशेषणताया इत्यर्थः । शब्दाध्याहार एवानुसर्तव्य इति । तेन पिधेहीत्यादिपदजन्यपिधानादिरूपोपस्थित्या द्वारकर्मकपिधानक्रियानुकूलकृतिमांस्त्वमिति शाब्दबोध इति बोध्यम् । पदविशेषेतीति । न तदर्थपदसामान्येत्यर्थः । तत्रेति । घटः कर्मत्वमित्यादिवाक्यादावित्यर्थः । अमादिपदजन्येति । आदिपदात्कर्तृत्वकरणत्वादिपरिग्रहः । कर्मत्वाद्युपस्थितिविशेषणमत्र कर्मत्वाद्युपस्थिते रामादिरूपानुपूर्वीकपदजन्यत्वाद्विभक्तिसंज्ञिकानुपूर्वीकविशेषपदजन्येति बोध्यम् । शाब्दबोधप्रसङ्ग इति । नेति योजना । घटकर्मकानयनानुकूलकृतिमानिति शाब्दबोधप्रसंगो नेत्यर्थः । आकाशादेरुपस्थितावपीति । समवायेनेत्यादिः । शक्तिप्रसङ्गादवयवशक्तिसमुदायशक्तिभ्यां शक्तिविभागे निर्णीते परस्परसहकारासहकाराभ्यां योगरूढयौगिकरूढयोरपि संग्रहाच्चतुष्टयपदप्रसिद्धिर्नानुपपन्नेति न मूलासंगतिरितीत्यावेदयितुं पूर्वमाक्षिपति—यद्यपीति । अन्यत्रापीति । योगरूढयौगिकरूढयोरपीत्यर्थः । योग एवास्त्विति । पङ्काज्जातः पङ्कज इति

पद्मत्वज्ञानार्थं समुदायशक्तिः । अन्यथा कुमुदेऽपि प्रयोगप्रसङ्गः ॥ 'इतरान्विते शक्तिः' इति प्राभाकराः ॥

## नीलकण्ठी.

नियमेन पद्मत्वावच्छिन्नभानमनुभवसिद्धं न निर्वहतीति पद्मत्वावच्छिन्ने रूढिरावश्यिकेत्याह—**नियतेति** । नियतपद्मत्वावच्छिन्नभानानुभवे विप्रतिपन्नं प्रत्याह—**अन्यथेति** । नियतपद्मत्वावच्छिन्नभानोपयोगिसमुदायशक्त्यनङ्गीकार इत्यर्थः । **प्रयोगेति** । पङ्कजपदप्रयोगेत्यर्थः ।

यद्यपि 'कार्यान्विते शक्तिः' इति प्रभाकरमतम् । तथापि सिद्धार्थपरवाक्येऽपि व्युत्पत्तेर्व्यवस्थापितत्वेन तत्साधारण्याय तन्मतं परिष्कृत्य दर्शयति—**इतरान्वित इति** । अन्विते शक्तिः इति तु निष्कर्षः । अयमभिप्रायः—कथंचित् उपस्थितपदार्थानां शाब्दबोधवारणाय तत्तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्यतदुपस्थितित्वेन हेतुतायाः कल्पनीयतया अन्वयांशेऽपि शक्तिरपेक्षिता । अन्यथा तादृशसामान्यकार्यकारणभावभङ्गापत्तेः । नच संसर्गविषयताभिन्नतत्तद्विषयताशा-

## भास्करोदयाख्यव्याख्या.

व्युत्पत्त्या पङ्कावधिकोत्पत्त्याश्रयत्वरूपार्थप्रतीतिरेवास्तु किमपूर्वसमुदायशक्त्यङ्गीकारेणेत्यर्थः । **नियमेन पद्मत्वावच्छिन्नभानमिति** । पङ्कजनिकर्तृत्वस्य कुमुदघासविशेषसाधारणत्वेन पङ्कजशब्देन पद्मत्वावच्छिन्नस्यैव बोधे प्रमाणाभावेन पङ्कजशब्देनेतरबोधोऽपि स्यादिति भावः । **विप्रतिपन्नं प्रतीति** । विरुद्धार्थप्रतिपत्तारं प्रतीत्यर्थः । प्राभाकरैः कार्यान्विते शक्तेः स्वीकारादितरान्विते शक्तिरिति तन्मतप्रदर्शकमूलेऽसंगतिमाशङ्कते—**यद्यपीति** । **सिद्धार्थवाक्येऽपीति** । 'अन्तर्बहिश्च यत्सर्वं व्याप्य तिष्ठति जन्तुषु । आत्मनस्तत्त्वमापन्नं सच्चिदानन्दमद्वय'मित्यादिविधिनिषेधशून्यवाक्येऽपीत्यर्थः । **व्युत्पत्तेरिति** । शक्तेरित्यर्थः । **व्यवस्थापितत्वेनेति** । मूल एव काश्यां त्रिभुवनेत्यादिग्रन्थेनेत्यर्थः । **तत्साधारण्यायेति** । सिद्धासिद्धवाक्यसाधारण्यायेत्यर्थः । **तन्मतं परिष्कृत्य दर्शयतीति** । प्राभाकरमतं निष्कृष्य दर्शयतीत्यर्थः । **अन्विते शक्तिरिति तु निष्कर्ष इति** । अन्वयस्येतरनियतत्वादितरांशोऽव्यावर्तक इति सूचनाय तुशब्द इति बोध्यम् । अत एवान्विताभिधानवादिनः प्राभाकरा इति व्यवहारो नत्वितरान्वितवादिन इति सिद्ध्यतीति हृदयम् । तन्मतसिद्धतात्पर्यार्थमाह—**अयमभिप्राय इति** । **कथंचिदुपस्थितपदार्थानामिति** । समवायादिसंबन्धोपस्थिताकाशादीनामित्यर्थः । **अन्वयांशेऽपि शक्तिरपेक्षितेति** । इतरान्वितो घटो घटपदवाच्य इत्येतादृशवृत्तिज्ञानमेव शाब्दबोधजनकं घटो घटपदवाच्य इत्याकारकस्यान्वयांशानन्तर्भावेण शक्तिग्रहस्य तथात्वे वृत्तिग्रहाविषयतया पदार्थसंसर्गस्य शाब्दबोधविषयतानुपपत्तेरन्वयांशेऽपि शक्तिरावश्यिकीति भावः । **अन्यथेति** । अन्वयांशे शक्तेरनभ्युपगमे इत्यर्थः । **तादृशसामान्यकार्यकार-**

---

१ शैवालादिकमत्र घासविशेषपदग्राह्यम्.

'अन्वयस्य वाक्यार्थतया भानसंभवादन्वयांशेऽपि शक्तिर्न कल्पनीया' इति गौतमीयाः' ॥

## नीलकण्ठी.

लिशाब्दबोधं प्रति वृत्तिज्ञानाधीनतत्तदुपस्थितित्वेन हेतुत्वमास्ताम् । तथाच अन्वयांशेपि शक्त्यनङ्गीकारेऽपि न क्षतिरिति वाच्यम् । तथा सति कार्यतावच्छेदकगौरवापत्तेः । एवंच 'अन्वितो घटो घटपदवाच्यः' इत्याकारकशक्तिज्ञानमेव शाब्दबोधप्रयोजकमिति । केचित्तु इतरान्विते शक्तिरित्यस्य कार्यान्विते शक्तिरित्यर्थमाहुः ।

सयुक्तिकं नैयायिकमतं दर्शयति—**अन्वयस्येति** । पदार्थसंसर्गस्य पदसमभिव्याहारबलादेव शाब्दबोधे भानसंभवात् तादृशसंसर्गांशेऽपि शक्तिर्न कल्पनीया इति समुदितार्थनिष्कर्षः । अयमाशयः—तद्विषयकशाब्दबुद्धिं प्रति वृत्तिज्ञानाधीनतदुपस्थितित्वेनानुगतकार्यकारणभावो न संभवति । शक्तिलक्षणोभयसाधारणस्य वृत्तित्वस्य लघुभूतस्य दुर्वचत्वात् । अपि तु तच्छक्तपदज्ञानजन्यतदुपस्थितित्वेनैका कारणता तल्लाक्षणिकपदज्ञानजन्यतदुपस्थितित्वेन च अपरा कारणता स्वीकर्तव्या । परस्परतत्तदुपस्थितिजन्यशाब्दबोधे व्यभिचारवारणाय च तत्तत्कारणाव्यवहितोत्तरत्वं तत्तत्कारणजन्यतावच्छेदककोटौ निवेशनीयम् । एवं च वृत्त्यनुपस्थापितस्यापि पदार्थद्वयसंसर्गस्य शाब्दबोधोपगमे व्यभिचाराप्रसक्त्या दर्शितद्विविधकार्यकारणभावस्य निष्प्रत्यूहतेति किमन्वयांशे शक्तिकल्पनेन ।

## भास्करोदयाख्यव्याख्या.

**णभावभङ्गापत्तेरिति** । शाब्दबोधविषयाणां यावतां वृत्तिज्ञानजन्योपस्थितिविषयावगाहित्वेनोक्तकार्यकारणभावकल्पनागौरवापत्तेरित्यर्थः । संसर्गस्यापि शाब्दबोधविषयत्वादिति तात्पर्यात् । अत एव पदार्थयोराकाङ्क्षामूलकपरस्परसंसर्गरूपान्वयांशस्य वाक्यार्थत्वेन बहिरङ्गतया पदशक्तिग्रहे तदनुपस्थितेरन्वयांशे शक्तिकल्पनं सति कुड्ये चित्रन्यायेन योगक्षेममिति केषांचिच्छङ्का समाहिता । **सामान्यतः वृत्तिज्ञानजन्येत्यादि** । क्लृप्तकारणबलादेव बहिरङ्गान्वयांशान्तर्भावेणापि शक्तिकल्पनमावश्यकमित्यभिमान इति बोध्यम् । **कार्यतावच्छेदकगौरवापत्तेरिति** । तत्तद्विषयताशालिशाब्दबुद्धित्वापेक्षया तत्तद्विषयतायां संसर्गविषयताभिन्नत्वनिवेशेन तद्घटितस्य कार्यतावच्छेदकशरीरस्य गुरुभूतस्य संभवति लघुन्यायेनान्याय्यत्वापत्तेरित्यर्थः । **आहुरिति** । अत्रारुचिबीजं तु सिद्धेऽबोध इतरांशवैयर्थ्यं च प्रागुक्तमनुसंधेयम् । **शाब्दबोधे भानसंभवादिति** । पदशक्तिग्रहकाले स्वातंत्र्येण तदनुपस्थितेरित्यपि बोध्यम् । **तादृशसंसर्गांशेऽपीति** । पदार्थद्वयसंसर्गरूपान्वयांशेऽपीत्यर्थः । **लघुभूतस्य दुर्वचत्वादिति** । अननुगतानऽतिप्रसक्तत्वेनोभयसाधारण्येनावच्छेदकधर्मरूपस्य दुःप्रतिपाद्यत्वादित्यर्थः । **कारणतेति** । स्वीकर्तव्येत्यपकृष्य पृथगन्वयः । **किमन्वयांशे शक्तिकल्पनेनेति** । अयं भावः । पदार्थद्वयसंसर्गरूपान्वयस्याकाङ्क्षाबललभ्यत्वाद्रूवादिपदानां

आकाङ्क्षा योग्यता संनिधिश्च वाक्यार्थज्ञाने हेतुः ॥ पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा ॥ अर्थाबाधो योग्यता ॥ पदानामविलम्बेनोच्चारणं संनिधिः ॥ तथाच आकाङ्क्षादिरहितं वाक्यमप्रमाणम् ॥ यथा 'गौरश्वः पुरुषो हस्ती' इति न प्रमाणम्, आकाङ्क्षाविरहात् 'अग्निना सिञ्चेत्' इति न प्रमाणम्, योग्यताविरहात् ॥ प्रहरे प्रहरे असहोच्चारितानि 'गाम् आनय' इत्यादिपदानि न प्रमाणम्, सान्निध्याभावात् ॥

आकाङ्क्षेति ॥ आकाङ्क्षादिज्ञानमित्यर्थः ॥ अन्यथा आकाङ्क्षादिभ्रमाच्छाब्दभ्रमो न स्यात् ॥ आकाङ्क्षां लक्षयति—पदस्येति ॥ योग्यतालक्षणमाह—अर्थेति ।

## निलकण्ठी.

आकाङ्क्षादिरहितपदसमुदायात् शाब्दबोधवारणाय आकाङ्क्षादेः शाब्दबोधहेतुत्वमभिहितं मूलकृता तच्च नवीनमते न निर्वहतीति तज्ज्ञानस्य हेतुतामाह—**आकाङ्क्षादिज्ञानमिति**। आदिना योग्यतापरिग्रहः। **अन्यथा** आकाङ्क्षादेः शाब्दधीहेतुत्वे। मूले—**पदस्येति**। यत्पदस्य यत्पदाभावप्रयुक्तमन्वयबोधाजनकत्वं तत्पदसमभिव्याहृततत्पदत्वमाकाङ्क्षेत्यर्थः। प्रयुक्तत्वं च 'कारणाभावात्कार्याभावः' इति प्रतीतिसाक्षिकः स्वरूपसंबन्धविशेषः। अजनकत्वान्तं परिचा-

## भास्करोदयाख्यव्याख्या.

गोत्वादिविशिष्ट एव शक्तिर्नतु तदंशेऽपि मानाभावादिति। तर्कसंग्रहग्रन्थमवतारयन् तन्न्यूनतापरिहारकतया दीपिकामप्यवतारयति—**आकाङ्क्षेत्यादिना**। **नवीनमते न निर्वहतीति**। तत्तत्कारणनिश्चयात्तन्निरूपिततत्तत्कार्यनिश्चयः तत्तत्कारणभ्रमाच्च तन्निरूपिततत्तत्कार्यभ्रम इत्यन्वयव्यतिरेकयोः क्लृप्ततया स्वरूपसतीनामाकाङ्क्षादीनां कारणत्वे प्राचां मते शाब्दभ्रमस्याकाङ्क्षाभ्रममूलकत्वाभावाच्छाब्दभ्रमोऽनुभवसिद्धो न संपद्येतेति तज्ज्ञानलाक्षणिकपरतया तन्मूलं व्याख्येयमिति तात्पर्यार्थः। **आकाङ्क्षादेश्शाब्दधीहेतुत्वे इति**। आकाङ्क्षादेः ज्ञानान्तलाक्षणिकत्वेन केवलाकाङ्क्षादेः शाब्दकारणत्वाङ्गीकार इत्यर्थः। उपकाराय तर्कसंग्रहस्थवाक्यं विवृणोति मूले—**पदस्येत्यादिना**। **यत्पदस्य** षष्ठ्यन्तराजपदस्य **यत्पदाभावप्रयुक्तं** पुरुषपदाभावप्रयुक्तं **अन्वयबोधाजनकत्वं** अन्वयबोधाऽसमर्थत्वं **तत्पदसमभिव्याहृततत्पदत्वं** राजपदसमभिव्याहृतपुरुषपदत्वमाकाङ्क्षेत्यर्थ इत्यर्थः। एवं क्रियाकारकपदयोरपि बोध्यम्। **प्रतीतिसाक्षिक इति**। प्रतीतिबोधक इत्यर्थः। **अजनकत्वान्तं परिचायकमिति**। तादृशसंबन्धार्थद्योतकमित्यर्थः। दीपिकायामाकाङ्क्षादीत्यादिपदेन योग्यतादीनामपिपरिग्रहादुक्तयोग्यतायाश्च स्वरूपत एव हेतुत्वसंभवान्मतान्तरसिद्धयोग्यतासंग्राह-

संनिधिलक्षणमाह—पदानामिति ॥ अविलम्बेन पदार्थोपस्थितिः संनिधिः ॥ उच्चारणं तु तदुपयोगितया उक्तम् ॥ गौः अश्व इति ॥ घटः कर्मत्वमित्यप्यनाकाङ्क्षोदाहरणं द्रष्टव्यम् ॥

## नीलकण्ठी.

यक्तम् । एकपदार्थेऽपरपदार्थवत्त्वं योग्यतेति मते संशयनिश्चयसाधारणतज्ज्ञानत्वावच्छिन्नं शाब्दधीहेतुः । बाधनिश्चयाभावो योग्यतेति नवीनमते तु स्वरूपसत्त्वेव योग्यता तद्धेतुरिति दिक् ।

## भास्करोदयाख्यव्याख्या.

कतया नादिपदवैयर्थ्यमित्याशयेनोभयविधयोग्यतास्वरूपमाह—**एकपदार्थेत्यादिना । एकपदार्थे** । अनुयोगित्वं सप्तम्यर्थः । अपरपदार्थवत्त्वमपरपदार्थसंबन्धः । तथाचैकपदार्थानुयोगिकापरपदार्थप्रतियोगिकः संबन्धो योग्यतेति फलितम् । **संशयनिश्चयसाधारणतज्ज्ञानत्वावच्छिन्नं** । संशयनिश्चयोभयसाधारणयोग्यताज्ञानत्वावच्छिन्नम् । योग्यतासंशयनिश्चयज्ञानाभ्यां शाब्दधीसंशयनिश्चयोत्पत्तेरनुभवसिद्धत्वात् । **स्वरूपसत्त्वेव** । नहि बाधनिश्चयाभावज्ञानं योग्यता वह्निना सिञ्चतीत्यादौ सेचनक्रियायां वह्निकरणत्वाभावरूपयोग्यताभ्रमात्सेचनं वह्निकरणकं तदितरकरणकं वेति भ्रमनिर्वाह इत्यखिलतात्पर्यार्थः । **अथाकाङ्क्षादिस्वरूपं किंचिद्विविच्यते** । आकाङ्क्षायाः जिज्ञासापरपर्यायत्वात्तस्याः परस्परार्थनिष्ठत्वेऽपि पदनिष्ठत्वोक्त्या द्वारं पुष्पेभ्य इत्यादौ पिधेहि स्पृहयतीत्यादिशब्दाध्याहारः स्वमतसिद्धान्तसिद्धः सिद्धो भवति । अन्यथा 'स्पृहेरीप्सित' इति संप्रदाननिमित्तकचतुर्थीविधानानुपपत्तिः 'किं पश्यसि मुहुः सीते वने त्वं सर्वतो दिशः । पुष्पेभ्यो वापि चान्येभ्यस्तान्दातुमहमुत्सहे' इत्यादौ तदध्याहारं विना तदनुपपत्तेः । अर्थाध्याहारश्च न युक्तिसह इति प्रागेव प्रपञ्चितत्वात् । 'स्पृहेरीप्सित' इति सूत्रवृत्तौ स्पृहयतेः प्रयोग इत्यादेः स्पष्टमुपलब्धेश्च । इयंच क्वचिदुत्थिता क्वचिदुत्थाप्या । द्वारमित्यादावाद्या, उदयति चन्द्र इत्यादावपरा । ननु उदयतिना अन्वयबोधात्कथं तत्कुमुदवन्ध्वाकाङ्क्षेति चेत्तात्पर्यवशात्तद्बोधजनकतदाकाङ्क्षायाः स्वीकारात् । अत एव राज्ञः पुत्रेणोत्थिताकाङ्क्षत्वात् तेनैवान्वयबोधेऽपि तात्पर्यवशात्क्वचित्पुरुषेणैवान्वयबोधः । अत एव अन्वयबोधसमर्थत्वे सत्यजनिततात्पर्यविषयान्वयबोधत्वमाकाङ्क्षेति केचित् । परेतु पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षेत्याहुः । तेन विशेषजिज्ञासाविषयत्वेनोभयविधाकाङ्क्षायाः संग्रहात् । तात्पर्यस्याकाङ्क्षासांगत्येऽपि न दोषः । राजपुरुषयोर्विशेषजिज्ञासाविषयत्वयोग्यत्वमादायान्वयबोधः तात्पर्यस्य तु परिचायकत्वमात्रत्वं न तु तदङ्गत्वम् मानाभावात् इति । नव्यास्तु पदविशेषजन्यपदार्थोपस्थितिरूपासत्तिरन्वयबोधाङ्गम् । तेन घटः कर्मत्वमित्यादितो नान्वयबोधः आसत्त्यभावादतः आकाङ्क्षायाः न कारणत्वं किंतु शाब्दजनकोपस्थितिपरिचायकत्वमात्रमित्याहुः । नन्वर्थाबाधस्य योग्यतारूपत्वे कामुकप्रयुक्तात् 'हत्वा लोचनविशिखैर्गत्वा कतिचित्पदानि पद्माक्षी । जीवति युवा

**वाक्यं द्विविधम्—वैदिकं, लौकिकं च ॥ वैदिकमीश्वरोक्तत्वात् सर्वमेव प्रमाणम् ॥ लौकिकं त्वाप्तोक्तं प्रमाणम् ॥ अन्यदप्रमाणम् ॥ वाक्यार्थज्ञानं शाब्दज्ञानम् ॥ तत्करणम् शब्दः ॥ इति शब्दप्रमाणम् ॥ * ॥**

वाक्यं विभजते—वाक्यमिति ॥ वैदिके विशेषमाह—वैदिकमीश्वरोक्तत्वादिति ॥ ननु वेदस्यानादित्वात् कथमीश्वरोक्तत्वमितिचेत् न 'वेदः पौरुषेयः वाक्यसमू-

## नीलकण्ठी.

मीमांसकः शङ्कते—**नन्विति** । वेदस्येश्वरोक्तत्वं अनुमानेन व्यवस्थापयति—**वेद इति** । ननु 'अष्टादशपुराणानां कर्ता सत्यवतीसुतः' इत्यादिप्रमाणबलेन

## भास्करोदयाख्यव्याख्या.

न वा किं भूयोभूयोऽवलोकयती'ति बाधितार्थकवाक्यात् कथं सकलानुभवसिद्धो बोधः योग्यताविरहादिति चेन्न । योग्यताभ्रमादेव तद्बोधात् । तथाच विदुषामपि भ्रान्तत्वापत्तिरिति चेन्न । इदं भ्रान्तप्रयुक्तं वाक्यमिति जानतो भ्रान्तिज्ञस्य न भ्रान्तत्वं योग्यताभ्रमाभावात् । सति योग्यताभ्रमे शाब्दभ्रमस्य सर्वानुभवसिद्धत्वात् । नच वाक्यार्थस्यापूर्वत्वाङ्गीकर्तृमते तत्तत्पदार्थविषयकयोग्यताज्ञानस्य शाब्दबोधात्प्रागसत्त्वात्कथं कारणत्वमिति वाच्यम् । वाक्यार्थविषयतत्तत्पदार्थस्मरणेन तस्य कारणत्वसंभवात् । वह्निना सिञ्चतीत्यतो न शाब्दप्रमा । सेके वह्निकरणकत्वाभावरूपबाधप्रतिसन्धानादेव तदनापत्तेर्योग्यतायाः न कारणत्वावश्यकतेत्याहुर्नव्याः । यद्धर्मावच्छिन्ननिष्ठाभावप्रतियोगितानवच्छेदकधर्मावच्छिन्नान्वयित्वं तद्धर्मावच्छिन्ने तद्योग्यतेति निष्कृष्टोऽर्थः । ननु पदानामविलम्बोच्चारणरूपसन्निध्यङ्गीकारे काव्यादौ पदान्तरव्यवधानेनार्धमात्राकालव्यवायाधिककालकृतविलम्बोच्चारणविषयत्वाच्छाब्दानुपपत्तिरिति चेन्न पूर्वोत्तरतत्तत्पदाध्याहारेण तत्तदन्वयबोधस्य शास्त्रकारसंमतत्वात् । अथात्रार्थाध्याहार एव युक्तोऽर्थस्यैवाकाङ्क्षितत्वादर्थान्वयेनैव वाक्यार्थसमाप्तेश्च शब्दमजानतोऽपि प्रकरणचेष्टादिभिरर्थाध्याहाराच्छाब्दबोधस्यानुभविकत्वादिति चेन्न । पदजन्यपदार्थोपस्थितेः शाब्दबोधहेतुत्वात् । अन्यथा द्वारं कर्मत्वं पिधानं कृतिरित्यतोऽन्वयबोधप्रसङ्गः क्रियायाः कर्मणश्चोपस्थितेस्तुल्यत्वात् । ननु साकाङ्क्षितार्थकयोः क्रियाकारकपदयोरेवेतरेतरान्वयानुपपत्त्याऽध्याहारेऽपि श्लोकादौ विशेषणानां कथमध्याहारोऽनाकाङ्क्षकत्वादिति चेन्न । उत्थाप्याकाङ्क्षया तेषां साकाङ्क्षत्वात् । केचित्त्वासत्तिभ्रमाच्छाब्दबोध इति तदसत् । शाब्दप्रमानुपपत्तेः । अस्तु भ्रम इति चेत् । आसत्तिं शब्दमधिकृत्य मन्वानस्य सर्वानुभवसिद्धप्रमात्मकबोधनिर्वाहात् । मम तथा कल्पनं सर्वविरुद्धमास्तामधिकं शब्दमणौ द्रष्टव्यम् । यद्यपि तात्पर्यज्ञानं नानार्थादौ क्वचित्कारणं तथापि शाब्दमात्रे कारणत्वानावश्यकत्वादिहोपेक्षितमिति बोध्यम् । **मीमांसकः शङ्कत इति** । अध्वरमीमांसकः शङ्कते इत्यर्थः । तेषां मते नित्यत्वेन निरस्तस-

हत्वात् भारतादिवत्' इत्यनुमानेन पौरुषेयत्वासिद्धेः॥ नच स्मर्यमाणकर्तृत्वमुपाधिः॥ गौतमादिभिः शिष्यपरम्परया वेदेऽपि संकर्तृत्वस्मरणेन साधनव्यापकत्वात्॥ 'तस्मात् तपस्तेपानात् त्रयो वेदा अजायन्त' इति श्रुतेः॥

ननु वर्णा नित्याः 'स एवायं गकारः' इति प्रत्यभिज्ञाबलात्। तथा च कथं वेदस्यानित्यत्वमिति चेत्॥ न॥ 'उत्पन्नो गकारो नष्टो गकारः' इत्यादिप्रतीत्या-

## नीलकण्ठी.

भारतादौ कर्ता तूपलभ्यते न हि तथा वेदे। तथा च स्मर्यमाणकर्तृत्वस्य भारतादौ साध्याव्यापकत्वात् पक्षे साधनाव्यापकत्वात् उपाधित्वेन कथमिदमनुमानं साध्यसाधकं भवेत् इत्याशङ्कते—**न चेति**। गौतमादिभिः शिष्यपरंपरया वेदकर्तुरुपदेशे विवदन्तं प्रत्याह—**तस्मादिति**। **तपस्तेपानात्**। तपः कृतवत इत्यर्थः। तपधातोर्लिटि एत्वाऽभ्यासलोपयोः शानच्। **स एवायं गकार इति**। अत्र एतत्कालिकगकारे पूर्वकालिकगकाराभेदो भासते। स च वर्णानामनित्यत्वे न संभवतीति

## भास्करोदयाख्यव्याख्या.

मस्तद्दूषणतया स्वतःप्रामाण्यं नेश्वरोक्ततया ईश्वरानङ्गीकारात्। **अनुमानेन व्यवस्थापयतीति**। तर्करसिकत्वात् तार्किकाणामनुमान एव प्रामाण्यनिर्भरात् पूर्वमागमादनुमानेनेश्वरोक्तत्वं व्यवस्थापयतीत्यर्थः। **गौतमादिभिरित्यादि**। गौतमादिभिर्महर्षिभिः स्वशिष्यान् प्रति वेदकर्ता ईश्वर इत्युपदेशात् तच्छिष्यपरंपरया वेदकर्तुरुपदेशपरंपरया ईश्वरकर्तृकत्वमनुमानसिद्धं सिध्यतीति हेतुर्न व्याप्यत्वासिद्ध इति भावः। गौतमादिभिः शिष्यक्रमेण तदुपदेशे किंप्रमाणमिति विवदन्तं विप्रतिपन्नं प्रत्यागमप्रमाणमाहेति समुदितार्थः। **तपः कृतवत इति**। आलोचनशालिन इत्यर्थः। **तपधातोरिति**। तप आलोचने इत्यस्मादित्यर्थः। **एत्वाभ्यासलोपयोरिति**। लिटिधातोरनभ्यासस्येत्यनेनेत्यर्थः। **एतत्कालिकगकारे-इति**। एतत्कालिकत्वोपलक्षितगकारे इत्यर्थः। **पूर्वकालिकगकाराभेद इति**। पूर्वकालिकत्वोपलक्षितगकाराभेद इत्यर्थः। **स चेति**। अभेदश्चेत्यर्थः। **अनित्यत्वे न संभवतीति**। पूर्वकालिकस्य नष्टत्वादेतत्कालिकोऽयमपूर्व एवेति क्वाभेदचर्चेति भावः। **तर्हीति**। वर्णानामनित्यत्वे हीत्यर्थः। ननु वर्णा नित्या एव सन्तु तदभिव्यञ्जकध्वनिगतोत्पत्तिविनाशयोरध्यासमूलकोत्पन्नो गकारो विनष्टो गकार इति प्रतीत्युपपत्तेः स एवायं गकार इति प्रत्यभिज्ञोपपत्तेश्चेति चेन्न। तेषां नित्यत्वे ईश्वरोक्तत्वकथनविरोधप्रसङ्गात्। नचोक्तत्वं तत्कण्ठादिव्यापाराभिव्यज्यमानत्वमिति वाच्यम्। सृष्टेरीश्वरीयकामनामात्रविषयत्वात् 'स ऐक्षत' 'सोऽकामयते'ति श्रुतेः। एतेन ईश्वरोक्तत्वमप्यसिद्धं भवति। अनित्यत्वं त्वितरसृष्टेरिव सिध्यति तथापि कामनायाः चिकीर्षारूपत्वात् तदुत्तरमुच्चारणेनैवोत्पत्तिमत्त्वं 'महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेद' इति श्रुतेस्तस्माद्वर्णा

१ कर्तुःस्मर्यमाणत्वेन।

वर्णानामनित्यत्वात् 'सोऽयं गकारः' इति प्रत्यभिज्ञायाः 'सेयं दीपज्वाला' इतिवत् जात्यालम्बनत्वात् ॥ वर्णानां नित्यत्वेऽप्यानुपूर्वीविशिष्टवाक्यस्यानित्य-

## नीलकण्ठी.

भावः । **अनित्यत्वादिति** । तर्हि प्रत्यभिज्ञाविरोध इत्यत आह—**सोऽयमिति** । उत्पत्तिविनाशप्रत्यययोः अन्यार्थकल्पनमपेक्ष्यैतत्प्रत्ययस्य तथात्वकल्पने लाघवमिति हृदयम् । 'अग्निमीळे' इत्यादौ आनुपूर्वी अकारोत्तरगकारोत्तरनत्वादिरूपा । तत्रोत्तरत्वमव्यवहितोत्तरक्षणवृत्तित्वरूपं वाच्यम् । इत्थंच वर्णानां नित्यत्वाङ्गीकारेऽपि अनित्यक्षणघटिताया आनुपूर्व्या अनित्यत्वात् तद्विशिष्टवाक्यसमुदायात्मकवेदस्य त्वदभिमतनित्यत्वं न सिध्यतीति वर्णानामनित्यत्वमेवोचितमित्याह—**वर्णानामिति** । यद्यपि स्मृत्यादीनामाप्तोक्तत्वादेव प्रमाणत्वं सिध्यति, तत्कर्तृमन्वादीनामाप्तत्वात् तथापि तेषामाप्तत्वे विप्रतिपन्नं प्रत्याह—**मन्वादीति** । **आचाराणामिति** । आचारप्रतिपादकविशिष्टवाक्यानामित्यर्थः । एतेन प्रमाण-

## भास्करोदयाख्यव्याख्या.

अनित्या एव । **अन्यार्थकत्वकल्पनमपेक्ष्येति** । अभिव्यक्तत्वार्थकत्वकल्पनमपेक्ष्येत्यर्थः । **तत्तत्प्रत्ययस्येति** । उत्पन्नो गकारो नष्टो गकार इति प्रत्ययस्येत्यर्थः । **तथात्वकल्पने लाघवमितीति** । उत्पन्नविनष्टपदयोरभिव्यक्तानभिव्यक्तयोर्लक्षणानङ्गीकार एव लाघवबीजमिति ध्येयम् । तुष्यतु दुर्जनन्यायेन वर्णानां नित्यत्वमभ्युपेत्य तद्घटितवाक्यात्मकवेदस्यानित्यत्वमेवैष्टव्यं त्वयेत्याह—**अग्निमीळ इत्यादिना** । **अव्यवहितोत्तरक्षणवृत्तित्वरूपमिति** । अव्यवहितोत्तरत्वसंबन्धेन पूर्वपूर्ववर्णवत्त्वमुत्तरोत्तरवर्णे क्षणघटितं गृह्यते । तेन सरो रसः नदी दीनेत्यादौ नाविशेषोपपत्तिरिति भावः । **इत्थंचेति** । पूर्वपूर्ववर्णाव्यवहितोत्तरत्वविशिष्टोत्तरोत्तरवर्णघटितानुपूर्वीग्रहणे चेत्यर्थः । **अनित्यक्षणेति** । कालस्याखण्डत्वेऽपि सूर्यस्पन्दपरिच्छिन्नत्वात्सखण्डत्वेन नित्यक्षणादिव्यवहार इति भावः । **आनुपूर्व्या अनित्यत्वादिति** । अनित्यक्षणोपाधिकत्वेनानित्यत्वादित्यर्थः । **त्वदभिमतनित्यत्वमिति** । मीमांसकाभिमतनित्यत्वमित्यर्थः । **वर्णानामनित्यत्वमेवोचितमिति** । अनेनानुपूर्व्या अनित्यत्वेऽपि तद्घटकानां वर्णानां नित्यत्वे किमु वक्तव्यं ते साहसम् । वृक्षे नष्टे शाखास्तिष्ठन्तीतिवदुपहासः सूचितः । **तेषामाप्तत्वे विप्रतिपन्नं प्रतीति** । मन्वादीनामाप्तत्वे विरोधोक्तिः कं प्रतीत्यर्थः । नास्तिकशास्त्रप्रणेतॄणामपि किमाप्तत्वं न स्यात्तत्प्रणीततच्छास्त्राचारस्य तैराचरणात्सयुक्तिकतया चानुभवविषयत्वादस्माकमपीति वदन्तं प्रतीति यावत् । **मूले मन्वादिस्मृतीनामित्यादि** । आचारपदस्य कृत्यर्थकतया प्रत्यासत्त्या समभिव्याहृतमन्वादिस्मृतिसंबन्धित्वेनैव विवक्षणीयतया च मन्वादिस्मृतीनां तत्प्रतिपाद्यकृतिविशेषाणां च वेदमूलकतया प्रामाण्यमित्यर्थो लभ्यते । अत्रेदमनु-

१ प्रत्यभिज्ञानत्वे ।

त्वात् ॥ तस्मादीश्वरोक्तो वेदः ॥ मन्वादिस्मृतीनामाचाराणां च वेदमूलकतया प्रामाण्यम् ॥ स्मृतिमूलवाक्यानामिदानीमनध्ययनात् तन्मूलभूता काचित् शाखोच्छिन्नेति कल्प्यते ॥

ननु पाठ्यमानवेदवाक्योत्सादस्य कल्पयितुमशक्यतया विप्रकीर्णवादस्यायुक्तत्वादिति नित्यानुमेयो वेदो मूलमिति चेत् ॥ न ॥ तथापि वर्णानुपूर्वीज्ञानाभावेन बोधकत्वासंभवात् ॥

ननु 'एतानि पदानि स्मारितार्थसंसर्गवन्ति आकाङ्क्षादिमत्पदकदम्बकत्वात्

## नीलकण्ठी.

विभागव्याघातशङ्का निरस्ता । वेदार्थं ज्ञात्वैव मन्वादिभिः तदर्थकस्मृत्यादीनि विरचितानि अतस्तेषां प्रामाण्यमिति मनसि कृत्याह—**वेदमूलकतयेति** । ननु तर्हि सः वेदः कुतो नोपलभ्यते इत्यत आह—**स्मृतिमूलेति** । **तन्मूलभूतेत्यादि** । स्मृत्यादिमूलभूता काचित् शाखा पाठतः परिभ्रष्टेति अनुमीयत इत्यर्थः । **वाक्योत्सादस्य** वाक्योच्छेदस्य । ननु समानानुपूर्वीकवेदपाठस्य संप्रदायसिद्धत्वात् तादृशवेदे कतिपयवाक्योच्छेदस्य कल्पयितुमशक्यत्वेऽपि पठ्यमानवेदे एव विशकलितया विद्यमानवाक्यानां स्मृतिमूलत्वमस्तीत्यत आह—**विप्रकीर्णेति** । **अयुक्तत्वादिति** । स्मृत्यादिसमानार्थकवाक्यानां पठ्यमानवेदेऽनुपलम्भादिति भावः । **नित्यानुमेय इति** । नित्योऽनुमेयरूप इत्यर्थः । **वर्णानुपूर्वीज्ञानाभावेनेति** । तादृशज्ञानस्यापि शाब्दबोधहेतुत्वात् । अन्यथा नदीदीनादिशब्दैरर्थविशेषबोधानापत्तेरिति भावः ।

शब्दस्य पृथक् प्रमाणत्वमनङ्गीकुर्वतां वैशेषिकाणां मतं दूषयितुमुपन्यस्यति—

## भास्करोदयाख्यव्याख्या.

पपन्नं । स्मृतीनां तन्मूलकतया प्रामाण्ये व्यवस्थापिते तत्प्रतिपाद्यानां प्रामाण्यमर्थसमाजग्रस्तमित्यतोऽर्थान्तरं परिष्करोति—**आचारप्रतिपादकशिष्टवाक्यानामित्यर्थ इति** । स्मृत्यप्रतिपाद्याचारप्रतिपादकशिष्टवाक्यानामित्यर्थः । अत्र शिष्टपदेन वृद्धशिष्टपरामर्शः । वृद्धाचाराणां देशाचाराणां कुलाचाराणां च प्रामाण्यस्य सर्वप्रसिद्धत्वात् । शिष्टविशेषणतया विरुद्धाचारप्रतिपादकवृद्धवाक्यानां प्रामाण्यनिरासः । देशाचाराणां कुलाचाराणामित्यत्र तत्तद्देशीयतत्तत्कुलीनाचारप्रतिपादकवृद्धशिष्टवाक्यानामित्येवार्थ इत्यलम् । **एतेनेति** । एतदर्थकरणेनेत्यर्थः । **प्रमाणविभागव्याघातशङ्का निरस्तेति** । केषांचिच्छङ्का शिष्टवाक्यानां प्रामाण्यं स्मृत्यतिरिक्तत्वेन सिद्धं कथं सेत्स्यतीति या सा निरस्तेत्यर्थः । उभयोरपि वेदमूलकतयैव प्रामाण्यमनायत्या स्वीकर्तव्यं वेदविहितकर्मकारित्वस्य तथोक्तत्वात् । **स्मृत्यादीति** । आदिना शिष्टवाक्यपरामर्शः । **विशकलिततयेति** । पृथगवस्थिततयेत्यर्थः । कर्मधारयभ्रमनिरासायाह—**नित्यानुमेय इत्यादि** । **तादृशज्ञानस्यापीति** । तत्तद्वर्णानुपूर्वीज्ञानस्यापीत्यर्थः । **नदीदीनादिशब्दैरिति** । आदिना सरोरसः राजाजरा रमामार इत्यादि संग्रहः । **पृथक्प्रमाणत्वमिति** ।

'गामानय दण्डेनेति' मद्वाक्यवत् इत्यनुमानादेव संसर्गज्ञानसंभवात् शब्दो न प्रमाणान्तरमिति चेत् ॥ न ॥ अनुमित्यपेक्षया शाब्दज्ञानस्य विलक्षणस्य 'शब्दात्प्रत्येमि' इत्यनुव्यवसायसाक्षिकस्य सर्वसंमतत्वात् ॥

## नीलकण्ठी.

**नन्वेतानीत्यादिना ।** **एतानि पदानि** घटमानयेत्यादीनि । **स्मारितार्थसंसर्गवन्ति इति ।** स्मारितार्थसंसर्गज्ञानपूर्वकाणीत्यर्थः । संसर्गे तात्पर्यविषयत्वं निवेशनीयम् । तेन संसर्गान्तरमादाय नार्थान्तरता । **आकाङ्क्षादीत्यादिना** योग्यतासत्त्योः परिग्रहः । आकाङ्क्षादिरहिते पदकदम्बके व्यभिचारवारणाय **आकाङ्क्षादीति ।** **सर्वसंमतत्वादिति ।** तथा च कार्यवैलक्षण्यानुरोधेन शब्दः प्रमाणान्तरमिति भावः ।

## भास्करोदयाख्यव्याख्या.

अनुमानापेक्षयेत्यर्थः । **वैशेषिकाणामिति ।** विशेषेण संकोचेन कतिपयपदार्थाङ्गीकर्तॄणां काणादानामित्यर्थः । **मतमिति ।** इयं तन्मतस्थितिः गौरस्ति गामानयेत्यादिसाकाङ्क्षादिमच्छब्देभ्यः स्वस्ववृत्त्या पदार्थानामुपस्थित्युत्तरं गवादावस्तित्वादेरन्वयावगाही विलक्षणो बोधो नातिरिक्तशब्दप्रमाणजन्यो गौरस्तितावान् स्वधर्मिकास्तित्वान्वयबोधानुकूलाकाङ्क्षाश्रयपदस्मारितत्वात् घटवत् । अस्तिपदसमभिव्याहृतगौः पदस्मारितत्वाद्वा चक्षुर्वदित्यनुमानत एवान्वयधियोऽन्यथासिद्धेर्न शब्दोऽतिरिक्तं प्रमाणमिति । **घटमानयेत्यादीनीति ।** आदिना गौरस्तीत्यादिपरिग्रहः । **स्मारितार्थसंसर्गज्ञानपूर्वकाणीत्यर्थ इति ।** अर्थयोर्यः संसर्गः परस्परमन्वयः तज्ज्ञानं स्मारितं च तदेतच्चेति कर्मधारयः । एतत्पूर्वकत्वं पदानां विषयतया एतद्वत्त्वमेवेत्यर्थः । **नार्थान्तरतेति ।** अयं भावः । घटमानयेत्यादिप्रयोगे घटादेरानयनादिसंसर्गज्ञानवत्त्वेनैव बोधो न स्यात् । इतरक्रियाकाङ्क्षादिमत्पदकदम्बकत्वादितरक्रियासंसर्गज्ञानवत्त्वमप्रकृतं किंचित्सिद्ध्येत्तस्मान्निवेशिते संसर्गे तात्पर्यविषयत्वे यो यदीयतात्पर्यविषयस्तज्ज्ञानवत्त्वमादाय तस्यैव बोध इति । **आकाङ्क्षादिरहिते पदकदम्बके-इति ।** यथाक्रमं गौरश्वः पुरुषो हस्ती, अग्निना सिञ्चति, गिरिर्भुक्तमग्निमान्देवदत्तेनेत्याकारकपदकदम्बके इत्यर्थः । **तथाचेति ।** शाब्दस्योक्तहेतुना प्रत्येमीत्यनुव्यवसायस्यानुमितिविषयस्य सर्वसंमतत्वस्वीकारे चेत्यर्थः । **कार्यवैलक्षण्यानुरोधेनेति ।** अनुमितिकार्यापेक्षया शाब्दकार्यस्य वैलक्षण्यानुरोधेनेत्यर्थः । **शब्दः प्रमाणान्तरमिति ।** अवश्यं स्वीकर्तव्यमिति शेषः । इदमुपलक्षणमन्यच्चैतद्बोध्यम् । वाक्यार्थस्यानुमितित्वे सत्येवोक्तसाकाङ्क्षपदलिङ्गकत्वं कल्प्यं तदेव त्वप्रसिद्धं प्रमाणाभावात् । अस्तित्वेन गामनुमिनोमीत्यनुव्यवसायस्य कैरप्यनङ्गीकारात् प्रत्युत गौरस्तीत्यादिवाक्यादस्तित्वेन गौः श्रुतो न त्वनुमित इत्येवानुभवाच्च । पामराणां गौरस्तीत्यतोऽस्तितावान्गौरिति शाब्दो न तु अनुमितिः । पक्षे हेतुपरामर्शग्रहाभावात् । पण्डितस्यापि शाब्दबोधोत्तरकाल एव चमत्काराय हेत्वाद्युपन्यासपूर्वकानुमितत्वानुभवः प्रत्यक्ष

१ विशेषः विशेष पदार्थः । अस्ति एषा मिति वा वैशेषिकास्तेषाम् । स्वार्थिकः प्रज्ञाद्यण् ।

नन्वर्थापत्तिरपि प्रमाणान्तरमस्ति 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति दृष्टे श्रुते वा पीनत्वान्यथानुपपत्त्या रात्रिभोजनमर्थापत्त्या कल्प्यत इति चेत् ॥ न ॥ देवत्तो रात्रौ भुङ्क्ते दिवाऽभुञ्जानत्वे सति पीनत्वात् इत्यनुमानेनैव रात्रिभोजनस्य सिद्धत्वात् ॥

## नीलकण्ठी.

मीमांसकः शङ्कते—**नन्वर्थेति** । **दिवा न भुङ्क्ते** इत्यर्थे **दृष्टे** प्रत्यक्षतो ज्ञाते **श्रुते** शब्दादवगते । एतेन दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेत्यर्थापत्तेर्द्वैविध्यं सूचितम् । **पीनत्वान्यथानुपपत्त्येति** । पीनत्वस्य रात्रिभोजनं विनाऽनुपपत्त्येत्यर्थः । अत्रेदमवधेयम्—यद्विना यदनुपपन्नं तत्तदुपपादकमिति रात्रिभोजनमुपपादकम्, पीनत्वमुपपाद्यम्, उपपादकज्ञानं फलम्, उपपाद्यज्ञानं करणम् । फलकरणयोरर्थापत्तिशब्दो वर्तते । फले 'अर्थस्य आपत्तिः कल्पना' इति व्युत्पत्त्या । करणे तु 'अर्थस्यापत्तिः कल्पना यस्मात्' इति व्युत्पत्त्येति । व्यतिरेक्यनुमानेनैव गतार्थत्वात् अर्थापत्तेः प्रमाणान्तरत्वमनुचितमिति समाधत्ते—**देवदत्त इति** । दिवामात्रभोजिनि पीने व्यभिचारवारणाय सत्यन्तम्, अहोरात्राभोजिन्यपीने व्यभिचा-

## भास्करोदयाख्यव्याख्या.

इवानुभवरसिकत्वात्तार्किकस्येति पृथक् शब्दप्रमाणजन्यप्रमितिविशेषः कणभक्षमतानुसारिभिरप्यादर्तव्य एवेत्यवधेयम् । **मीमांसकः शङ्कत इति** । अध्वरमीमांसको ब्रह्ममीमांसकश्च शङ्कत इत्यर्थः । **दिवा न भुङ्क्त इत्यर्थ इति** । दिवाधिकरणकभोजनानुकूलकृतिमत्त्वाभाववत्पुरुषविशेषरूपार्थं इत्यर्थः । **एतेनेति** । दृष्टे श्रुते इति कथनेनेत्यर्थः । **अर्थापत्तेर्द्वैविध्यमिति** । यथेदं रजतमिति पुरोवर्तिनि प्रतिपन्नरजतजातीयस्य विशेषदर्शनेन नेदं रजतमिति सर्वानुभूतदृष्टार्थं निषिध्यमानत्वान्यथानुपपत्त्या रजतस्यासत्त्वं ( मिथ्यात्वं ) कल्प्यते, यथाच 'तरति शोकमात्मविदि—'त्यत्र श्रुतशोकशब्दवाच्यवन्धस्यात्मविज्ञाननिवर्त्यत्वान्यथानुपपत्त्या वन्धस्य मिथ्यात्वं कल्प्यते, तथेहापि पीनत्वान्यथानुपपत्त्या रात्रिभोजनं कल्प्यत इति वोध्यम् । उपपाद्योपपादकयोरर्थापत्तिव्यवहारस्यान्यत्र प्रसिद्धेस्तज्ज्ञानाय तदुपपादयन्नाह—**अत्रेदमवधेयमिति** । **यद्विनेत्यादि** । यद्विना रात्रिभोजनं विना यदनुपपन्नं पीनत्वं तदुपपादकं रात्रिभोजनं पीनत्वोपपादकमित्यर्थः । **पीनत्वमुपपाद्यमिति** । येन विना यदनुपपन्नं तत्तदुपपाद्यमिति वोध्यम् । **फलकरणयोरिति** । रात्रिभोजनज्ञानपीनत्वज्ञानयोरित्यर्थः । **फले इति** । रात्रिभोजनज्ञानरूपे इत्यर्थक । **रणेत्विति** । पीनत्वज्ञानरूपे इत्यर्थः । **यस्मादिति** । अन्यपदार्थः पीनत्वज्ञानमिति भावः । **व्यतिरेक्यनुमानेनैवेत्यादि** । यत्र यत्र दिवाऽभुञ्जानत्वे सति पीनत्वं तत्र तत्र रात्रिभोजनवत्त्वमित्यन्वयव्याप्तेर्योगिनि व्यभिचाराद्यत्र यत्र दिवाऽभुञ्जानत्वे सति पीनत्वाभावस्तत्र तत्र रात्रिभोजनत्वाभाव इति व्यतिरेकव्याप्तेरेवाभ्युपगन्तव्यतया प्रकृते व्यतिरेक्यनुमानशब्देन व्यतिरेकव्याप्तिविशिष्टानुमानपरत्वाद्व्यतिरेक्यनुमानेनैव **गतार्थत्वाद**र्थापत्तिप्रमाणस्य संगृहीतत्वाद**र्थापत्तेः प्रमाणान्तर-**

शते पञ्चाशदिति संभवोऽप्यनुमानमेव । 'इह वटे यक्षस्तिष्ठति' इत्यैतिह्यमपि अज्ञातमूलवक्तृकः शब्द एव ॥ चेष्टापि शब्दानुमानद्वारा व्यवहारहेतुरिति न

## नीलकण्ठी.

रवारणाय विशेष्यं तच्च योगाद्यजन्यपीनत्वपरम् । तेन भोजनशून्ये योगिनि पीने न व्यभिचारः ।

संभवैतिह्ययोरतिरिक्तप्रमाणत्वं वदतां पौराणिकानां मतं दूषयति—**शते पञ्चाशदित्यादिना । अनुमानमेव** न तु प्रमाणान्तरमित्यर्थः । शतवानित्युक्ते पञ्चाशद्वानिति ज्ञानं संभवति तस्यानुमानेनैव निर्वाहात् । शतस्य पञ्चाशद्व्याप्यत्वादिति भावः । **अज्ञानमूलेति** । विशिष्यानिश्चितप्रथमवक्तृकः शब्दः, न तु प्रमाणान्तरमित्यर्थः । तादृशशब्दस्य यथार्थत्वे शब्दप्रमाणमध्येऽन्तर्भावः । अन्यथा तु अप्रमाणमेवेति हृदयम् ।

'नन्वनया चेष्टया अयमर्थो बोद्धव्य इति संकेतितचेष्टया विजातीयप्रमाजननात् चेष्टापि प्रमाणान्तरम्' इति वदन्तं निरस्यति—**चेष्टापीति । शब्दानुमानद्वारेति** । शब्दद्वारा अनुमानद्वारा वा न तु स्वातन्त्र्येणेत्यर्थः । चेष्टया

## भास्करोदयाख्यव्याख्या.

त्वं अनुमितिकरणतयाऽऽवश्यकानुमानेतरप्रमित्यन्तरकरणप्रमाणान्तरत्वमनुचितं संभवति क्लृप्तकारणकत्वेऽक्लृप्तकारणकत्वस्यानुचितत्वादिति समुदिततात्पर्यार्थः । एतेनानुमानस्य न व्यतिरेकिरूपत्वं साध्याभावे साधनाभावनिरूपितव्याप्तिज्ञानस्य साधनेन साध्यानुमितावनुपयोगादित्युक्तं प्रत्युक्तम् । पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ तद्भिना गत्यन्तराभावात् एतदेकशेषे विनिगमनाविरहाच्च । अत एवार्थापत्तिप्रमाणान्तरमङ्गीकुर्वाणानां मतेनेदं कल्पयामीत्येवानुव्यवसायो नानुमिनोमीत्यनुव्यवसाय इत्युक्तिः केवलाऽऽग्रहमूलिकैवेत्यलम् । **अहोरात्राभोजिन्यपीने इति** । अहोरात्राभोजने दिवाऽभोजनस्यार्थसमाजग्रस्तत्वमित्याशयात् । **योगाद्यजन्यपीनत्वपरमिति** । योगादिजन्यपीनत्वज्ञानस्य रात्रिभोजनकल्पकत्वासंभवादिति भावः । इत्याहेत्यर्थकमितिहेत्यव्ययं तस्मा'दनन्तावसथेतिहभेषजाञ्ञ्य' इति निष्पन्नमैतिह्यं बोध्यम् । **अनुमानेनैव निर्वाहादिति** । अयं पञ्चाशद्वान् शतवत्त्वादित्यनुमानेनेत्यर्थः । **शतस्य पञ्चाशद्व्याप्यत्वादिति** । शतवन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकपंचाशत्त्वधर्मवत्त्वादित्यर्थः । **शब्द इति** । शब्द एव प्रमाणमित्यर्थः । **न तु प्रमाणान्तरमिति** । ऐतिह्यं शब्दप्रमाणातिरिक्तं तु न इत्यर्थः । भारतादेरैतिह्यप्रामाण्यं पोषयितुम्, इह वटे इत्यादेरप्रमाण्यं च बोधयितुमैतिह्यरूपं शब्दं शाब्दज्ञानकरणं विभजन् दर्शयति-**तादृशस्येत्यादिना । संकेतितचेष्टयेति** । अर्थविशेषे संकेतविशिष्टमौनिकृतहस्तक्रियाविशेषेणेत्यर्थः । **शब्दद्वारानुमानद्वारा वेति** । तद्बोधकशब्दप्रमाणेनानुमानप्रमाणेन वेत्यर्थः । अयमिममर्थं ब्रूते एतदर्थबोधकशब्दप्रतिसूचक-

मानान्तरम् ॥ तस्मात् प्रत्यक्षानुमानोपमानशब्दाश्चत्वार्येव प्रमाणानि ॥ (अथ) ज्ञानानां तद्वति तत्प्रकारकत्वं स्वतोग्राह्यं परतो वेति विचार्यते ॥ तत्र विप्रति-

## नीलकण्ठी.

कल्पितस्य शब्दस्य प्रमापकत्वेऽपि गौरवादनुमानानुसरणम् । **व्यवहारेति** । प्रमात्मकज्ञानेत्यर्थः । उपसंहरति—**तस्मादिति** । इति शब्दपरिच्छेदः ॥ * ॥

## प्रमाणखण्डम्

प्रमाणप्रसङ्गात् प्रमात्वस्य परतो ग्राह्यतां व्यवस्थापयिष्यन् आह—**ज्ञानानामिति** । षष्ठ्यर्थ आधेयत्वम्, तस्य चान्वयस्तद्वति तत्प्रकारकत्वे । तच्च तद्वद्विशे-

## भास्करोदयाख्यव्याख्या.

क्रियाविशेषवत्त्वादिति शब्दप्रमाणेनेत्यर्थः । शब्दप्रमाणेन गतार्थेऽनुमानप्रमाण-वैयर्थ्याशङ्कामपनेतुं पूर्वस्मिन्नरुचिमाह—**चेष्टयेत्यादिना** । अयमिममर्थं ब्रूते एतदर्थकचेष्टावत्त्वादित्यनुमानाकारो द्रष्टव्यः । **उपसंहरतीति** । इमान्येव प्रमाणानीति प्रतिजानीत इत्यर्थः ॥ इति **तर्कसंग्रहदीपिकाप्रकाशव्याख्यायां भास्करोदयाख्यायां भगवदर्पितायां शब्दपरिच्छेदः** ॥ * ॥

अथेदानीं प्रमाणेषु निरूपितेषु तद्गतप्रमितिकरणत्वनिरूपितप्रमागतप्रमात्वस्य स्वतोग्राह्यत्वपरतोग्राह्यत्वयोर्जिज्ञासानुत्थितेर्न्यूनतापरिहाराय प्रसङ्गसङ्गत्या तदवतारयति—**प्रमाणप्रसङ्गादित्यादिना** । प्रमाणज्ञाने परम्परया प्रमागततद्वति तत्प्रकारकत्वरूपप्रमात्वज्ञानावश्यकत्वेन तत्र च स्वतोग्राह्यत्वपरतोग्राह्यत्वाभ्यां परस्परं विवदतोर्मीमांसकनैयायिकयोर्मध्यस्थस्यान्तेवासिनस्तदुक्तिस्मृतेरतस्तज्जिज्ञासायां तत्परिहाराय स्मृतस्योपेक्षानर्हत्वरूपत्वेन तद्विचारस्य गुरोरावश्यकतया तदभिधानमिति भावः । **परतोग्राह्यतां व्यवस्थापयिष्यन्निति** । अनुमानप्रामाण्यविषयतां सिद्धान्तयिष्यन्नित्यर्थः । गुरु—मिश्र—भट्टमतसिद्धव्यवसायानुव्यवसायज्ञाततालिङ्गकानुमानानां प्रमाणत्वासंभवादिति भावः ॥ गुरुमते ज्ञानस्य स्वप्रकाशतास्वीकारे इच्छादिप्रत्यक्षानुरोधेन कल्पनीये (आत्मसंभवेन) प्रत्यक्षमनःसंयुक्तसमवाययोः कार्यकारणभावे ज्ञानप्रत्यक्षे व्यभिचारः । विषयतासंबन्धेन प्रत्यक्षस्य स्वस्मिन्नव्युत्पत्तेस्तत्राव्यवहितपूर्वक्षणावच्छेदेन मनःसंयुक्तसमवायस्यासत्त्वादत आत्मसमवेतांशे ज्ञानान्यत्वं कार्यतावच्छेदककोटौ निवेशनीयमिति गौरवम् । किंचेच्छाया अपि स्वप्रकाशत्वं किं नानुमन्यते । अपि च गुरुमते घटत्वेन घटमहं जानामीति व्यवसायात्मके विशेषणविधयाऽनुपस्थितस्य स्वगतप्रामाण्यस्य भानाङ्गीकारे ज्ञानत्वादेरपि भानापत्तेर्दुष्परिहरत्वात् । मिश्रमतेऽनुव्यवसायात्मकज्ञानप्रामाण्यग्रहेऽनभ्यासदशायां जलज्ञानं प्रमा न वेति संशयो न स्यात् । अनुव्यवसायेन तन्निश्चयात् । भट्टमते ज्ञाततायाः विषयनिष्ठाया अतिरिक्तायाः कल्पने गौरवाद्व्याप्यत्वासिद्धिदोषदूषितत्वाद्दुष्टत्वान्नैतदनुमानं मानमितीदं ज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वादित्यनुमानग्राह्यत्वमेव ज्ञानप्रामाण्यस्येत्येवं सिद्धान्तयिष्यन्नि-

पत्तिः ॥ ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यम्, न वा । अत्र विधिकोटिः स्वतस्त्वम्, निषेधकोटिः परतस्त्वम् ॥

## नीलकण्ठी.

घ्यकत्वावच्छिन्नतत्प्रकारकत्वम् । तच्छब्दार्थौ घटत्वादिरूपः । **स्वतोग्राह्यमिति** । ज्ञानग्राहकसामग्रीजन्यग्रहविषय इत्यर्थः । **परत इति** । 'ग्राह्यम्' इत्यनुषज्यते । अनुमानादिजन्यग्रहविषय इति तदर्थः । **तत्र** विचारे । प्रयोजकत्वं सप्तम्यर्थः विप्रतिपत्तावन्वेति । कथं तस्या विचारप्रयोजकत्वमिति चेत् । अत्र वदन्ति । विरुद्धार्थप्रतिपादकवाक्यद्वयं हि विप्रतिपत्तिः । तया अप्रमाण्यशङ्काकवलिततत्तद्वाक्यार्थबोधद्वारा मध्यस्थस्य संशयो जन्यते इत्येकतरकोटिनिश्चयाय न्यायप्रयोगादिरूपो विचारः । एवं च विचारोपयोगिसंशयजनन्या विप्रतिपत्तेर्विचारोपयोगित्वमक्षतमिति । **ज्ञानप्रामाण्यमिति** पक्षनिर्देशः । अत्र 'तद्वति तत्प्रकारकज्ञानत्वरूपमेव प्रामाण्यं पक्षः' नतु 'प्रमितिकरणत्वरूपम्' इति तात्पर्यग्राहकं ज्ञानपदम् । वस्तुतस्तु तद्वति तत्प्रकारकज्ञानत्वस्य घटत्वपटत्वादिरूपार्थभेदेन भिन्नतया कस्यापि प्रामाण्यस्य यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं न संभवति । अतः यद्धर्मघ-

## भास्करोदयाख्यव्याख्या.

यायिक आहेत्यन्वयः । **तच्च** । तत्प्रकारत्वं च । **तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वमिति** । यथाश्रुते इमे रङ्गरजते इति समूहालम्बनात्मकप्रमात्मकव्यवसायात्मकज्ञानादीनां ज्ञानप्रामाण्यग्राहकतापत्तिरिदानीं ययोः प्रकारताविशेष्यताविषयतयोर्निरूप्यनिरूपकभावस्तन्निरूपितज्ञानीयविषयितयोरवच्छेद्यावच्छेदकभावमर्यादया समूहालम्बनात्मकभ्रमस्य रङ्गरजतत्व–रजतरङ्गत्व–निष्ठविशेष्यताप्रकारतावगाहितया तयोरनिरूप्यनिरूपकभावात्तद्विषयितयोरवच्छेद्यावच्छेदकभावाभावेन तद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वं नेति भावः । स्पष्टप्रतिपत्तये तच्छब्दार्थमाह—**तच्छब्दार्थ इत्यादिना** । आद्यतच्छब्दार्थ इत्यर्थः । **स्वतोग्राह्यमितीति** । स्वस्मात् स्वकीयाच्च ग्राह्यमित्यर्थः । तत्र स्वप्रकाशतया व्यवसायेनैव प्रामाण्यं गृह्यत इति गुरूणां, तदनुव्यवसायेनेति मिश्राणां, ज्ञानस्यातीन्द्रियतया ज्ञाततालिङ्गकानुमित्येति भट्टानां च मते स्वतोग्राह्यत्वसमन्वयः । **ज्ञानग्राहकेत्यादि** । गुरुमते प्राथमिकपटत्वेन व्यवसायात्मिका ज्ञानग्राहिका सामग्री । मिश्रमतेऽनुव्यवसायात्मिका ज्ञानग्राहिका सामग्री, भट्टमते ज्ञाततालिङ्गिका सामग्री । **अनुमानादिरिति** । आदिना शब्दादिपरिग्रहः । **प्रयोजकत्वमित्यादि** । तथाच विचारप्रयोजिका विप्रतिपत्तिरिति फलितम् । **एवंचेति** । संशयस्य विचारोपयोगित्वे चेत्यर्थः । **विचारोपयोगित्वमिति** । विचारप्रयोजकत्वमित्यर्थः । ज्ञानत्वनियतं प्रमाणत्वं भावल्युडन्तप्रमाणपदेनोपस्थाप्यमेव पक्षत्वेन विवक्षणीयमित्यवधारणायेह ज्ञानपदमिति तात्पर्यवांस्तत्पदं सार्थकयति—**अत्रेत्यादि** । दीधितिकारोक्तप्रकारेण तत्पदं सार्थकयन्नाह—**वस्तुतस्त्विति** । ज्ञानानामिति मूलग्रन्थविरोधेन ज्ञानत्वनियतस्य तद्वति तत्प्रकारकत्वरूपप्रमाणत्वस्यैव

अनुमानग्राह्यत्वेन सिद्धसाधनवारणाय—यावदिति ॥ 'इदं ज्ञानमप्रमा' इति

## नीलकण्ठी.

टितप्रामाण्यं यदा पक्षस्तदा तद्धर्मप्रकारकज्ञानग्राहकयावद्ग्राह्यत्वमेव साधनीयम् । न तु सामान्यतो ज्ञानग्राहकयावद्ग्राह्यत्वमिति तात्पर्यग्राहकं ज्ञानपदम् । **तदप्रामाण्येत्यादि** । तदप्रामाण्याग्राहिका यावती ज्ञानग्राहिका सामग्री तज्जन्यग्रहविषयो न वा इत्यर्थः । एतादृशो ग्रहः गुरुमते व्यवसायः मुरारिमिश्रमते अनुव्यवसायः । भट्टमते च ज्ञाततालिङ्गकानुमितिः । अत्र गुरुमते सर्वस्मिन्नेव ज्ञाने मितिमातृमेयैतत्त्रयं भासते । तन्मते 'घटत्वेन घटमहं जानामि' इत्याकारकस्यैव व्यवसायस्योत्पत्तेः । एवंच व्यवसायस्य स्वप्रकाशात्मकतया स्वेनैव स्वगतप्रामाण्यस्य ग्रहणाद्भवति प्रामाण्यस्य स्वतोग्राह्यत्वम् । विशिष्टबुद्धौ विशेषणज्ञानस्य करणतायाः तैरनङ्गीकारादनुपस्थितस्यापि प्रामाण्यस्य भानसंभवात् । मिश्रमते 'अयं घटः' इत्याकारकज्ञानानन्तरं 'घटत्वेन घटमहं जानामि' इति ज्ञानविषयकलौकिकमानसमुत्पद्यते, तेन प्रामाण्यस्य ग्रहणम् । भट्टमते च ज्ञानस्य अतीन्द्रियतया ज्ञाततालिङ्गकानुमितेरेव प्राथमिकज्ञानग्रहरूपतया तया प्रामाण्यं गृह्यते । अनुमानप्रयोगस्तु 'घटो घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयः, घटत्वप्रकारकज्ञाततावत्त्वात्, यन्नैवं तन्नैवम्' इति । ज्ञातता च सविषयको ज्ञानजन्यः अतिरिक्तः पदार्थ इति मतविवेकः ।

यावत्त्वविशेषणे सत्येव अग्राहकान्तं सार्थकमित्यभिप्रेत्य प्रथमतः तस्यैव

## भास्करोदयाख्यव्याख्या.

पक्षत्वाद्यर्थं ज्ञानपदमिति जिज्ञासिते पक्षविशेषबोधकतया तत्सार्थकयति—**यद्धर्मेत्यादि** । **तात्पर्यग्राहकमिति** । तात्पर्यनियामकमित्यर्थः । ज्ञानस्य स्वप्रकाशत्वं गुरुमते तन्मतसिद्धान्तेन स्फुटयति—**अत्रेत्यादि** । **मितिर्ज्ञानं माता** ज्ञानाश्रयः **मेयो** विषयः । **इत्याकारकव्यवसायस्यैवोत्पत्तेरिति** । प्रथममिति शेषः । **स्वप्रकाशात्मकतयेति** मिति–मातृ–मेयैः सह ब्रह्मवत्स्वयमेव प्रकाशते । प्रामाण्यस्य शब्दमर्यादया विशेषणत्वेनानुपस्थितत्वात्कथं विशेषणतया भानमित्यत आह—**विशिष्टेत्यादि** । **लौकिकमानसमिति** । लौकिकत्वं चोक्तषड्विधसन्निकर्षजन्यत्वम् । एतच्चोपपादितम् । ज्ञानांशे चाक्षुषत्वाद्यसंभवान्मानसमेव । **तेनेति** । अनुव्यवसायेनेत्यर्थः । **ज्ञानस्यातीन्द्रियतयेति** । लौकिकमानसाविषयतयेत्यर्थः । **प्राथमिकज्ञानग्रहरूपतयेति** । प्रथमे भवं प्राथमिकं तच्च ज्ञानं व्यवसायात्मकं तस्य ग्रहरूपतया तद्ग्राहकानुमित्यात्मकज्ञानस्वरूपतयेति यावत् । **प्रामाण्यं गृह्यत इति** । ज्ञानप्रामाण्यं गृह्यत इत्यर्थः । **ज्ञातता चेत्यादि** । सविषयकः पदार्थः घटादिविषयवृत्तिः घटादिविषयकश्च ज्ञानजन्यः घटज्ञानोत्तरं घटेऽपूर्वज्ञाततोत्पद्यते इति तत्सिद्धान्तात् । **अतिरिक्तः** । विषयतावच्च विषयस्वरूपम् । **पदार्थः** धर्मस्वरूपः । **इति** एवंप्रकारेण । **मतविवेकः** । मतत्रयविवेक इति समुदितार्थः । प्रथमोपस्थितत्यागे मानाभावाद्ग्राहकान्तविशेषणफले दर्शनीये वैपरीत्येन तत्प्रदर्श-

ज्ञानेन प्रामाण्यग्रहाद्बाधवारणाय—अप्रामाण्याग्राहकेति ॥ 'इदं ज्ञानमप्रमा' इति अनुव्यवसायनिष्ठप्रामाण्यग्राहकस्य अप्रामाण्याग्राहकत्वाभावात् स्वतस्त्वं न

## नीलकण्ठी.

प्रयोजनं दर्शयति—**अनुमानेति**। प्रामाण्यस्येत्यादिः । **सिद्धसाधनेति**। नैयायिकमतेऽपि 'इदं ज्ञानं प्रमा, समर्थप्रवृत्तिजनकत्वात्' इत्यनुमानेन 'इदं ज्ञानं प्रमा' इत्याप्तवाक्येन च ग्राह्यत्वादिति भावः। नैयायिकैर्निषेधे साध्ये बाधवारणाय इत्यपि बोध्यम्। **यावदितीति**। ननु सामग्र्यां यावत्त्वविशेषणमयुक्तम्, यावत्सामग्रीजन्यग्रहासिद्धेः न हि सर्वाभिर्ज्ञानसामग्रीभिः एकं ज्ञानं जन्यते। न च यावतीः सामग्रीः विशिष्योपादाय तत्तज्जन्यग्रहविषयत्वं साध्यते इति वाच्यम्। अनुव्यवसायादिसामग्रीणां ताद्रूप्येण प्रवेशे मतत्रयसाधारण्यानिर्वाहादिति चेत्। न। यतो यावदिति फलतो ग्रहविशेषणम्। तथा च ज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वमिति फलितम् । तत्तद्धर्मप्रकारकज्ञानग्राहकसामग्रीजन्यग्रहत्वव्यापकविषयिताप्रतियोगित्वमिति निष्कर्ष इति संक्षेपः। **प्रामाण्याग्रहादिति**। व्यवसायनिष्ठेत्यादिः । प्रामाण्याविषयीकरणादित्यर्थः । **अप्रामाण्याग्राहकेतीति**। तथा च तादृशज्ञानसामग्र्याः साध्यकोट्यप्रविष्टत्वात्। तया प्रामाण्यस्याग्रहणेऽपि न बाध इति भावः॥ **अनुव्यवसायनिष्ठेत्यादि**। तादृशानुव्यवसायनिष्ठमप्रामाण्यवद्विशेष्यकत्वविशिष्टाप्रामाण्यप्रकारकत्वरूपं प्रामाण्यं तद्ग्राहकस्येत्यर्थः। सामान्ये नपुंसकनिर्देशः। **स्वतस्त्वं न स्यादिति**। यदा निरुक्तप्रामाण्यस्य पक्षता, तदा

## भास्करोदयाख्यव्याख्या.

क्रमूलाशयं वर्णयति—**यावच्चेत्यादिना**। **सिद्धसाधनेतीति**। मीमांसकैः ज्ञानग्राहकसामग्रीग्राह्यत्वरूपसाध्यसाधने—इति शेषः । **निषेधे साध्य इति**। यावद्ग्राहकसामग्रीग्राह्यत्वनिषेध इत्यर्थः। **बाधवारणायेति** । इदं ज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वादित्यनुमानग्राह्यत्वेनेति पूरणीयम्। **विशिष्येति** । प्रातिस्विकेन रूपेणेत्यर्थः। **तत्तज्जन्येति** । श्रृङ्गग्राहिकया तत्तत्सामग्रीजन्येत्यर्थः। **तत्तद्धर्मप्रकारकेति** । व्यवसायादिज्ञानस्य तत्तद्धर्मप्रकारकत्वेनैवानुभवादिति भावः। **प्रतियोगित्वमिति** । विषयत्वमित्यर्थः। **तथाचेति**। सामग्र्यामप्रामाण्याग्राहकत्वविशेषणदाने चेत्यर्थः । **तादृशज्ञानसामग्र्या इति**। अप्रामाण्यग्राहकसामग्र्या इत्यर्थः। **साध्यकोट्यप्रविष्टत्वादिति** । यावज्ज्ञानग्राहकसामग्रीकोट्यप्रविष्टत्वादित्यर्थः । **तया** । इदं ज्ञानमप्रमेति ज्ञानाप्रामाण्यग्राहकसामग्र्या । **प्रामाण्यस्याग्रहणेऽपीति** । यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वाभावेऽपीत्यर्थः। **न बाध इति**। ज्ञानप्रामाण्यरूपे पक्षे यावज्ज्ञानग्राह्यत्वरूपसाध्याभावात्साध्याभाववत्पक्षरूपबाधो नेत्यर्थः । प्रामाण्यग्राहकस्येत्यस्य सामग्रीपरत्वे निर्देशासङ्गतिं मनसिकृत्य तदर्थमाह—**अप्रामाण्यवदित्यादि** । इदं ज्ञानमित्यादिज्ञानमप्रामाण्यवद्विशेष्यत्वविशिष्टम् अप्रामाण्यप्रकारकं चेत्यतस्तद्विशिष्टाप्रामाण्यप्रकारकत्वरूपं प्रामाण्यं तद्ग्राहकत्वात्तद्ग्राहकत्वं विशिष्टानुव्यवसायात्मकज्ञानस्येत्यर्थः। **सामान्ये नपुंसकनिर्देश इति**। ग्राहकसामान्ये ग्राहकस्येति नपुंसक-

स्यादतः तदिति ॥ तस्मिन् ग्राह्यप्रामाण्याश्रये अप्रामाण्याग्राहकेत्यर्थः ॥ उदाहृतस्थले व्यवसाये अप्रामाण्यग्राहकस्याप्यनुव्यवसाये तदग्राहकत्वात्स्वतस्त्वसिद्धिः ॥

## नीलकण्ठी.

अप्रामाण्याग्राहकाप्रामाण्यप्रकारकज्ञानजनकसामग्र्या एव साध्यकोटौ निवेशनीयतया तादृशसामग्र्या [१]अप्रसिद्धत्वात् तस्य स्वतोग्राह्यत्वं न सिध्येदित्यर्थः । सप्तमीतत्पुरुषमभिप्रेत्याह—**तस्मिन्निति** । एतस्यैव विवरणं **ग्राह्यप्रामाण्याश्रय इति** । 'यादृशं प्रामाण्यं प्रकृतानुमितौ उद्देश्यं, तादृशप्रामाण्याश्रयविशेष्यकाप्रामाण्याप्रकारकज्ञानाजनकेत्यग्राहकान्तार्थः । 'इदं ज्ञानमप्रमा' इत्यनुव्यवसायनिष्ठप्रामाण्यग्राहकसामग्र्याः व्यवसायविशेष्यकाप्रामाण्यग्रहजनकत्वेऽपि अनुव्यवसायविशेष्यकाप्रामाण्यग्रहाजनकत्वात् ज्ञानग्राहकत्वाच्च अप्रामाण्यवद्विशेष्यकत्वादिघटितप्रामाण्यस्य स्वतोग्राह्यत्वसिद्धिरित्याह—**उदाहृतस्थल इति** । 'इदं ज्ञानमप्रमा' इत्यत्रेत्यर्थः । अधिकमस्मदीयाभिनवमणिदीधितिव्याख्यायामनुसंधेयम् ।

## भास्करोदयाख्यव्याख्या.

निर्देशो न पुलिङ्गमात्रनिर्देशोऽन्यथा सामग्र्यादिपरिग्रहो न स्यादिति भावः । **यद्वा निरुक्तप्रामाण्यस्य पक्षतेति** । तद्वति तत्प्रकारकत्वरूपप्रामाण्यस्य पक्षतेत्यर्थः । **अप्रामाण्याग्राहकेत्यादि** । इदं ज्ञानमित्याद्यनुव्यवसायज्ञानस्याप्रामाण्यवद्विशेष्यकत्वेनाप्रामाण्यवति प्रामाण्यप्रकारकतया तदभावप्रकारकत्वेनाप्रामाण्यवत्प्रामाण्यकत्वरूपपक्षकत्वाभावेन तादृशग्राहकसामग्र्या एव साध्यकोटौ निवेशनीयतया **तादृशसामग्र्या** अप्रामाण्यवत्प्रामाण्यप्रकारकज्ञानग्राहकसामग्र्या अप्रसिद्धेर्हेतौ पञ्चमी अप्रसिद्धेर्हेतोः स्वतस्त्वं न स्यादिति परेणान्वयः । **एतस्यैवेति** । लुप्तसप्तमीकतच्छब्दस्यैवेत्यर्थः । फलितार्थमाह—**यादृशमित्यादि** । यादृशं प्रामाण्यं तद्वति तत्प्रकारकत्वरूपं प्रकृतानुमितावुद्देश्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यत्वसाध्यसाधने पक्षस्तादृशप्रामाण्यविशेष्यकतद्वति तत्प्रकारकत्वरूपप्रामाण्यविशेष्यकाप्रामाण्यप्रकारकेत्य**ग्राहकान्तार्थः** । तदप्रामाण्याग्राहकान्तार्थः । तथाचेदं ज्ञानमित्याद्यनुव्यवसाये स्वतस्त्वं संपादयति—**इदमित्यादिना** । **अनुव्यवसायनिष्ठप्रामाण्यग्राहकसामग्र्या इति** । नेदं रजतमिति व्यवसायविषयकेदं ज्ञानमप्रमेत्यनुव्यवसायनिष्ठा या संयुक्तसमवायरूपा सामग्री तस्या इत्यर्थः । **व्यवसायविशेष्यकेति** । व्यवसायविषयकेत्यर्थः । **अनुव्यवसायविशेष्यकाप्रामाण्यग्रहाजनकत्वादिति** । स्वनिष्ठप्रामाण्यग्राहकसामग्र्याः स्वनिष्ठाप्रामाण्यग्रहजनकत्वे व्यवसायस्य प्रामाण्यं शशश्रृङ्गायमानं स्यादिति भावः । **ज्ञानग्राहकत्वाच्चेति** । व्यवसायात्मकज्ञानविषयत्वाच्चेत्यर्थः । **अप्रामाण्यवद्विशेष्यकत्वादिघटितप्रामाण्यस्येति** । अप्रामाण्यवद्विशेष्यकत्वादिविशिष्टाप्रामाण्याप्रकारकत्वरूपं प्रामाण्यं तद्ग्राहकोक्तेदं ज्ञानमित्याद्यनुव्यवसायात्मकज्ञानस्येत्यर्थः । ज्ञानग्राहकात्मादिजन्ययावद्ग्रहविषयत्वाप्रसिद्धिवारणाय

---

१ अप्रसिद्धेस्तस्य स्वतस्त्वं न स्यादित्यर्थः । इति भास्करोदयासंमतः पाठः ॥

ननु स्वत एव प्रामाण्यं गृह्यते, 'घटमहं जानामि' इत्यनुव्यवसायेन घटघटत्वयोरिव तत्संबन्धस्यापि विषयीकरणात् व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वात् ॥ पुरोवर्तिनि प्रकारसंबन्धस्यैव प्रमात्वपदार्थत्वादिति चेत् ॥ न ॥ स्वतःप्रामाण्यग्रहे

## नीलकण्ठी.

इत्थं विप्रतिपत्तिं प्रदर्श्य मीमांसकमतमुपन्यस्यति—**नन्विति** । **स्वत एवेत्यादि** । घटत्वादिघटितप्रामाण्यं निरुक्तसामग्रीत एव गृह्यत इत्यर्थः । अप्यर्थकेनैवकारेण अनुमानादिपरिग्रहः । **अनुव्यवसायेनेति** । इदं च मिश्रमताभिप्रायेण । मतत्रयसाधारण्येन तु प्राथमिकज्ञानग्रहेणेति ध्येयम् । **तत्संबन्धस्यापीति** । घटघटत्वयोर्यः संबन्धः तस्यापीत्यर्थः । ननु अनुव्यवसाये कथं संबन्धस्य भानमित्याशङ्क्य यथा घटघटत्वयोर्व्यवसायरूपप्रत्यासत्त्या भानं, तथा तत्संबन्धस्यापि व्यवसायप्रत्यासत्तेरविशेषादित्याह—**व्यवसायेति** । ननु तावता कथं प्रामाण्यस्य भानमत आह—**पुरोवर्तिनि प्रकारसंबन्धस्यैवेति** । पुरोवर्तिनि यः प्रकारसंबन्धः तद्घटितस्यैवेत्यर्थः । अयमाशयः । नैयायिका अपि अनुव्यवसाये विशेष्यत्वप्रकारत्वयोर्भानमङ्गीकुर्वन्ति 'पुरोवर्तिनं घटत्वेन जानामि' इत्याकारकस्यैव अनुव्यवसायस्य तैरङ्गीकारात् । परंतु पुरोवर्तिनि घटादौ घटत्वादिरूपप्रकारसंबन्धभानं नाङ्गीकुर्वन्ति । अतः तत्र प्रकारसंबन्धस्य भानव्यवस्थापने

## भास्करोदयाख्यव्याख्या.

सामग्रीति बोध्यम् । व्युत्क्रमेण प्रयोजनप्रदर्शनमनेकशिष्यजिज्ञासानुरोधेनेति तत्त्वम् । विशेषलेखने प्रकरणाध्ययने प्रवृत्तिमतां प्रमोहनिरासायाभिनवमणिदीधितिव्याख्यायां स्वनिर्मितत्वख्यापनाय चाह—**अधिकमित्यादि** । **उपन्यस्यतीति** । दूषयितुमिति शेषः । **घटत्वादिघटितप्रामाण्यमिति** । घटत्वादिमति घटत्वादिप्रकारकत्वरूपं प्रामाण्यमित्यर्थः । **निरुक्तसामग्रीत एवेति** । ज्ञानग्राहकसामग्रीत एवेत्यर्थः । **अप्यर्थकेत्यादि** । अन्यथा परेषां परतोग्रहणं व्यावर्त्येतेति भावः । नन्विति शङ्कितुर्मीमांसकस्य स्वतोग्राह्यत्वमेवेत्येवकारस्येतरव्यवच्छेदार्थकत्वे न बाधकमित्याभाति । नन्विति शङ्काया गुरुमिश्रभट्टसाधारण्यादनुव्यवसायमात्रस्य स्वतःप्रामाण्यनिर्वचनं संदर्भविरुद्धमत आह—**इदं च मिश्रमताभिप्रायेणेति** । **घटघटत्वयोर्यः संबन्ध इति** । समवायसंबन्ध इत्यर्थः । **घटघटत्वयोर्व्यवसायरूपप्रत्यासत्त्येति** । व्यवसायविषयकं ज्ञानं व्यवसायविषयविषयं नावगाहयेद्व्यवसायप्रत्यासत्तिरेवानुव्यवसायेन सिध्येदिति भावः । **व्यवसायप्रत्यासत्तेरविशेषादिति** । व्यवसायात्मकज्ञानसंबन्धो विषयविधया घटघटत्वयोरिव समवायसंबन्धांशेऽपि समः अतो हेतोरित्यर्थः । **पुरोवर्तिनीत्यादि** । पुरोवर्तिनि घटे यः **प्रकारसंबन्धः** घटत्वसमवायः **तद्घटितस्यैव** तद्वति तत्प्रकारकसंबन्धस्यैवेत्यर्थः । पुरोवर्तिनि प्रकारसंबन्धभानमनुव्यवसाये सर्वमतसाधारणमिति किं तद्व्यवस्थापनेनेति चेत्तदाशयमाह—**अयमाशय इति** । **प्रकारसंबन्धभानं नाङ्गीकुर्वन्तीति** । प्रकारसंबन्धभाने पुरोवर्तिनं

'जलज्ञानं प्रमा न वा' इत्यनभ्यासदशायां प्रमात्वसंशयो न स्यात् । अनुव्यवसायेन प्रामाण्यस्य निश्चितत्वात् । तस्मात् स्वतोग्राह्यत्वाभावात् परतोग्राह्यत्वम् ॥ तथाहि—प्रथमं जलज्ञानानन्तरं प्रवृत्तौ सत्यां जललाभे सति 'पूर्वोत्पन्नं ज्ञानं

## नीलकण्ठी.

किमपि नाविशिष्टमिति प्रामाण्यस्य भानं सिध्यति अनुपस्थितयोरपि विशेष्यत्वप्रकारत्वयोर्भानस्य सर्वसंमतत्वादिति ॥ **जलज्ञानमित्यादि** । 'जलज्ञानं प्रमा न वा' इत्याकारकः ॥ **अनभ्यासदशायां** प्राथमिकजलज्ञानग्रहोत्तरदशायाम् ॥ अनुभवसिद्धः प्रमात्वसंशयो न स्यादित्यर्थः ॥ **निश्चितत्वादिति** । तद्वत्तानिश्चयस्य तदभाववत्ताज्ञानं प्रति प्रतिबन्धकत्वादिति भावः ॥ अत्र 'ज्ञातो घटः' इति प्रतीतेर्ज्ञानविषयताविषयकत्वकल्पनेनैव निर्वाहे अतिरिक्तज्ञातता न कल्पनीया गौरवात् मानाभावाच्चेति तन्निरसनप्रकारो बोध्यः ॥ **तस्मादिति** । अनभ्यासदशायां संशयानुभवादित्यर्थः । एतस्य स्वतोग्राह्यत्वाभावेऽन्वयः ॥ **परतोग्राह्यत्वमिति** । प्रामाण्यस्यानुमानादित एव ग्राह्यत्वमित्यर्थः । **प्रवृत्तौ सत्यामिति** । एतेन मीमांसकैरभ्युपगतायां प्रामाण्यनिश्चयस्य प्रवृत्तिहेतुतायां व्यभिचारो दर्शितः ॥ नच निष्कम्पप्रवृत्तावेव प्रमाण्यनिश्चयस्य हेतुता, सकम्पप्रवृत्तौ तु प्रामाण्यसंशयस्य । निष्कम्पत्वं सकम्पत्वं च विषयिताविशेषः । एवंच तत्र सकम्पप्रवृत्त्यङ्गीकारेऽपि प्रामाण्यनिश्चयस्य हेतुतायां कथं व्यभिचार इति वाच्यम् ॥

## भास्करोदयाख्यव्याख्या.

घटत्वसंबन्धेन जानामीत्यनुव्यवसायाङ्गीकारापत्तिरिति भावः । **तत्रेति** । अनुव्यवसाय इत्यर्थः । **प्रकारसंबन्धस्य भानव्यस्थापन इति** । मीमांसकैरित्यादिः । **किमपि नाविशिष्टमितीति** । व्यवसायादनुव्यवसाये विषयविशेषो नेत्यर्थः । तद्वद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वरूपोक्तप्रामाण्यमनुव्यवसायेन कथं सिध्येद्विशेष्यत्वप्रकारत्वयोः शब्दादनुपस्थितत्वादिति मनसिकृत्य समाधिमाह—**अनुपस्थितेत्यादि । अनुभवसिद्धः प्रमात्वसंशय इति** । सर्वानुभवसिद्ध इत्यर्थः । **तद्वत्तानिश्चयस्येति** । जलमहं जनामीत्यनुव्यवसायेनेदं जलमिति व्यवसायात्मकज्ञाने प्रामाण्यवत्तानिश्चयस्येत्यर्थः । **तदभाववत्ताज्ञानं प्रति प्रतिवन्धकत्वादिति** । जलज्ञानं प्रमा न वेत्याकारकसंशयस्य जले प्रामाण्यवत्तातदभाववत्तोभयावगाहितया तदभाववत्ताज्ञानानुदयेन तदुभयावगाहिसंशयानुत्पत्तेरित्यर्थः । मूलानुक्तोऽपि भट्टमतनिरसनप्रकारो विशेषवित्समाधानाय प्रदर्श्यते—**अत्रेत्यादिग्रन्थेन** । विषयता च स्वरूपसंबन्धविशेषः । **एतेन** । प्रथमजलज्ञानानन्तरं प्रवृत्तौ सत्यामिति कथनेन । **व्यभिचारो दर्शित इति** । प्रामाण्यनिश्चयाभावेऽपि प्राथमिकजलज्ञानोत्तरं जले प्रवृत्तेः सर्वानुभवसिद्धत्वादिति भावः । मीमांसकः प्रवृत्तिविशेषे प्रामाण्यनिश्चयस्य हेतुतामवलम्ब्य प्राप्तव्यभिचारं निराकुरुते—**नचेति । एवंचेति** । निष्कम्पसकम्पप्रवृत्त्योः प्रामाण्यनिश्चयसंशययोर्हेतुत्वस्वीकारे चेत्यर्थः । **तत्रेति** । प्रथमजलज्ञानानन्तरक्षणे इत्यर्थः ।

प्रमा' समर्थप्रवृत्तिजनकत्वात् 'यन्नैवं तन्नैवम् यथा अप्रमा' इति व्यतिरेकिणा प्रमात्वं निश्चीयते ॥ द्वितीयादिज्ञानेषु पूर्वज्ञानदृष्टान्तेन तत्सजातीयत्वलिङ्गेनान्वयव्यतिरेकिणापि गृह्यते ॥

प्रमाया गुणजन्यत्वमुत्पत्तौ परतस्त्वं। प्रमासाधारणकारणं गुणः अप्रमासाधार-

## नीलकण्ठी.

तथापि यत्र प्रामाण्यस्याप्रामाण्यस्य वा ज्ञानं नासीत्, आसीत् च केवलं जलादिज्ञानं, तत्र प्रवृत्तिप्रदर्शनेन प्रामाण्यसंशयहेतुतायां व्यभिचारस्य दुर्वारत्वात्। नचैवं जलादिज्ञाने अप्रामाण्यनिश्चयकाले प्रवृत्तिः स्यादिति शङ्कनीयम् ॥ अगृहीताप्रामाण्यकजलादिज्ञानत्वेन तद्धेतुतास्वीकारेणादोषादिति संक्षेपः। **जललाभे सतीति**। एतावता वक्ष्यमाणस्य प्रामाण्यव्यवस्थापकहेतोः स्वरूपासिद्धिशङ्का निराकृता। इदानीं पक्षस्यासत्त्वादाह—**पूर्वोत्पन्नमिति। समर्थेति**। तद्वद्विशेष्यकतत्प्रकारकेत्यर्थः। अन्वय्युदाहरणासंभवात् व्यतिरेक्युदाहरणं सदृष्टान्तमाह—**यन्नैवं तन्नैवमिति**। यत्, अप्रमा, तत् असमर्थप्रवृत्तिजनकमित्यर्थः। **व्यतिरेकिणा**। व्यतिरेकव्याप्तिमता। **निश्चीयते**। अनुमीयते। **द्वितीयादिज्ञानेषु**। द्वितीयादिजलज्ञानेषु। **तत्सजातीयत्वलिङ्गेन**। पूर्वज्ञानसजातीयत्वरूपलिङ्गेन। समर्थप्रवृत्तिजनकत्वेनेतियावत्। **गृह्यत इति**। प्रामाण्यमनुमीयते इत्यर्थः ॥

एवं ज्ञप्तौ परतस्त्वं व्यवस्थाप्य उत्पत्तौ तन्निरूपयति—**प्रमाया इति। प्रमासाधारणकारणमिति**। प्रमात्वाधिकदेशवृत्तिधर्मानवच्छिन्नप्रमानिष्ठकार्यता-

## भास्करोदयाख्यव्याख्या

**सकम्पप्रवृत्त्यङ्गीकारेऽपीति**। यद्युत्पन्नं मे जलज्ञानं प्रमाणं तदा मे प्रवृत्तिः सफला स्यादित्येवंरीत्या प्रवृत्तौ सकम्पत्वमावेदितव्यम्। **कथं व्यभिचार इति**। तत्र निष्कम्पप्रवृत्तेरभावात्प्रामाण्यनिश्चयाभावो न व्यभिचारहेतुरिति भावः। तर्हि तत्र प्रामाण्यसंशयस्य प्रवृत्तिहेतुता वाच्येति चेन्नेत्याह—**तथापीत्यादि**। मृगमरीचिकायां जलज्ञाने विशेषदर्शनेनाप्रामाण्यनिश्चयकाले जलज्ञानमप्रमेति प्रामाण्याभावप्रकारकजलज्ञाने सति जलज्ञानमात्रस्य प्रवृत्तिहेतुत्वे उद्देश्यतया तत्सत्त्वात्प्रवृत्तिः स्यादित्याशङ्कते—**नचैवमिति। तावतेति**। जललाभे सतीत्यनेनेत्यर्थः। **प्रामाण्यव्यवस्थापकहेतोरिति**। समर्थप्रवृत्तिजनकत्वादिति हेतोरित्यर्थः। **स्वरूपासिद्धिशङ्का निराकृतेति**। जललाभे सति जलज्ञानं तद्वद्विशेष्यकतत्प्रकारकत्वेन समर्थप्रवृत्तिजनकमन्यथास्य भ्रमात्मकतयापि तद्धेतोस्तद्वद्विशेष्यकतत्प्रकारकत्वरूपविशेषणाभावप्रयुक्तविशिष्टाभावेन स्वरूपासिद्धिशङ्का केषांचिद्दूरीकृतेत्यर्थः। **इदानीमिति**। जललाभोत्तरमित्यर्थः। **पक्षस्यासत्त्वादिति**। जलज्ञानस्यासत्त्वादित्यर्थः। **पूर्वोत्पन्नमितीति**। यन्नैवं तन्नैवमित्यादीत्यर्थः। **असमर्थप्रवृत्तिजनकमिति**। तदभाववद्विशेष्यकतत्प्रकारकप्रवृत्तिजनकमित्यर्थः। **उत्पत्तौ तन्निरूपयतीति**। प्रसङ्गात् प्रमोत्पत्तौ परतस्त्वं

णकारणं दोषः ॥ तत्र प्रत्यक्षे विशेषणवद्विशेष्यसंनिकर्षो गुणः । अनुमितौ व्यापकवति व्याप्यज्ञानम् । उपमितौ यथार्थसादृश्यज्ञानम् । शाब्दज्ञाने यथार्थयोग्यताज्ञानम् । इत्याद्यूहनीयम् । पुरोवर्तिनि प्रकाराभावस्यानुव्यवसायेनानुपस्थितत्वात् अप्रमात्वं परत एव गृह्यते ॥ पित्तादिदोषजन्यत्वं उत्पत्तौ परतस्त्वम् ॥

नन्वु सर्वेषां ज्ञानानां यथार्थत्वात् अयथार्थज्ञानमेव नास्तीति ॥ न च 'शुक्ता-

## नीलकण्ठी.

निरूपितकारणताशालीत्यर्थः । तेन ज्ञानमात्रहेतुभूतात्ममनःसंयोगादेः भ्रमजनकपित्तादिदोषाणां च व्युदासः । अप्रमासाधारणकारणत्वमप्येवमेव परिष्कर्तव्यम् । चतुर्विधप्रमायां हेतुभूतं गुणं क्रमेण उपपादयति—**तत्रेति** । प्रमासु मध्ये इत्यर्थः । **इत्याद्यूहनीयमिति** । 'पीतः शङ्खः' इत्यादि भ्रमेऽपि पित्तादिर्दोषः । इदं रजतमित्यादिभ्रमे च चाकचक्यादिरिति–ऊहनीयमित्यर्थः । अप्रमात्वस्य परतस्त्वं सयुक्तिकं दर्शयति—**पुरोवर्तिनीति** । **अनुपस्थितत्वादिति** । अविषयीकरणादित्यर्थः । तथा च प्रत्यासत्तेरभावाद् अप्रमात्वस्यानुव्यवसायेन ग्रहणं न संभवतीति भावः । **अप्रमात्वम्** । तदभाववद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वम् । **परत एव गृह्यत इति** । अनुमानादित एव गृह्यत इत्यर्थः । अनुमानप्रयोगस्तु 'इदं ज्ञानमप्रमा, विसंवादिप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथा प्रमा' इति ।

गुरुमतं निरस्यान्यथाख्यातिं व्यवस्थापयति—**नन्वित्यादिना** । **यथार्थत्वात्** । प्रमात्वात् । **अयथार्थज्ञानमेव नास्तीति** । तदभाववद्विशेष्यकत-

## भास्करोदयाख्यव्याख्या.

निरूपयतीत्यर्थः । **प्रमात्वेत्यादि** । प्रमात्वाधिकदेशवृत्तिधर्मः ज्ञानत्वरूपः अप्रमासाधारणत्वात् तदनवच्छिन्ना प्रमात्वावच्छिन्नेत्यर्थः । **आदेरिति** । आदिना कार्यमात्रं प्रति कारणस्य कालस्य सिद्धान्तिमते सर्वावभाससाक्षिचैतन्यस्य च परिग्रहः । **व्युदास इति** । प्रमाऽसाधारणकारणत्वव्युदास इत्यर्थः । **एवमेव परिष्कर्तव्यमिति** । अप्रमात्वाधिकदेशवृत्तिधर्मानवच्छिन्नकार्यतानिरूपितकारणताशाली दोष इति परिष्कर्तव्यमित्यर्थः । तेनात्ममनःसंयोगादेश्चक्षुःसंनिकर्षादेश्च व्युदासः । **पित्तादिर्दोष इति** । नयनगत इत्यादिः । **चाकचक्यादिरिति** । विषयगत इत्यादिः । **अनुपस्थितत्वादिति** । रजतमहं जानामीत्यनुव्यवसायेन पुरोवर्तिनि रजतत्वप्रकाराभावस्याविषयीकरणात्तदभाववद्विशेष्यकतत्प्रकारकत्वरूपाप्रामाण्यस्य स्वतोग्राह्यत्वं नेति भावः । **इदं ज्ञानमप्रमेति** । शुक्तावुत्पन्नरजतज्ञानमप्रमेत्यर्थः । **विसंवादिप्रवृत्तिजनकत्वादिति** । विपरीतज्ञानवत्प्रवृत्तिजनकत्वादित्यर्थः । **गुरुमतं निरस्येति** । यद्यपि मूले मिश्रमतं निरसितं न गुरुभट्टयोस्तथापि त्रितयाभिमतस्वतस्त्वनिरासाद्गुरुमतोक्तिः । **अन्यथाख्यातिं व्यवस्थापयतीति** । अन्यथा दोषवत्त्वेन ख्यातिः अयथार्थरजतज्ञानमन्यथाख्यातिपदार्थस्तत्कर्मकव्यवस्थापनमनिर्वचनीयख्यातिनिरासायेत्यर्थः । **नन्वित्यादि-**

विदं रजतम्' इति ज्ञानात् प्रवृत्तिदर्शनादन्यथाख्यातिसिद्धिरिति वाच्यम् । रजतस्मृतिपुरोवर्तिज्ञानाभ्यामेव प्रवृत्तिसंभवात् ॥ उपस्थितेष्टभेदाग्रहस्यैव सर्वत्र प्रवर्तकत्वेन 'नेदं रजतम्' इत्यादौ अतिप्रसङ्गाभावादिति चेत् ॥ न ॥ सत्यरज-

## नीलकण्ठी.

त्प्रकारकत्वरूपायथार्थत्वं ज्ञानवृत्तिर्नेत्यर्थः । तेन न सिद्ध्यसिद्धिभ्यां व्याघातः । अयथार्थत्वस्य तु प्रसिद्धिरिच्छादौ बोध्या । **अन्यथाख्यातीति** । तदनङ्गीकारे पुरोवर्तिविशेष्यकरजतत्वादिरूपेष्टतावच्छेदकप्रकारकज्ञानस्य संवादिविसंवादिसाधारणप्रवृत्तिजनकतया तत्र प्रवृत्तिरेव न स्यादिति भावः । **रजतस्मृतीति** । क्लृप्तनियतपूर्ववर्तिभ्यामित्यादिः । **संभवादिति** । तथा च प्रवृत्तिं प्रति विशिष्टज्ञानत्वेन कारणतैव नास्तीति तदनुरोधेन अन्यथाख्यातिकल्पनं न संभवतीति भावः । नन्वेवं यत्र 'नेदं रजतम्' इति बाधग्रहः, तत्रापि प्रवृत्तिः स्यादत आह—**उपस्थितेति** । एतावता स्मृतिरूपकारणापेक्षा स्फुटीकृता । **इष्टभेदाग्रहस्यैव** । रजतादिरूपेष्टभेदग्रहाभावस्यैव । एवकारेण विशिष्टज्ञानस्य प्रवर्तकत्वव्यवच्छेदः । **सर्वत्रेति** । रजते शुक्तौ चेत्यर्थः । रजतस्थले विशिष्टज्ञानस्यैव प्रवृत्तिं प्रति कारणत्वमेष्टव्यम् । अन्यथा धर्मधर्मिज्ञानयोरिष्टभेदाग्रहत्वरूपगुरुधर्मा-

## भास्करोदयाख्यव्याख्या.

**नेति** । नन्वित्यादिशङ्कापूर्वकग्रन्थेत्यर्थः । **तदभाववद्विशेष्यकेत्यादि** । शशशृङ्गं नास्तीत्यत्रेवेहार्थ इत्यर्थः । **तेनेति** । एवमर्थकरणेनेत्यर्थः । **न सिद्ध्यसिद्धिभ्यां व्याघात इति** । यथाश्रुतेऽयथार्थज्ञानं नास्तीत्यस्मादयथार्थज्ञानासिद्धिर्बोध्यत इत्यसिद्धेः प्रतियोगिविधयाऽयथार्थज्ञानसिद्धेश्च व्याघातदोष इत्यर्थः । **अयथार्थत्वस्य तु प्रसिद्धिरिच्छादौ बोध्येति** । मृगमरीचिकायां जलार्थिनो या जलविषयिणी इदं जलं मे भूयादितीच्छा तस्यां जलत्वाभाववद्विशेष्यकजलत्वप्रकारकत्वरूपायथार्थत्वं प्रसिद्धमित्यर्थः । **तदनङ्गीकार इति** । अन्यथाख्यात्यनङ्गीकार इत्यर्थः । अन्यथाख्यातेरङ्गीकारे बीजमाह—**पुरोवर्तीत्यादि** । **संवादीत्यादि** । ईदृशं ज्ञानं प्रवर्तकं संवादिनो यथार्थरजते । विसंवादिनः शुक्तिरजत इति विवेकोऽतोऽनुगतकारणतयावश्यमेष्टव्या सेत्यर्थः । **तदनुरोधेनेति** । विशिष्टज्ञानानुरोधेनेत्यर्थः । **तत्रापीति** । बाधग्रहदशायामपीत्यर्थः । **प्रवृत्तिः स्यादिति** । चाकचक्यलिङ्गेन क्लृप्तनियतपूर्ववृत्तिरजतस्मृतितथाविधपुरोवृत्तिज्ञानयोः प्रवर्तकयोः सत्त्वादित्यादिः । **भेदग्रहाभावस्यैवेति** । अभेदग्रहस्यैवेति यावत् । **रजते शुक्तौ चेत्यर्थ इति** । वास्तविकरजते शुक्तिरजते चेत्यर्थः । इदानीमन्यथाख्यातिं निर्धारयति—**रजतस्थल इत्यादिना** । **रजतस्थले** । उक्तोभयरजतस्थले । **अन्यथा** । विशिष्टज्ञानस्य कारणतानङ्गीकारे । **धर्मधर्मिज्ञानयोः** । धर्मो रजतत्वं धर्मी इदन्त्वावच्छिन्नः तज्ज्ञानयोः बाधग्रहेऽप्युक्तरीत्या तयोः सत्त्वेन तदापत्तेर्वारणाय इष्टभेदाग्रहत्वरूपगुरुधर्मावच्छिन्नस्य च कारणत्वमङ्गीकार्यमन्यथाख्यातिमनङ्गीकर्त्रेति महद्गौरवं तन्मत

तत्स्थले पुरोवर्तिविशेष्यकरजतत्वप्रकारकज्ञानस्य लाघवेन प्रवृत्तिजनकतया शुक्तावपि रजतार्थिप्रवृत्तिजनकत्वेन विशिष्टज्ञानस्यैव कल्पनात् ॥

**अयथार्थस्त्रिविधः—संशयविपर्ययतर्कभेदात् ॥ एकस्मिन् धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यज्ञानं संशयः ॥ यथा स्थाणुर्वा पुरुषो वेति ॥ मिथ्याज्ञानं विपर्ययः ॥ यथा शुक्तौ इदं रजतमिति ॥ व्याप्यारोपेण व्यापकारोपस्तर्कः ॥ यथा यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यादिति ॥**

---

## नीलकण्ठी.

वच्छिन्नस्य च कारणतापत्तेः । एवंच तत्र प्रवृत्तिं प्रत्यन्वयव्यतिरेकाभ्यां विशिष्टज्ञानस्य कारणतायां कल्पनीयायां लाघवात् सामान्यतः प्रवृत्तित्वावच्छिन्नं प्रति विशिष्टज्ञानत्वेन अनुगतकारणभावस्यैव कल्पनीयतया विसंवादिप्रवृत्तेरपि तत्कार्यतावच्छेदकावलीढतया तत्पूर्वं विशिष्टज्ञानस्य कल्पनीयत्वात् अन्यथाख्यातिर्निराबाधैवेति समाधत्ते—**सत्यरजतेति** । **रजतत्वप्रकारकज्ञानस्येति** । तादृशज्ञानत्वावच्छिन्नस्येत्यर्थः । **प्रवृत्तिजनकतया** । प्रवृत्तित्वावच्छिन्नजनकतया । **विशिष्टज्ञानस्यैव** । पुरोवर्तिविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानस्यैव । एतेन इष्टभेदाग्रहस्य व्यवच्छेदः । **कल्पनात्** अनुमानात् । तत्प्रयोगस्तु 'इयं पुरोवर्तिविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानजन्या, प्रवृत्तित्वात्, रजतस्थलीयप्रवृत्तिवत्' इति । **स्यादेतत्** प्रत्यक्षे संनिकर्षस्य कारणतया रजतत्वांशे तदभावेन कथं शुक्तौ 'इदं रजतं' इति प्रत्यक्षमिति चेत् । मैवम् । अलौकिकसंनिकर्षस्यापि प्रत्यक्षजनकतया व्यवस्थापितत्वेन ज्ञानलक्षणाप्रत्यासत्तेरेवं प्रकृते संभवात् ।

## भास्करोदयाख्यव्याख्या.

इत्यर्थः । **एवंचेति** । तन्मते महद्गौरवसिद्धौ चेत्यर्थः । **तत्र** । सत्यरजतस्थले । **सामान्यतः प्रवृत्तित्वावच्छिन्नं प्रतीति** । प्रवृत्तित्वरूपसामान्यधर्मावच्छिन्नं प्रतीत्यर्थः । **तत्पूर्वमिति** । प्रवृत्तेः पूर्वमित्यर्थः । **निराबाधैवेति** । विशिष्टज्ञानमेवान्यथाख्यातिनियामकमिति सा निष्प्रत्यूहैवेत्यर्थः । **तादृशज्ञानत्वावच्छिन्नस्येति** । रजतत्वप्रकारकविशिष्टज्ञानत्वावच्छिन्नस्येत्यर्थः । **इष्टतावच्छेदकप्रकारकज्ञानस्यैवेति** । रजतत्वप्रकारकज्ञानस्यैवेत्यर्थः । **इष्टभेदाग्रहस्य व्यवच्छेद इति** । अनेन विशिष्टज्ञानानुरोधेनान्यथाख्यातिरावश्यिक्येवेत्युपसंहृतम् । **अनुमानादिति** । लाघवेनास्मिन्नेव प्रवृत्तिकारणत्वस्यानुमानप्रमाणसिद्धत्वादित्यर्थः । **तत्प्रयोगस्त्विति** । अनुमानप्रयोगस्त्वित्यर्थः । **इयमित्यनेन** शुक्तिरजतप्रवृत्तिः पक्षत्वेन निर्दिश्यते । **संनिकर्षस्येति** । तार्किकसंनिकर्षस्येत्यर्थः । **व्यवस्थापितत्वेनेति** । सुरभिचन्दनमिति विशिष्टप्रत्यक्षविषये सौरभ्यांशे ज्ञानलक्षणाप्रत्यासत्तेर्निर्धारितत्वेनेत्यर्थः । **नन्वेवं** पर्वतो वह्निमान् इत्यनुमितिविषयवह्न्यंशे ज्ञानप्रत्यासत्त्या वह्निः प्रत्यक्ष इति प्रामाणिकव्यवहाराप-

अयथार्थानुभवं विभजते—अयथार्थ इति ॥ स्वप्नस्य मानसविपर्ययरूपत्वात् न त्रैविध्यविरोधः ॥ संशयलक्षणमाह—एकेति ॥ 'घटपटौ' इति समूहालम्बनेऽतिव्याप्तिवारणाय—एकेति । 'घटो द्रव्यम्' इत्यादौ अतिव्याप्तिवारणाय विरुद्धेति । 'पटत्वविरुद्धघटत्वविरुद्धघटत्ववान्' इत्यत्र अतिव्याप्तिवारणाय—नानेति ॥

## नीलकण्ठी.

ननु अयथार्थानुभवस्य त्रैविध्यकथनं मूलेऽसङ्गतं स्वप्नज्ञानस्य अनुभूतपदार्थस्मरणकफपित्तादिरूपधातुशुभाशुभादृष्टैर्जायमानस्य बाधितार्थविषयकस्य अनुभवसिद्धत्वात् । अत आह—स्वप्नस्येति । यद्यपि प्रदेशविशेषावस्थितमनःसंयोगः स्वप्नः । तथापि तदसमवायिकारणकज्ञाने स्वप्नशब्दो भाक्त इत्यवधेयम् । चाक्षुषादिरूपत्वासंभवादाह—मानसेति । यत्तु स्मृतिरूपं स्वप्नज्ञानमिति तद्भाष्यादिविरुद्धमित्युपेक्षितम् । कोट्योरव्याप्यवृत्तित्वज्ञानोत्तरं जायमाने एकस्मिन् धर्मिणि घटतदभावोभयप्रकारकसमुच्चये अतिव्याप्तिवारणाय विरोधविषयकत्वस्य निवेशेऽपि

## भास्करोदयाख्यव्याख्या.

त्तिरिति चेन्न । ज्ञानप्रत्यासत्तेः प्रत्यक्षमात्रप्रयोजकत्वे शक्यमित्थमापादयितुं तदेव नानुमितिप्रयोजकत्वस्यापि तत्र सत्त्वादिति संक्षेपः । स्वप्नस्येति ग्रन्थमवतारयति—नन्विति । मूल इति । सङ्ग्रह इत्यर्थः । स्वप्नज्ञानस्येति । स्वप्नात्मकज्ञानस्येत्यर्थः । तदुत्पत्तौ कारणान्याह—अनुभूतेत्यादि । क्वचिदनुभूतपदार्थस्मरणादनुभूतपदार्थविषयकं स्वाप्नं ज्ञानं क्वचिच्चाननुभूतशशश्रृङ्गादिज्ञानं धातुपित्तादिरूपैः क्वचिच्च शुभाशुभादृष्टैर्देवराक्षसादिज्ञानमिति योजना । बाधितार्थविषयकस्येति । असदर्थविषयकस्येत्यर्थः । अनुभवसिद्धत्वादिति । सर्वानुभवसिद्धत्वादित्यर्थः । प्रदेशविशेषावच्छिन्नमनःसंयोगः स्वप्न इति । नाडीविशेषावच्छिन्नमनःसंयोग एव स्वप्न इत्यर्थः । तथाच कथमयथार्थज्ञानव्यपदेश इति चेदाह—तथापीति । तदसमवायिकारणकज्ञाने । उक्तसंयोगात्मकस्वप्नासमवायिकारणकज्ञाने स्वप्नशब्दो भाक्तो गौण इत्यर्थः । तद्भाष्यादिविरुद्धमिति । तत्र तस्य स्मृतिरूपत्वेऽनुभूतस्यैव तद्विषयत्वेनाननुभूतशशश्रृङ्गादेर्भानायोगादिति स्थितम् । संशयलक्षणे एकस्मिन्धर्मिणि विरुद्धनानाधर्मावगाहिज्ञाने विरोधविषयत्वमपि मूलानुक्तं निवेश्यम् । अन्यथेदृशसमुच्चयेऽतिव्याप्तिरित्याह—कोट्योरित्यादि । कोट्योर्घटतदभावोभयप्रकारकसमुच्चयविषययोर्घटतदभावयोरव्याप्यवृत्तित्वज्ञानोत्तरं वृक्षे मूले घटोऽग्रे तदभाव इति प्रतीत्या तयोरव्याप्यवृत्तित्वज्ञानानन्तरं जायमाने[2] उत्पत्स्यमाने एकस्मिन्धर्मिणि वृक्षरूपे घटतदभावोभयप्रकारकसमुच्चये घटतदभावोभयवान्वृक्ष इति समुच्चयात्मकज्ञानेऽतिव्याप्तिवारणाय संशयलक्षणातिप्रसङ्गप्रवृत्तिविघाताय विरोधविषयकत्वस्य निवेशेऽपि प्रकृतेऽव्याप्यवृत्तिकयोर्विषययोः परस्परं विरोधाभावेन विरोधविषयकत्वस्य समुच्चयात्मकज्ञानेऽसत्त्वादतिव्याप्तिवारणेऽपि

१ सिद्धान्तसी. २ वर्तमानसामीप्ये लट्.

विपर्ययलक्षणमाह—मिथ्येति ॥ तदभाववति तत्प्रकारकनिश्चय इत्यर्थः ॥ तर्कलक्षणमाह—व्याप्येति ॥ यद्यपि तर्को विपर्ययेऽन्तर्भवति, तथापि प्रमाणानुग्राहकत्वाद् भेदेन कीर्तनम् ॥

## नीलकण्ठी.

नानेत्यस्याऽऽवश्यकतेति दर्शयितुमाह—**पटत्वविरुद्धेति** । **नानेतीति** । एकधर्मिनिष्ठविशेष्यतानिरूपितविरुद्धनानाधर्मनिष्ठप्रकारताकत्वाभावात् नातिव्याप्तिरिति भावः । नच विभिन्नरूपेणैकधर्मिविशेष्यकविरुद्धानेकधर्मप्रकारकज्ञानेऽतिव्याप्तिरिति शङ्क्यम् । एकधर्मावच्छिन्नविशेष्यताघटितपरिष्कारकरणेन अदोषादिति दिक् । तन्त्रान्तरे ब्रह्मभिन्ने सर्वस्मिन् एव मिथ्याशब्दस्य प्रयोगदर्शनादाह—**तदभाववतीति** । प्रमावारणायेदम् । तदभाववद्विशेष्यकत्वावच्छिन्नतत्प्रकारताकेत्याद्यर्थविवक्षणान्न समूहालम्बनेऽतिप्रसङ्गः । संशयस्य इच्छायाश्च वारणाय संशयान्यज्ञानार्थकं निश्चयपदमिति संक्षेपः ।

**मूले व्याप्यारोपेणेति** । आहार्यव्याप्यवत्ताभ्रमजन्य आहार्यव्यापकवत्ताभ्रमस्तर्क इत्यर्थः । आहार्यज्ञानमात्रेतिप्रसङ्गवारणाय जन्यान्तम् । अयं न पुरुष इति निश्चयसत्त्वे शाखादौ करादिभ्रमात् 'अयं पुरुषः' इत्याद्याहार्यारोपः ।

## भास्करोदयाख्यव्याख्या.

**नानेत्यस्य** धर्मविशेषणस्यावश्यकतेति **दर्शयितुमाह**—दोषस्थलमाहेति समुदितार्थः । द्रव्यत्वावच्छिन्नं भूतलं घटपटोभयवदेवं प्रमेयत्वावच्छिन्नं भूतलत्वावच्छिन्नमित्याद्यात्मकसमुच्चयेऽतिप्रसङ्गमाशङ्कते—**नचेति** । एकधर्मावच्छिन्नैकधर्मिनिष्ठविशेष्यतानिरूपितनानाधर्मिनिष्ठप्रकारताकत्वपरिष्कारेण नानाधर्मावच्छिन्नत्वेन धर्मिनिष्ठविशेष्यतायाः प्रकृते दोषाभावादित्यर्थः । **तन्त्रान्तर इति** । ब्रह्ममीमांसातन्त्र इत्यर्थः । **सर्वस्मिन्निति** । जगतीत्यर्थः । सत्यत्वाभाववति जगति सत्यत्वप्रकारकनिश्चयाज्जगतो मिथ्यात्वम् । त्रिकालाबाध्यत्वेन ब्रह्मण एव सत्यत्वात् । **तदभाववद्विशेष्यकत्वावच्छिन्नतत्प्रकारताकेत्याद्यर्थविवक्षणादिति** । तदभाववद्विशेष्यकत्वावच्छिन्नतत्प्रकारताकत्वस्य च सत्त्वान्मिथ्यात्वलक्षणमतिचर्येत इत्यर्थः । उक्तार्थविवक्षणे ययोर्विषयतयोर्निरूप्यनिरूपकभावस्तन्निरूपितविषयितयोरेवावच्छेद्यावच्छेदकभाव इति तदभाववद्विशेष्यकत्वावच्छिन्नतत्प्रकारताकत्वाभावान्नातिचर्येत इति भावः । **संशयान्यज्ञानार्थकं निश्चयपदमिति** । ज्ञाने संशयान्यत्वविशेषणात्संशये ज्ञानत्वाचेच्छायां च मिथ्यालक्षणातिप्रसङ्गवारणायैतदर्थकं निश्चयपदं विवक्षणीयमित्यर्थः । उपकाराय मूलमूलं विवृणोति—**मूले व्याप्यारोपेणेतीति** । मूले व्याप्यारोपेणेत्यादीत्युचितं मूलस्थारोपपदं भ्रमार्थकं तत्र चाहार्येति विशेषणं तथाच तत्फलितमर्थमाह—**आहार्येत्यादि** । **आहार्यज्ञानमात्र इति** । आहार्यभ्रमात्मकज्ञानमात्रे इत्यर्थः । **अयमिति** । वृक्ष इत्यर्थः । **न पुरुष इति निश्चयसत्त्व इति** । आप्तोक्तशब्दजन्यशब्दात्मकनिश्चयज्ञानसत्त्वे अथवा किंचिद्विशेषदर्शनजन्यप्रत्यक्षा-

**स्मृतिरपि द्विधा—यथार्थाऽयथार्था चेति ॥ प्रमाजन्या यथार्था ॥ अप्रमाजन्या अयथार्था ॥**

स्मृतिं विभजते—स्मृतिरिति ।

**सर्वेषामनुकूल (तया) वेदनीयं सुखम् ॥ प्रतिकूल (तया) वेद-नीयं दुःखम् ॥ इच्छा कामः ॥ क्रोधो द्वेषः ॥ कृतिः प्र-यत्नः ॥ विहितकर्मजन्यो धर्मः ॥ निषिद्धकर्मजन्योऽधर्मः ॥ बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः ॥ बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च ॥ नित्या ईश्वरस्य अनित्या जीवस्य ॥**

सुखं लक्षयति—सर्वेषामिति ॥ 'सुख्यहम्' इत्याद्यनुव्यवसायगम्यं सुखत्वादिकमेव लक्षणम् यथाश्रुतं तु स्वरूपकथनमिति द्रष्टव्यम् ॥

## नीलकण्ठी.

तत्रातिव्याप्तिवारणाय प्रथममाहार्यपदम् । रजतत्वव्याप्याभाववत्ताग्रहकाले आहार्यं यद्रजतव्याप्यवत्ताज्ञानम् तज्जन्ये 'इदं रजतम्' इत्यनाहार्यज्ञानेऽतिव्याप्तिवारणाय द्वितीयमाहार्यपदम् । तर्के आपाद्यव्यतिरेकनिश्चयः आपाद्यापादकयोर्व्याप्तिनिश्चयश्च कारणमिति ध्येयम् । तर्कस्तु मानसविपर्ययरूप एवेति कथमयथार्थस्य त्रैविध्यकथनमित्याह—यद्यपीति । **प्रमाणानुग्राहकत्वम्** । प्रमाणेन प्रमायां जननीयायां प्रतिबन्धकविघटनद्वारोपयोगित्वम् । **भेदेनेति** । तर्कत्वरूपवैलक्षण्येनेत्यर्थः । तर्कस्य प्रमाणानुग्राहकत्वज्ञापनाय तथा कथनमिति भावः ॥ इत्यनुभवनिरूपणम् ॥ * ॥

ननु 'सर्वेषामनुकूल( तया )वेदनीयम्' इत्यादि मूलं सुखादिलक्षणपरं न संभवति परद्रव्योपभोगादिजन्यसुखे साधूनां द्वेषदर्शनादव्याप्तेरित्याशङ्कायां 'सुख्य-

## भास्करोदयाख्यव्याख्या.

त्मकनिश्चयज्ञानसत्त्वे इत्यर्थः । **रजतत्वव्याप्याभाववत्ताग्रहकाल इति** । रजतत्वव्याप्यचाकचक्याभाववत्तानिश्चयज्ञानकाल इत्यर्थः । किं तर्के कारणमिति प्रश्ने तदाह—**तर्केत्यादि** । **आपाद्यव्यतिरेकनिश्चयः** । आपाद्यव्यतिरेक इति षष्ठीतत्पुरुषः । **मानसविपर्ययरूप एवेतीति** । भ्रमत्वादिति भावः । **प्रतिबन्धकविघटनद्वारेति** । व्याप्तिनिश्चयप्रतिबन्धकव्यभिचारशङ्काविघटनद्वारेत्यर्थः । **तर्कत्व( रूप )वैलक्षण्येनेति** । संशयत्वविपर्ययत्वाभ्यां विजातीयतर्कत्वधर्मेणेत्यर्थः । **प्रमाणानुग्राहकत्वज्ञापनायेति** । प्रमाणप्रतिबन्धकव्यभिचारशङ्कानिवर्तकत्वबोधनायेत्यर्थः । **तथाकथनमिति** । पृथक्कथनमित्यर्थः । **अव्याप्तेरिति** । सर्वेषां साध्वसाधूनामनुकूलतयेष्टत्वेन वेदनीयं ज्ञानविषयीभूतं न परद्रव्योपभोगादिजन्यसुखं 'न परदारान्गच्छेदिति' स्मृत्या प्रस्तुत

१ कारणमाह ।

**संस्कारस्त्रिविधः—वेगो, भावना, स्थितिस्थापकश्चेति ॥**
**वेगः पृथिव्यादिचतुष्टयमनोमात्रवृत्तिः ॥**

संस्कारं विभजते—संस्कार इति ॥ संस्कारत्वजातिमान् संस्कारः ॥ वेगस्याश्रयमाह—वेग इति ॥ वेगत्वजातिमान् वेगः ॥

**अनुभवजन्या स्मृतिहेतुर्भावना । आत्ममात्रवृत्तिः ॥**

## नीलकण्ठी.

हम्' इत्यादि प्रत्यक्षसिद्धसुखत्वादिकमेव लक्षणमित्याह—**सुख्यहमित्याद्यन्विति** । सुखत्वादीत्यादिना दुःखत्वपरिग्रहः । **यथाश्रुतं त्विति** । सर्वेषामनुकूलतया इत्यादिकमित्यर्थः ।

**अनुभवेतीति** । स्मृतिं संस्कारं च प्रत्यनुभवत्वेन कारणतां वदतां प्राचामयमभिप्रायः—तत्तद्विषयकस्मृतिं तादृशसंस्कारं च प्रति तत्तद्विषयकानुभवत्वेनैव हेतुता न तु तत्तद्विषयकज्ञानत्वेनानुभवत्वस्यापि जातित्वेन ज्ञानत्वापेक्षया गौरवाभावात् । न च विनिगमनाविरह इति शङ्क्यम् । व्याप्यधर्मपुरस्कारेण कारणत्वसंभवे व्यापकधर्मस्यान्यथासिद्धिनिरूपकत्वादिति । नवीनाः पुनः तत्तद्विषयकस्मृतिं तादृशं संस्कारं च प्रति तत्तद्विषयकज्ञानत्वेनैव हेतुता न

## भास्करोदयाख्यव्याख्या.

प्रतिकूलतया वेदनीयत्वादित्यर्थः । **सुख्यहमित्यादिप्रत्यक्षसिद्धसुखत्वादिकमेवेति** । स्त्रीधनादिमात्रोपभोगादिजन्यसुखानन्तरमहं सुखीत्यादिप्रत्यक्षविषयत्वस्य सुखत्वे सत्त्वात्तदेव तथेत्यर्थः । ननु प्रमादादगम्यागमनोत्तरजायमानसुखत्वे घृणोत्पत्तेर्विदुषः सुख्यहमित्याद्यनुव्यवसायविषयत्वाभावेनाव्याप्तितादवस्थ्यमिति चेन्न । सुखानुवृत्तेर्दुःपरिहार्यत्वेन सुख्यहमिति तात्कालिकानुव्यवसायाविषयत्वध्रौव्येऽपि वलवदनिष्टानुवन्धित्वेन सुखत्वे दुःखत्वोपचार इति विशेषः । **दुःखत्वपरिग्रह इति** । दुःख्यहमिति प्रत्यक्षसिद्धदुःखत्वं दुःखलक्षणं वोध्यमित्यर्थः । अन्यथाऽऽपत्त्यौ[1] पुरुषविशेषभुज्यमानविषजन्यदुःखे तत्त्वाभावेनाव्याप्तिः स्यादित्यूह्यम् । **अनुभवेतीति** । यद्यप्येतल्लक्षणेन भावनायामनुभवजन्यत्वं स्मृतौ तु भावनाहेतुकत्वं लब्धं तथाप्यनुभवजन्या स्मृतिरिति स्मृतेर्लक्षणात्तदेकवाक्यतयाऽस्य भावनायामनुभवस्यैव कारणत्वं स्मृतौ त्वनुभवस्य भावनायाश्च कारणत्वे तात्पर्यादनुभवस्य स्मृतिहेतुत्वं प्राचामभिप्रायविषयमिति । तदनुवादपूर्वकं तदभिप्रायं दर्शयति—**स्मृतीत्यादिना** । **तादृशसंस्कारं च प्रति** । तद्विषयकसंस्कारं च प्रति ज्ञानत्वेन कारणत्वे ज्ञानत्वस्य जातित्वेनानुगततयतदवच्छिन्नस्य कारणत्वे लाघवमनुभवस्य तत्त्वे तु गौरवमनुभवत्वस्य तत्तदनुभवव्यक्तिनियतत्वेन कारणतावच्छेदकानन्त्यादित्याशङ्कितस्यापि तत्वाश्रयणे वाधकाभावान्न गौरवाशङ्केत्याह—**अनुभवेत्यादि** । **व्यापकधर्मस्येति** । अनुभव-

१ विपत्तिविशेषेण ।

## नीलकण्ठी.

स्वानुभवत्वेन संस्कारस्य फलनाश्यतया प्रथमस्मरणेनैवानुभयजन्यसंस्कारस्य नाशेन सकृदनुभूतस्य स्मरणोत्तरमस्मरणप्रसङ्गात्। न च स्वजन्यस्मरणस्य संस्कारनाशकत्वे स्मृतिसाधारणज्ञानत्वेन हेतुत्वेऽपि घटपटादिरूपनानाविषयावगाहिना अनुभवेन जनितस्य तावद्विषयकसंस्कारस्य घटाद्येकैकगोचरस्मरणेनापि विनाशात् तदुत्तरं पटादिस्मरणानुपपत्तिः, तत्तद्विषयकसंस्काराभावात्। स्मृतिजन्यपटादिगोचरसंस्कारस्य च विभिन्नविषयकतया पटादिस्मारकत्वायोगात्। अतः स्वजन्यचरमस्मृतेरेवानायत्या तत्तद्व्यक्तित्वेन तत्तत्संस्कारनाशकताया अङ्गीकर्तव्यतया अनुभवत्वेन जनकतायामपि न दोष इति वाच्यम्। अन्यूनविषयकस्यैव फलस्य नाशकत्वाङ्गीकारेणादोषात्। जायते च पुनः पुनः स्मरणाद्दृढतरः संस्कारः। दार्ढ्यं च उत्कर्षरूपो जातिविशेषो झटिति स्मृत्युत्पादप्रयोजकः। न च दैववशसंपन्नात् झटित्युद्बोधकसमवधानादेव झटिति स्मृतिनियमोपपत्तौ न तत्प्रयोजकतया संस्कारगतो जातिविशेषः सिध्यतीति वाच्यम्। झटिति स्मृतेर्दैवाधीनझटि-

## भास्करोदयाख्यव्याख्या.

स्मृतिसाधारणत्वादिति भावः। **अनुभवजन्यसंस्कारस्य नाशेनेति**। स्वजन्यसंस्कारविशिष्टानुभवनाशेनेत्यर्थः। **स्मरणोत्तरमस्मरणप्रसङ्गादिति**। स्मरणोत्तरं स्मरणाभावप्रसङ्गादित्यर्थः। इदानीं पूर्वस्मरणस्य ज्ञानत्वेन कारणत्वात् स्मरणान्तरोत्पत्तेरप्रत्यूहत्वादिति भावः। **स्वजन्येति**। संस्कारजन्येत्यर्थः। **स्मरणस्य संस्कारनाशकत्वे इति**। अनुभवविशिष्टसंस्कारनाशकत्वे इत्यर्थः। **स्मृतिसाधारणज्ञानत्वेनेति**। ज्ञानत्वस्य स्मृत्यनुभवोभयवृत्तित्वादिति भावः। **हेतुत्वेऽपीति**। अगत्या ज्ञानस्य ज्ञानत्वेन स्मृतिं प्रति हेतुत्वाङ्गीकारेऽपीत्यर्थः। **तद्विषयकसंस्काराभावादिति**। यावद्विषयकसंस्कारनाशेन पटादिविषयकसंस्कारस्यापि नाशादिति भावः। **विभिन्नविषयकतया पटादिस्मारकत्वायोगादिति**। यद्गोचरो यः संस्कारः स तद्गोचरस्मृतिमेव जनयेदन्यथाऽतिप्रसङ्गापत्तेर्दुःपरिहार्यत्वाज्ज्ञानत्वेन कारणताया दुर्वचत्वादिति भावः। **स्वजन्येति**। संस्कारजन्येत्यर्थः। **अन्यूनविषयकस्यैव फलस्य नाशकत्वेति**। संस्कारान्यूनविषयकस्मृतिरूपफलस्यैव संस्कारनाशकत्वेत्यर्थः। **अदोषादिति**। यावद्गोचरसंस्कारस्य यत्किंचिद्गोचरस्मरणनाश्यत्वे पटादिस्मरणानापत्तिरूपदोषस्याभावादित्यर्थः। स्मृतिं प्रति ज्ञानत्वेन हेतुत्वं निरुच्य संस्कारं प्रति तत्त्वेन हेतुत्वं निर्वक्तुमनुभवं दर्शयति—**जायत इत्यादिना**। पुनः पुनः स्मरणात् हेतौ पञ्चमी प्रथमस्मरणेनैवानुभवनाशादिति भावः। **दैववशसंपन्नादिति**। अदृष्टविशेषप्राप्तादित्यर्थः। **झटित्युद्बोधकसमवधानादेवेति**। शीघ्रोत्पादकसमभिव्याहारादेवेत्यर्थः। हस्तिहस्तिपकयोः संबन्धज्ञानोत्तरं कदाचिदन्यतरस्मिन् हस्तिनि हस्तिपके वा दृष्टे अन्यतरस्य झटिति स्मृतेरन्यतरस्मृत्युद्बोधकझटितिहस्तिहस्तिपकान्यतरसमवधानादुत्पत्तेरनुभवात्संस्कारातिशयरूपं न कल्पनीयमित्यभि-

भावनां लक्षयति—अनुभवेति ॥ अनुभवध्वंसेऽतिव्याप्तिवारणाय स्मृतीति ॥ आत्मादौ अतिव्याप्तिवारणाय अनुभवेति ॥ स्मृतेरपि संस्कारजनकत्वं नवीनैरुक्तम्

**अन्यथाकृतस्य पुनस्तदवस्थापादकः स्थितिस्थापकः कटादिपृथिवीवृत्तिः ॥**

स्थितिस्थापकं लक्षयति—अन्यथेति ॥ संख्यादयोऽष्टौ नैमित्तिकद्रवत्ववेगस्थितिस्थापकाः सामान्यगुणाः अन्ये रूपादयो विशेषगुणाः द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तिजातिमत्त्वं विशेषगुणत्वम् ॥

## नीलकण्ठी.

त्युद्बोधकसमवधानाधीनत्वमुपगम्य संस्कारातिशयखण्डने शास्त्रादावभ्यासस्यैवानापत्तेः । किं च परित्यज्य च निश्चिताव्यभिचारकं रूपं गृह्यमाणव्यभिचारकेण कारणत्वकल्पनं न संभवतीति नानुभवत्वेन स्मृतिसंस्कारहेतुतासंभव इति प्राहुः । तन्मतं दर्शयति—**स्मृतेरपीति** । अपिना अनुभवपरिग्रहः । एतन्मते च लक्षणे 'अनुभवजन्या' इति स्थाने 'ज्ञानजन्या' इति निवेशनीयम् ।

**द्रव्यविभाजकोपाधीति** । पृथिवीत्वजलत्वादिरूपं यद्द्रव्यविभाजकोपाधिद्वयं प्रत्येकं तत्समानाधिकरणाः द्वित्वपृथक्त्वसंयोगादयः तदवृत्तिजातिमद्गुणत्वमित्यर्थः । रूपादिषु चतुर्षु तादृशं रूपत्वादिकं, सांसिद्धिकद्रवत्वे च द्रवत्वत्वावान्तरजातिं स्नेहादिषु दशसु स्नेहत्वादिकं भावनायां संस्कारत्वावान्तरजातिं चादाय लक्षणसमन्वयः । नन्विदं लक्षणमेकत्वादिष्वतिव्याप्तम् । एकत्वत्वादिजातेरपि तादृशत्वात् । नच तादृशोपाधिद्वयसमानाधिकरणवृत्तिगुणत्वन्यूनवृत्तिजातिशून्यगुणत्वमिति तदर्थः । एवं चैकत्वादिषु संख्यात्वादेः सत्त्वात् तादृशजातिशून्यत्वस्या-

## भास्करोदयाख्यव्याख्या.

प्रायके संस्कारातिशयखण्डने दोषमाह—**शास्त्रादावभ्यासस्यैवानापत्तेरिति** । संस्कारदार्ढ्यायैव तदुपयोगादिति भावः । नच जातिस्मरेषु व्यभिचारः । जन्मान्तरीयकल्पनात् । **निश्चिताव्यभिचारकं रूपमिति** । ज्ञानत्वरूपमित्यर्थः । **गृह्यमाणव्यभिचारकेणेति** । प्रथमस्मरणेनानुभवविशिष्टसंस्कारनाशे स्मरणोत्तरं स्मरणानुभवेन पुनः पुनः स्मरणाद्दृढतरसंस्कारानुभवेन चानुभवत्वं गृह्यमाणव्यभिचारकं रूपं नेत्यर्थः । **एतन्मते चेति** । ज्ञानत्वेन कारणत्वाभ्युपेतृनव्यमत इत्यर्थः । **लक्षणे इति** । संस्कारलक्षणे इत्यर्थः । **तत्समानाधिकरणा इति** । द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तिजातित्वादित्यर्थः । **जातिशून्यगुणत्वमिति** । जातिशून्यत्वे सति गुणत्वमित्यर्थः । **एकत्वादिषु संख्यात्वादेः सत्त्वादिति** । द्रव्यविभाजकोपाधिद्वयसमानाधिकरणः संख्यादिरपि तद्वृत्तिः संख्यात्वादिः गुणत्वावान्तरजातिस्तद्वत्त्वस्यैकत्वादिरूपसंख्यादौ सत्त्वादित्यर्थः । **तादृशजातित्वासंभवादिति** । उक्तोपाधिद्वयसमानाधिकरणवृत्तिगुणत्वन्यूनवृत्तिजातित्वासंभवादित्यर्थः । परिमाणत्वस्य चतुर्विधपरिमाणवृत्तित्वेऽपि

चलनात्मकं कर्म ॥ ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम् ॥ १ ॥ अधोदेशसंयोगहेतुरपक्षेपणम् ॥ २ ॥ शरीरसन्निकृष्टसंयोगहेतुराकुञ्चनम् ॥ ३ ॥ शरीरविप्रकृष्टसंयोगहेतुः प्रसारणम् ॥ ४ ॥ अन्यत्सर्वं गमनम् ॥ ५ ॥

## नीलकण्ठी.

सत्त्वेन नातिव्याप्तिरिति वाच्यम् । एवमपि परिमाणादिष्वतिव्याप्तिः । परिमाणत्वादेस्तादृशजातित्वासंभवादिति चेत् । अत्र प्रवदन्त्यभिज्ञाः । यद्यद्रूपावच्छिन्नसमानाधिकरणं यत्किंचिद्द्रव्यविभाजकोपाधिद्वयं तत्तद्रूपभिन्ना स्थितिस्थापकवृत्तिभिन्ना च या जातिः तद्वत्त्वे सति गुणत्वमिति तदर्थः । यद्रूपावच्छिन्नसामानाधिकरण्यस्य समवायसंबन्धघटितस्यैव निवेशनीयतया यद्रूपपदेन घटत्वादेर्धर्तुमशक्यत्वाद्घटादौ अतिव्याप्तिरतो विशेष्यम् । स्थितिस्थापकेऽतिव्याप्तिवारणाय स्थितिस्थापकभिन्नेति, स्थितिस्थापकस्य पृथिव्यादिचतुष्टयवृत्तित्वमते तु न देयम् । रूपत्वादेर्यद्रूपपदेन धर्तुं शक्यत्वेऽपि अवान्तरजातिमादाय रूपादिषु लक्षणसमन्वयः । पार्थिवानुष्णाशीतस्पर्शस्य वायवीयापेक्षया विजातीयस्यैव अनुभवसिद्धत्वात् । संख्यादयस्तु सामान्यगुणा इति न तत्र वैजात्यं जलपृथिव्यादिभेदेन सिद्धान्तसिद्धमतस्तत्र नातिव्याप्तिः तादृशजातिमद्भिन्नगुणत्वमेव सामान्यगुणानां लक्षणमवसेयमिति । इति गुणनिरूपणम् ॥ * ॥

## भास्करोदयाख्यव्याख्या.

तस्य जातित्वे मानाभावात् । नच प्रत्यक्षम् । अणुपरिमाणत्वस्यातद्विषयत्वात् । नचाप्यनुमानम् अणुपरिमाणस्याकारणत्वात् । अतस्तच्छून्यत्वे सति गुणत्वात्परिमाणस्य विशेषगुणव्यवहारापत्तिरिति भावः । **यद्यद्रूपेति** । सामान्यगुणवृत्तिगुणत्वन्यूनसंख्यात्वादेर्यद्यद्रूपपदेन ग्रहणं बोध्यम् । **तद्भिन्नेति** । तद्रूपभिन्नेत्यर्थः । परिमाणत्वस्योपाधित्वेऽपि यद्रूपत्वेन ग्रहणे बाधकाभावात् । **समवायसंबन्धघटितस्यैव निवेशनीयतयेति** । अन्यथा संयोगेन घटत्वरूपावच्छिन्नसामानाधिकरण्यमादाय यत्किंचिद्द्रव्यविभाजकोपाधिद्वये तद्भिन्नजातिमत्त्वेन संख्यादावतिव्याप्तिः । **यद्रूपपदेन घटत्वादेर्धर्तुमशक्यत्वादिति** । घटत्वरूपावच्छिन्नसामानाधिकरण्यं संयोगसंबन्धघटितमेव, तेन यद्रूपपदेन संख्यात्वादेरेव ग्रहणात्तद्रूपभिन्नमेव घटत्वादीति भावः । **विशेष्यमिति** । गुणत्वरूपविशेष्यदलमित्यर्थः । **पृथिव्यादिचतुष्टयवृत्तित्वमते त्विति** । पृथिव्यामाकुञ्चितकटे ज्यया न्यग्भावितधनुरादौ यथा तथा जले यन्त्रोर्ध्वगे तेजसि सुवर्णे वायौ भस्त्रावच्छिन्ने तदवस्थाप्रतिपादकत्वानुभवाच्चतुष्टयवृत्तित्वमिति मते त्वित्यर्थः । **न देयमिति** । अयं भावः । स्थितिस्थापकस्य पृथिवीमात्रवृत्तित्वमते स्थितिस्थापकत्वस्य यद्रूपपदेन ग्रहणं न संभवति यस्मात्तदवच्छिन्नसमानाधिकरणं यत्किंचिद्द्रव्यविभाजकोपाधिद्वयं पृथिवीत्वजलत्वरूपं तेजस्त्ववायुत्वरूपं वा संभवतीति

कर्मणो लक्षणमाह—चलनेति ॥ उत्क्षेपणादीनां कार्यभेदमाह—ऊर्ध्वेति ॥ शरीरेति ॥ वक्रतासंपादकं कर्म आकुञ्चनम् । ऋजुतासंपादकं प्रसारणमित्यर्थः ।

**नित्यमेकमनेकानुगतं सामान्यम् ॥ द्रव्यगुणकर्मवृत्ति । परं सत्ता । अपरं द्रव्यत्वादि ॥**

सामान्यं लक्षयति—नित्यमिति । संयोगेऽतिव्याप्तिवारणाय—नित्यमिति । प-रमाणुपरिमाणादावतिव्याप्तिवारणाय—अनेकेति । अनुगतत्वं समवेतत्वम् । घटाद्यत्यन्ताभावो घटाद्यनुगतोऽप्यसमवेत इति नाभावादावतिव्याप्तिः ॥

**नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः ॥**

---

## नीलकण्ठी.

मूलोक्तं सर्वसंग्राहकं न[२] भवतीत्याह—**वक्रतेति** । इति कर्मनिरूपणम् ॥ * ॥

**नित्यमितीति** । अत्र नित्यत्वं प्रागभावाप्रतियोगित्वं ध्वंसाप्रतियोगित्वं वा अत्र एकतरनिवेशेनापि संयोगादेर्वारणात् एकपदं स्वरूपकथनमिति द्रष्टव्यम् । इति सामान्यनिरूपणम् ॥ * ॥

मूले **व्यावर्तका इति** । नित्यद्रव्याणां परस्परभेदसाधका इत्यर्थः । अथ विशेषपदार्थे किं प्रमाणम् । नचात्यन्तं संकीर्णानां परमाणूनां भेदकधर्मं विना

## भास्करोदयाख्यव्याख्या.

तद्भिन्नत्वाभावात् स्थितिस्थापकत्वमादाय स्थितिस्थापके तदापत्तेरसंभव इति । **अवान्तरजातिमादायेति** । रूपत्वावान्तरनीलत्वादिजातिमादायेत्यर्थः । नील-त्वादेस्तु न यद्रूपपदेन ग्रहणं तदवच्छिन्नसामानाधिकरण्यस्य यत्किंचिद्द्रव्यविभाज-कोपाधिद्वयेऽसत्वादिति भावः । यद्रूपपदेन सर्शत्वस्य धर्तुंशक्यत्वमाशङ्क्य विजा-तीयत्वेनावान्तरभेदमादायाव्याप्तिं परिहरति—**पार्थिवेत्यादिना** । अप्तेजसोस्तु शीतत्वोष्णत्वावान्तरमादाय दोषः । **सिद्धान्तसिद्धमिति** । तत्रापि तथा वैजात्यकल्पने सामान्यगुणत्वमेव तेषां भज्येतेत्येव सिद्धान्त इति भावः । **तादृशजातिमद्भिन्न इति** । विजातीयजातिमद्भिन्न इत्यर्थः । **सर्वसङ्ग्राह-कं नेति** । कटादिवृत्त्याकुञ्चनस्य शरीरसंनिकृष्टसंयोगहेतुत्वाभावादिति भावः । प्रागभावाप्रतियोगित्वरूपं नित्यत्वं प्रागभावे ध्वंसाप्रतियोगित्वरूपं नित्यत्वं ध्वंसे चातिव्याप्तमिति विशिष्टलक्षणौचित्यात्प्रत्येकलक्षणासङ्गतिं मनसिकृत्याह—**अत्रेति** । सामान्यलक्षण इत्यर्थः । **एकतरनिवेशेनापीति** । एकतरनित्यत्वनिवेशेनापी-त्यर्थः । **संयोगादेर्वारणादिति** । संयोगादेरुत्पत्तिनाशयोरनुभवादिति भावः । **स्वरूपकथनमिति** । न तु व्यावर्तकमित्यर्थः । उपकाराय **मूलेत्यादि** । **अत्यन्तं संकीर्णानामिति** । अविभागेन लक्ष्यमाणानामित्यर्थः । **भेदकधर्मं**

---

१ अत्र जलपरमाणुगतरूपेऽतिव्याप्तिवारणाय एकेति, इति पाठाधिक्यं क्वचिद्दृश्यते परं तट्टी-कानुमतं द्रष्टव्यम्. २ मूलोक्तस्य सर्वसंग्राहकत्वं न संभवति, मूलोक्तस्य सर्वसंग्राहक-त्वाभावादाह—इति पुस्तकान्तरेषु पाठोऽर्थतोऽविशिष्ट इत्युपेक्षितः ॥

विशेषं लक्षयति—नित्येति ॥

**नित्यसंबन्धः समवायः ॥ अयुतसिद्धवृत्तिः ॥ ययोर्द्वयोर्मध्ये एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ ॥ अवयवावयविनौ, गुणगुणिनौ, क्रियाक्रियावन्तौ, जातिव्यक्ती, विशेषनित्यद्रव्ये चेति ॥**

समवायं लक्षति—नित्येति ॥ संयोगेऽतिव्याप्तिवारणाय—नित्येति ॥ आकाशादावतिव्याप्तिवारणाय—संबन्ध इति ॥ अयुतसिद्धलक्षणमाह—ययोरिति ॥

'नीलो घटः' इति विशिष्टप्रतीतिः विशेषणविशेष्यसंबन्धविषया विशिष्टप्रत्ययत्वात् दण्डीतिप्रत्ययवदिति समवायसिद्धिः ॥ अवयवावयविनाविति ॥ द्रव्यसमवायिकारणमवयवः । तज्जन्यं द्रव्यमवयवि ॥

---

## नीलकण्ठी.

भेदासिद्धिरतो विशेषोऽङ्गीकर्तव्य इति वाच्यम् । एकत्वादिव्यक्तेरेव भेदकत्वसंभवादिति चेत् । न । यतः एतत्परमाणौ तत्परमाणुभेदसाधने एकत्वादेर्व्यभिचारितया एतदेकत्वादेरेव हेतुता वाच्या । नच तयोः परमाण्वोर्भेदासिद्धावेकत्वादावेतत्त्वं सुग्रहम् । एतत्परमाणुसमवेतत्वं यस्मिंस्तस्यैव हितत्त्वम् । तस्मात्प्रतिनित्यद्रव्यमेष्टव्यो विशेषपदार्थः । स एव च स्वसजातीयानां परस्परं भेदसाधक इति तत्रापि विशेषान्तरापेक्षा नास्त्येव । अतो नानवस्था इति संप्रदायः । इति विशेषनिरूपणम् ॥ * ॥

वैशेषिकमतसाधारण्येन समवायेऽनुमानं प्रमाणयति—**नील इति** । समवायिकारणत्वस्य अन्त्यावयविनि सत्त्वात् **द्रव्येति** । परमाणुवारणाय **जन्येति** । अविनश्यदवस्थमेवापराश्रितमवतिष्ठते विनश्यदवस्थं त्वनाश्रितं क्षणमवतिष्ठते । यथा तन्त्वादिनाशे पटादिरिति मनसिकृत्य **मूलेऽविनश्यदित्युक्तम्** । इति समवायनिरूपणम् ॥ * ॥

## भास्करोदयाख्यव्याख्या.

**विनेति** । सर्वरूपतो भेदाभावादिति भावः । **एकत्वादिव्यक्तेरेवेति** । आदिना परिमाणत्वव्यक्तिपरिग्रहः । **एकत्वादेर्व्यभिचारितयेति** । एकत्वपरिमाणत्वयोः परमाण्वन्तरवृत्तित्वेन भेदसाधकत्वासंभवतयेत्यर्थः । **सुग्रहमिति** । नच सुग्रहमित्यन्वयः । साध्यसिद्ध्युत्तरं हेतुसिद्धिर्हेतुसिद्ध्युत्तरं साध्यसिद्धिरित्यन्योन्याश्रयाद्भेदासिद्धिरिति भावः । किंनामैतदेकत्वमिति चेदाह—**एतत्परमाण्वित्यादि** । हि यस्मादेतत्परमाणुसमवेतत्वं यस्मिन्नेकत्वे **तस्यैव** तादृशैकत्वस्यैव तत्त्वमेतदेकत्वमित्यर्थः । उपसंहरति—**तस्मादिति** । **स्वसजातीयानामिति** । विशेषजातीयानामित्यर्थः । **अन्त्यावयविनि सत्त्वादिति** । पिठरपाकवादिनां मतेऽन्त्यावयविनो घटस्य स्वसमवेतरूपं प्रति समवायिकारणत्वस्य प्रसिद्धत्वादिति भावः । **मूलेति** । संग्रह इत्यर्थः । **अविनश्यदित्युक्तमिति** । ययोर्मध्ये

**अनादिः सान्तः प्रागभावः, उत्पत्तेः पूर्वं कार्यस्य ॥ सादिरनन्तः प्रध्वंसः, उत्पत्त्यनन्तरं कार्यस्य ॥ त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः ॥ यथा भूतले घटो नास्तीति ॥ तादात्म्यसंवन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः ॥ यथा घटः पटो नेति ॥**

प्रागभावं लक्षयति—अनादिरिति॥ आकाशादौ अतिव्याप्तिवारणाय सान्त इति घटादौ अतिव्याप्तिवारणाय अनादिरिति ॥ प्रतियोगिसमवायिकारणवृत्तिः प्रतियोगिजनकः भविष्यतीति व्यवहारहेतुः प्रागभावः ॥ ध्वंसं लक्षयति—सादिरिति ॥ घटादौ अतिव्याप्तिवारणाय अनन्त इति ॥ आकाशादौ अतिव्याप्तिवारणाय सादिरिति ॥ प्रतियोगिजन्यः प्रतियोगिसमवायिकारणवृत्तिः ध्वस्तव्यवहारहेतुः ध्वंसः ॥

## नीलकण्ठी.

प्रागभावे प्रमाणमाह—**भविष्यतीति** । **संसर्गेति** । तादात्म्यातिरिक्तसंसर्गेत्यर्थः । ध्वंसप्रागभावयोः प्रतियोगितावच्छेदकसंबन्धो वर्तत इति मताभिप्रायेण **त्रैकालिकेति** विशेषणम् । अन्यथा अन्योन्याभाववारकेणैव तयोर्वारणात् तद्वैयर्थ्यतापत्तेः । यदि संसर्गावच्छिन्नेत्यादेरन्योन्याभावभिन्नोऽभाव इत्यर्थः । तदा त्रैकालिकेति सिद्धान्तेऽपि सार्थकम् । त्रैकालिकत्वमिह नित्यत्वरूपम् । मूले **'भूतले घटो नास्तीति'** । अत्र घटाभावांशे भूतलस्य विशेष्यत्वं संबन्धः 'घटाभाववद्भूतलम्' । इत्यत्र तु भूतलांशेऽभावस्य विशेषणत्वं संसर्ग इति वदतां प्राचामयमभिप्रायः । विशेष्यत्वविशेषणत्वे स्वरूपसंबन्धविशेषौ न तज्ज्ञानीयविषयताविशेषौ ।

## भास्करोदयाख्यव्याख्या.

एकमविनश्यदपराश्रितमेवावतिष्ठते इति पाठाभिप्रायेणोक्तम् । एकमपराश्रितमित्येव क्वचित्पाठः । अन्योन्याभावस्यापि तादात्म्यसंसर्गावच्छिन्नत्वात्संसर्गेति नान्योन्याभावव्यावर्तकमिति चेत्तत्राह—**तादात्म्येत्यादि** । **संबन्धो वर्तत इति** । एकस्य विशेषणस्य प्रयोजनकथनावसरे विशेषणान्तराणि सन्त्येवेति तदावश्यकमिति भावः । **अन्यथेति** । प्रतियोगितावच्छेदकसंबन्धानवच्छिन्नत्व इत्यर्थः । **अन्योन्याभाववारकेणैवेति** । तादात्म्यबोधकसंसर्गपदेनैवेत्यर्थः । **तदिति** । त्रैकालिकेत्यर्थः । **सिद्धान्तेऽपीति** । ध्वंसप्रागभावयोर्न प्रतियोगितावच्छेदकसंबन्ध इति सिद्धान्तमतेऽपीत्यर्थः । **नित्यत्वरूपमिति** । घटकाले घटात्यन्ताभावप्रतीतिस्तु न अत्यन्ताभावकालीनभूतलस्यात्यन्ताभाववत्ताप्रतीतिनियामकत्वादित्याद्यन्यत्र द्रष्टव्यम् । उपकाराय **मूलइत्यादि** । **अत्रेति** । भूतले घटो नास्तीत्यत्रेत्यर्थः । घटप्रतियोगिकाभावो भूतलवृत्तिरिति बोधः । **घटाभावेत्यादि** । स्वनिष्ठविशेषणतानिरूपितविशेष्यत्वमित्यर्थः । **घटाभाववद्भूतलमित्यत्र त्विति** । घटप्रतियोगिकाभावविशिष्टं भूतलमिति बोधः । **अभावस्य विशेषणत्वमिति** । भूतलनिष्ठविशेष्यतानिरूपितविशेषणत्वमित्यर्थः । **स्वरूप-**

अत्यन्ताभावं लक्षयति—त्रैकालिक इति ॥ अन्योन्याभावेऽतिव्याप्तिवारणाय संसर्गावच्छिन्नेति ॥ ध्वंसप्रागभावयोरतिव्याप्तिवारणाय त्रैकालिक इति ॥ अन्योन्या-

## नीलकण्ठी.

नच विशेषणताख्यः स्वरूपसंबन्ध एक एवास्तु 'भूतले घटो नास्ति' इति प्रतीतौ 'भूतलं घटाभाववत्' इति प्रतीतितो वैलक्षण्यस्य विशेषणत्वावच्छिन्नाधेयताविषयत्वकल्पनेनैव निर्वाहादिति वाच्यम्। तादृशप्रतीत्योर्वैलक्षण्याय 'प्रथमायां विशेषणतावच्छिन्नाधेयता' द्वितीयायां विशेषणता संसर्ग इत्युपेयते किं वा 'प्रथमायां विशेषणता' 'द्वितीयायां विशेषणत्वावच्छिन्नाधारता' इत्यत्र विनिगमकस्य दुर्लभत्वात्। नच तादृशप्रतीत्योः संसर्गांशेऽविलक्षणत्वेपि विशेष्यविशेषणभावभेदात् वैलक्षण्योपपत्तिरित्युभयत्र विशेषणताया एव संबन्धतास्त्विति वाच्यम्। तावतापि 'भूतले घटो नास्ति,' 'भूतलवान् घटाभावः' इत्यनयोः 'भूतलं घटाभाववत्', 'घटाभावे भूतलम्' इत्यनयोश्च प्रतीत्योर्वैलक्षण्यानिर्वाहात्। तस्मात् विशेष्यत्वविशेषणत्वनामकयोरुभयोः स्वरूपसंबन्धविशेषयोः संसर्गता। तथाच 'भूतलवान् घटाभावः' इत्यत्र घटाभावांशे भूतलस्य विशेषणत्वसंसर्गो 'घटाभावे भूतलम्' इत्यत्र च भूतलांशेऽभावस्य विशेष्यतासंसर्गो भासते. सच तत्र बाधित इति

## भास्करोदयाख्यव्याख्या.

**संबन्धविशेषाविति** । विशिष्टबुद्धिनियामके विशेषणत्वविशेष्यत्वस्वरूपे एव संबन्धविशेषौ न तन्नियामकं वैशिष्ट्यं संबन्धान्तरं मानाभावादित्यर्थः। **तज्ज्ञानीयविषयताविशेषाविति** । भूतले घटो नास्ति घटाभाववद्भूतलमिति विशिष्टज्ञानीयसांसर्गिकविषयताविशेषस्वरूपावित्यर्थः । **विशेषणताख्यः स्वरूपसंबन्ध एक एवास्त्विति** । तर्हि भूतले घटो नास्ति घटाभाववद्भूतलमित्युभयत्र यथाक्रमं भूतलघटाभावयोर्विशेषणताख्यस्वरूपसंबन्धसत्त्वेन वैलक्षण्यावोधापत्तिरत आह—**भूतलइत्यादि** । **विशेषणत्वावच्छिन्नाधेयतेति** । विशेषणत्वावच्छिन्नवृत्तित्वं संसर्ग इत्यर्थः। **प्रथमायामिति** । भूतले घटो नास्तीति प्रथमप्रतीतावित्यर्थः । **विशेषणत्वावच्छिन्नाधारतेति** । संसर्ग इत्यर्थः। **संसर्गांशेऽविलक्षणत्वेऽपीति** । भूतलघटाभावयोः परस्परं संसर्गस्य विरूपेणाभासमानत्वेऽपीत्यर्थः । **वैलक्षण्योपपत्तिरिति** । बोधवैलक्षण्योपपत्तिरित्यर्थः। **वैलक्षण्यानिर्वाहादिति** । पूर्वप्रतीत्योर्भूतलविशेषणताविषयत्वेनावैलक्षण्यात् । उत्तरयोस्त्वभावविशेषणताविषयत्वेनावैलक्षण्यादित्यर्थः । उपसंहरति—**तस्मादिति** । पर्यवसितं दर्शयति—**तथाचेति** । **भूतलवानित्यादि** । एवं भूतलं घटाभाववत् इत्यपि व्याख्यातम् । **घटाभावेत्यादि** । एवं भूतले घटो नास्तीत्यपि व्याख्यातमिति बोध्यम् । **सचेति** । संसर्ग इत्यर्थः । **तत्रेति** । घटाभाव इत्यर्थः । **बाधित इति** । पात्राधारं घृतमित्यत्रेवेति भावः । भूतलाभाववति विशेष्यतासंसर्गेण भूतलप्रकारकत्वेन भ्रमत्वनिर्वाह इत्यस्यार्थः । **स्वतन्त्रास्तु** विशेषणताख्य एक एव स्वरूपसंबन्धोऽस्तु उक्तप्रतीत्योर्वैलक्षण्यनिर्वाहाय क्वचिद्विशेषणत्वावच्छि-

भावं लक्षयति–तादात्म्येति ॥ प्रतियोगितावच्छेदकारोप्यसंसर्गभेदात् एकप्रतियोगिकयोरत्यन्ताभावान्योन्याभावयोर्बहुत्वम् । 'केवलदेवदत्ताभावात् दण्ड्यभावः' इति प्रतीत्या विशिष्टाभावः 'एकसत्त्वेपि द्वौ न स्तः' इति प्रतीत्या द्वित्वावच्छिन्नाभावः, संयोगसंबन्धेन च घटवति समवायसंबन्धेन घटाभावः, तत्तद्घटाभावा-

## नीलकण्ठी.

भ्रमत्वनिर्वाह इति संक्षेपः । ध्वंसप्रागभावयोरिवैकप्रतियोगिकयोरत्यन्तान्योन्याभावयोः किमेकविधत्वम् । नेत्याह—**प्रतियोगितेति । आरोप्येति** । प्राचीनमताभिप्रायेण । अत्र 'यथायोग्यं प्रतियोगितावच्छेदकधर्मसंसर्गभेदोऽत्यन्ताभाववहुत्वप्रयोजकः' 'प्रतियोगितावच्छेदकधर्मभेदोऽन्योन्याभाववहुत्वप्रयोजक' इति द्रष्टव्यम् । तदेव दर्शयति—**केवलेति** । केवलदेवदत्ताभावाद्विशिष्टाभावः अतिरिक्त इत्यन्वयः । अन्यथा केवलदेवदत्तवति 'दण्डी नास्ति' इति प्रत्ययानापत्तेः । उभयाभावस्यातिरिक्तत्वे प्रतीतिं प्रमाणयति—**एकसत्त्वेपीति** । 'घटपटौ न स्तः' इत्यादौ घटत्वं पटत्वमुभयत्वं चैतत्त्रितयं प्रतियोगितावच्छेदकम् । केवलघटवति केवलपटवति यत्किंचिदुभयवति च तथा प्रत्ययात् । संवन्धभेदेनाभावस्यातिरिक्तत्वं दर्शयति—**संयोगेनेति** । सामान्यविशेषाभावयोर्भेदं दर्शयति—

## भास्करोदयाख्यव्याख्या.

आधेयता, क्वचिच्च केवलविशेषणतैव विशेषणत्वावच्छिन्नाधेयताविषयकत्वे सप्तम्यन्तविशेषणवाचकपदसमभिव्याहारस्य हेतुताकल्पनेनोक्तवैलक्षण्यानिर्वाहदोषोद्धारादित्याहुः । **केचित्तु** । विशेषणत्व—विशेष्यत्वयोः स्वरूपतः सिद्धान्तत्वेन विशिष्टबुद्धिनियामकत्वेन सिद्ध्ययोगः सिद्धसाधनदोषादित्याहु**स्तन्मन्दम्** । विशेषणत्वविशेष्यत्वयोः संसर्गत्वेन पूर्वमसिद्धतया तद्रूपेण तत्साधने सिद्धसाधनदोषाप्रसक्तेरिति ध्येयम् । **ध्वंसप्रागभावयोरिवेत्यादि** । एकप्रतियोगिकयोर्ध्वंसप्रागभावयोरित्यन्वयः । नचैकविधत्वमेकप्रतियोगिकत्वं तच्च तयोरपि न घटपटाद्यनेकप्रतियोगिकत्वादिति वाच्यम् । घटप्रतियोगिकौ प्रागभावध्वंसौ न भिद्येते घटत्वैकधर्मावच्छिन्नप्रतियोगिकत्वात् । अत्यन्ताभावान्योन्याभावौ तु घटत्वैकधर्मावच्छिन्नप्रतियोगिकावपि प्रतियोगितावच्छेदकादिभेदेन भिद्येते इत्याशयात् । नन्वेवमपि तत्तत्प्रतियोगिकत्वे तद्भेदो दुर्वार एवेति चेन्न । प्रतियोगिसमवायिकारणवृत्तिरित्यादिप्रागभावादिलक्षणात्कपालस्य सामान्यतो घटसमवायिकारणत्वं न तत्तद्घटसमवायिकारणत्वं गौरवादतस्तादृशसमवायिकारणवृत्तिघटत्वावच्छिन्नाभाव एव स विवक्षणीयो न तत्तदभाव इति सिद्धेः । अत एव लाघवाद्घटत्वेन प्रागभावत्वेन कार्यकारणभावः । अत एव ध्वंसत्वेन प्रतियोगित्वेन च कार्यकारणभाव इत्येकविधावेव ताविति सिद्धम् । **विशिष्टाभाव इति** । दण्डविशिष्टदेवदत्ताभाव इत्यर्थः । **अन्यथेति** । केवलाद्विशिष्टस्यानतिरिक्तत्व इत्यर्थः । **केवलघटवतीति** । तथाप्रत्ययादित्यनेनान्वयः । एवं केवलं पटवतीत्यत्रापि । **यत्किंचिदुभयवतीति** । कुड्यकुसूलोभयवतीत्यर्थः । **तथाप्रत्ययादिति** । घटपटौ न स्त इत्युभयाभाव-

द्घटत्वावच्छिन्नप्रतियोगिताकसामान्याभावश्चातिरिक्तः ॥ एवमन्योन्याभावोऽपि ॥ घटत्वेन पटो नास्तीति व्यधिकरणधर्मावच्छिन्नाभावो नाङ्गीक्रियते ॥ पटे घटत्वं

## नीलकण्ठी.

तत्तदिति । अतिरिक्त इति । अन्यथा यत्किंचिद्घटवति 'घटो नास्ति' इति प्रत्ययापत्तेः । एवमन्योन्याभावोऽपीति । अवच्छेदकभेदात् तत्तद्घटभेदत उभयभेदः घटभेदश्च अतिरिक्त इत्यर्थः ।

प्रसङ्गादाह—घटत्वेनेति । नाङ्गीक्रियत इति । अभावधियो विशिष्टवैशिष्ट्यावगाहिमर्यादोपबृंहिततया 'घटत्वेन पटो नास्ति' इत्यादिप्रत्ययस्य विशिष्टवैशिष्ट्यानवगाहिनो घटत्वादेः प्रतियोगितावच्छेदकत्वव्यवस्थापकत्वाभावेन व्यधिकरणधर्मावच्छिन्नाभावे मानाभावादिति भावः । ननु तर्हि तादृशप्रत्ययस्य का गतिरित्यत आह—पट इति । ननु 'घटत्वेन पटो नास्ति' इति प्रतीतेः पटाधिकरणकघटत्वाभावावगाहित्वं न संभवति । असति बाधके तत्तच्छब्दोल्लेखिप्रतीतेः तत्तच्छब्दप्रतिपाद्यार्थविषयकत्वपरित्यागायोगात् । पटाधिकरणकघटत्वाभावस्य 'घटत्वेन पटो नास्ति' इति शब्दात् कथमप्यप्रतीतेः । किं त्ववच्छिन्नप्रतियोगिताकत्वसंबन्धेन अभावांशे स्वातन्त्र्येण घटत्वावगाहित्वमेव 'अभावबु-

## भास्करोदयाख्यव्याख्या.

प्रत्ययादित्यर्थः । अनेनोभयाभावोऽन्यतराभावप्रयुक्तः क्वचिदुभयाभावप्रयुक्त इति सूचितम् । अन्यथेति । विशेषाभावात्सामान्याभावस्यानतिरिक्तत्व इत्यर्थः । अवच्छेदकभेदादिति । देवदत्तो न दण्डीति प्रतीतिसाक्षिको दण्ड्यभावो दण्डरूपावच्छेदकभेदप्रयुक्तो देवदत्ताभावादतिरिक्त इत्यर्थः । घटभेदश्चेति । घटत्वावच्छिन्नप्रतियोगिताकसामान्यभेदश्च विशेषभेदादतिरिक्त इत्यर्थः । प्रसङ्गादिति । अभावत्वेन स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गसङ्गतेरित्यर्थः । विशिष्टवैशिष्ट्यानवगाहिन इति । घटत्वविशिष्टपटस्याभाववैशिष्ट्यानवगाहिन इत्यर्थः । घटत्वस्य समवायेन पटवैशिष्ट्यासंभवादिति भावः । व्यवस्थापकत्वाभावेनेति । हेत्वर्थे तृतीया । व्यवस्थापकत्वाभावहेतोरित्यर्थः । व्यधिकरणधर्मावच्छिन्नाभाव इति । प्रतियोग्यवृत्तिधर्मावच्छिन्नाभाव इत्यर्थः । मानाभावादिति । प्रतियोग्यवृत्तिधर्मस्य प्रतियोगितावच्छेदकत्वे गमकाभावादित्यर्थः । तादृशप्रत्ययस्येति । घटत्वेन पटो नास्तीति प्रत्ययस्येत्यर्थः । का गतिरिति । कथं प्रमात्वमित्यर्थः । पटाधिकरणकघटत्वाभावावगाहित्वमिति । पटाधिकरणतानिरूपितघटत्वाभावनिष्ठाधेयतावगाहित्वमित्यर्थः । असति बाधकइत्यादि । ननु प्रतियोग्यवृत्तिधर्मस्य प्रतियोगितावच्छेदकत्वासंभवरूपोक्तबाधकसद्भावादित्थमभिधानमसङ्गतमिति चेन्न । उक्तप्रतीतेर्वक्ष्यमाणकिंत्वितिरीत्या पटत्वावगाहित्वेन नञ्व्यत्यासविभक्तिव्यत्यासकल्पनामन्तरा तत्तच्छब्दप्रतिपाद्यार्थविषयकत्वरूपाबाधकत्वाभिप्रायेणैवासति बाधक इत्याद्युक्तमिति बोध्यम् । कथमप्यप्रतीतेरिति । अक्षरमर्यादयेत्यादिः । स्वातन्त्र्येणेति । न तु स्वावच्छिन्नप्रतियोगिमत्तयेत्यर्थः ।

नास्तीति तस्यार्थः । अतिरिक्तत्वे स केवलान्वयी ॥ सामयिकाभावोऽप्यत्यन्ताभाव एव समयविशेषे प्रतीयमानः घटाभाववति घटानयने अत्यन्ताभावस्य अन्यत्र गमनाभावेऽपि अप्रतीतेर्घटापसरणे संति प्रतीतेर्भूतलघटसंयोगप्रागभावध्वंसयोर्घटात्यन्ताभावप्रतीतिनियामकत्वं कल्प्यते ॥ घटवति तत्संयोगप्रागभावध्वंसयोरसत्त्वादत्यन्ताभावस्याप्रतीतिः । घटापसरणे च संयोगध्वंससत्त्वात्प्रतीतिरिति ॥ केवलाधिकरणादेव नास्तीति व्यवहारोपपत्तौ अभवो न पदार्थान्तरमिति

---

## नीलकण्ठी

द्विविंशिष्टवैशिष्ट्यावगाहित्वमर्यादां नातिशेते' इति नियमस्तु न । एवं च व्यधिकरणधर्मावच्छिन्नाभावः सप्रमाण इति चेत् । अस्तु तर्हि अतिरिक्तत्वं तस्येत्याह—**अतिरिक्तत्व इति । सः** व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकः । **केवलान्वयीति** । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगि(रूप–)विरोधिविरहादिति भावः ।

ननु भूतलादौ घटसत्त्वदशायां न तदभावबुद्धिरन्यदा तु जायते अतः सामयिकाभावोऽतिरिक्त एवाङ्गीकर्तव्य इति वदन्तं निराकर्तुमाह—**सामयिकेति** । प्रतियोगिविरहसमये प्रतीयमानोऽत्यन्ताभाव एव सामयिकाभावः । न तूत्पत्तिविनाशशाल्यतिरिक्त इति समुदितार्थः । नन्वेवं भूतले घटस्यानयनदशायामपि तदभावस्य नित्यत्वेन सत्त्वात् प्रत्ययापत्तिरत आह—**घटाभाववतीति** । नियामकत्वमेव समुपपादयति—**घटवतीति** । तत्तत्कालावच्छिन्नभूतलादेरेव घटाद्यभावसंसर्गतया घटकाले च तच्छून्यकालविशिष्टभूतलादिरूपसंसर्गाभावेन तदा न तदत्यन्ताभावबुद्धिरित्यपि द्रष्टव्यम् ।

नन्वभावो मास्त्वतिरिक्तः पदार्थः । यस्मिन्नधिकरणे घटो नास्तीत्यादिप्रत्ययः तस्मिन्नधिकरणे घटाद्यभावत्वकल्पनेनैव तथाप्रतीतिनिर्वाहात् क्लृप्तधर्मिणि धर्मकल्पनाया अक्लृप्तधर्मिकल्पनातोलघीयस्त्वादिति गुरुमतमाशङ्क्य निराचष्टे—**केवलेति** । यद्यप्यनन्तेष्वधिकरणेषु धर्मकल्पनातोऽतिरिक्तैकधर्मिकल्पनस्यैव

---

## भास्करोदयाख्यव्याख्या.

**नियमस्तु नेति** । इह नेत्यर्थः । **व्यधिकरणधर्मावच्छिन्नाभाव इति** । व्यधिकरणधर्मावच्छिन्नस्याभाव इति तु नार्थः । उक्तयुक्तेः । किन्त्ववच्छिन्नप्रतियोगिताकत्वसंबन्धेन व्यधिकरणधर्मविषयकत्व एव स इति बोध्यम् । **तर्हीति** । सप्रमाणकत्वे हीत्यर्थः । **प्रतियोगिविरोधिविरहादिति** । अव्याप्यवृत्तिसंयोगाभाववत्प्रतियोग्यधिकरणेऽपि सत्त्वादिति भावः । **सामयिकाभाव इति** । समये भवः सामयिकः । प्रतियोगिविरहसमये उत्पन्न इत्यर्थः । **अतिरिक्त एवेति** । विलक्षण एवेत्यर्थः । **समये प्रतीयमान इति** । न तु समये भव इति भावः । मुक्तावल्युक्तं समाधानान्तरं स्मारयति—**न तदित्यादिना** । **क्लृप्तधर्मिणीति** । भूतलरूपे प्रसिद्धे धर्मिणीत्यर्थः । **धर्मकल्पनाया इति** । अभावत्वरूपधर्मकल्पनाया इत्यर्थः । **अक्लृप्तधर्मीति** । अभावरूप धर्मीत्यर्थः ।

गुरवः ॥ तन्न ॥ अभावानङ्गीकारे कैवल्यस्य निर्वक्तुमशक्यत्वात् ॥ अभावाभावो भाव एव । नातिरिक्तः । अनवस्थाप्रसङ्गात् ॥ ध्वंसप्रागभावः

## नीलकण्ठी.

लघीयस्त्वादत्रोक्तन्यायस्यानवतारः । किंच अभावस्याधिकरणस्वरूपत्वे जलादौ विद्यमानस्य गन्धाभावस्य जलादिरूपत्वादितरेन्द्रियग्राह्यतापत्तिरित्यादिदूषणानि प्रस्फुरन्ति । तथापि केवलाधिकरणादेवेति तद्वचननिरासादेव तन्निवृत्तिसंभवे किमेतान्यपेक्षितानीत्यालोच्य तदेव निराकरोति—**अभावानङ्गीकार इति** । अतिरिक्ताभावानङ्गीकार इत्यर्थः । अथ किमिदं कैवल्यम् । भूतलस्वरूपमिति चेत् घटवद्भूतलस्यापि तदभावस्वरूपतापत्त्या तदानीमपि घटाभाववत्ताबुद्धिप्रसङ्गः । घटाभाववत्त्वमिति चेत् सिद्धमतिरिक्ताभावेनातः कैवल्यनिर्वचनमशक्यमित्याह—**कैवल्यस्येति** ।

नन्वभावस्यातिरिक्तत्वे तदभावोप्यतिरिक्तः, तस्याप्यभावः तथेत्यनवस्था स्यादत आह—**अभावाभाव इति** । **ध्वंसेत्यादि** । ध्वंसप्रागभावः प्रतियो-

## भास्करोदयाख्यव्याख्या.

**उक्तन्यायस्येति** । क्लृप्तधर्मिणीत्यादिरूपस्येत्यर्थः । **इतरेन्द्रियग्राह्यतापत्तिरिति** । येनेन्द्रियेणेत्यादिन्यायविरोधः स्यादिति भावः । आदिना तत्तच्छब्दगन्धरसाद्यभावीयाधिकरणानां श्रोत्रादिभिर्ग्रहणायोग्यत्वात्तद्रूपाणां तेषां ग्रहणं न स्यादिति संग्रहः । **प्रस्फुरन्तीति** । यद्यपीत्यनुकृष्यतो यद्यपि प्रस्फुरन्तीत्यस्य एतान्यनुक्त्वा तदतिरिक्तत्वव्यवस्थापनानुधावनं ग्रन्थकृतो व्यर्थायाससाध्यमिति तात्पर्यार्थः । सति कुड्ये चित्रमित्यनतिरिक्तत्वे तत्स्फुरणम् । अतिरिक्तत्वे तु तत्प्रसङ्ग एव नेत्यर्थतात्पर्येणाह—**तथापीति** । तदेव तात्पर्यं विशदयति—**केवलेत्यादिना** । **अधिकरणादेवेति** । अधिकरणादेवेत्यादीत्यर्थः । **तद्वचननिरासादेव** । गुरुवचनीयानतिरिक्तत्वनिरासादेव । **तन्निवृत्तिसंभवे** । कुड्याभावाच्चित्रनिवृत्तिवदनतिरिक्तत्वाभावादुक्तदोषनिवृत्तिसंभवे । **किमेतान्यपेक्षितानि** । किमर्थमुक्तदूषणान्यपेक्षितानि । **इत्यालोच्य** । एवं विचार्य । **तदेव निराकरोति** । अनतिरिक्तत्वमेव निरासयतीति समुदितार्थः । गुरुमते अधिकरणादेव नास्तीति व्यवहारोपपत्तावित्यस्याभावाधिकरणमेव केवलं तद्व्यवहारनियामकमित्यर्थादधिकरणकैवल्यं स्वरूपभेदेन विकल्प्य तद्भेदनिरासेन निर्वक्तुमशक्यतां बोधयितुमाशङ्कते—**अथेति** । **घटवद्भूतलस्यापीति** । भूतलत्वेन तदविशेषादिति भावः । **घटाभाववत्त्वमिति** । भावप्रत्ययस्य प्रकृतिप्रकारबोधकत्वादस्य घटाभाव एवार्थः । **सिद्धमतिरिक्ताभावेनेति** । घट्टकुटीप्रभातन्यायेनाभीप्सितं कैवल्यमसिद्धमिति भावः । **प्रतियोगिस्वरूप इति** । ध्वंसीयप्रतियोगिस्वरूप इत्यर्थः । **तत्प्रागभावरूपश्चेति** । ध्वंसप्रागभावरूपश्चेत्यर्थः । **प्रतियोगिस्व-**

---

१ एतन्न्यायस्वरूपं प्राक् (१४२ पृ०) [illegible]

प्रागभावध्वंसश्च प्रतियोग्येवेति प्राञ्चः । अभावाभावः अतिरिक्त एव । तृतीयाभावस्य प्रथमाभावरूपत्वात् नानवस्थेति नवीनाः ॥

सर्वेषामपि पदार्थानां यथायथमुक्तेष्वन्तर्भावात् सप्तैव पदार्था इति सिद्धम् ॥

## नीलकण्ठी.

गिस्वरूपः तत्प्रागभावरूपश्च । प्रागभावध्वंसस्तु प्रतियोगिरूपः तद्ध्वंसरूपश्चेत्यर्थोऽवसेयः । तेन प्रतियोगिप्रागभावदशायामपि 'ध्वंसो भविष्यति' इति प्रत्ययस्य, प्रतियोगि ध्वंसदशायामपि 'प्रागभावो नष्टः' इत्यस्य चोपपत्तिः । ननु 'काले द्रव्यत्वं नास्ति' इति प्रत्ययो न जायते, 'द्रव्यत्वाभावः' इति तु जायते इति वैषम्यनिर्वाहाय नास्तीति प्रत्यये दैशिकविशेषणतासंवन्धावच्छिन्नाधेयत्वभानं परिकल्पनीयम् । इत्थं च घटाभावाभावादेर्घटादिरूपत्वे त्विह घटाभावो नास्तीति प्रत्ययस्य भ्रमत्वमेव स्यात् भावस्य विशेषणताविशेषेण वृत्त्यनङ्गीकारात् । अतः अभावाभावोऽतिरिक्तो न तु भावस्वरूप इति नवीनमतं दर्शयति—**अभावेति** । तर्हि अनवस्थेत्यत आह—**तृतीयेति** ।

## भास्करोदयाख्यव्याख्या.

**रूपश्चेति** । प्रागभावीयप्रतियोगिस्वरूपश्चेत्यर्थः । **उपपत्तिरिति** । अन्यथोक्ततत्तत्प्रतियोगिमात्रस्वरूपत्वे तत्तत्प्रतियोगिनो विद्यमानत्वात्तत्तद्व्यवहारानुपपत्तिरिति भावः । नवीनमतं सिद्धान्तयितुं प्राचीनानाक्षिपति—**नन्विति** । **दैशिकविशेषणतासंवन्धावच्छिन्नाधेयत्वभानमिति** । स्वरूपसंवन्धावच्छिन्नाभावीयाधेयत्वभानमित्यर्थः । **भ्रमत्वमेव स्यादिति** । घटाभावो नास्तीत्यस्य घटाभावाभावोऽस्तीत्यर्थकतया घटाभावाभावस्य प्रतियोगिस्वरूपत्वे प्रतियोगिनश्च संयोगेन वृत्तेर्विशेषणताविशेषेण वृत्त्यसंभवात्तथाविधप्रामाणिकप्रत्ययस्यालीकत्वं स्यादित्यर्थः । एतावता प्रवन्धेन पदार्थानां लक्षणं स्वरूपं प्रामाण्यं च निरुच्य प्रसङ्गान्नन्विति सूत्रविरोधे जिज्ञासितेऽन्तेवासिनि तदुक्तमवतारयन् सूत्रकारं विशिनष्टि—**परमेत्यादिना** । परमकारुणिकत्वं च शत्रुमित्रोदासीनसाधारण्येन निष्कारणदुःखप्रहाणेच्छावत्त्वम् । मुनित्वं[1] च निरन्तराद्वितीयार्थमननशीलत्वम् । दुःखपङ्कमग्नजगदुद्दिधीर्षुत्वं[2] च अत्यन्तप्रतिकूलवेद्यपङ्कमग्नसंसार्यात्मजातोद्धारेच्छावत्त्वम् । गौतमेनेति विशेष्यमध्याहार्यम् । तथाचोक्तधर्मविशिष्टेन गौतमेन प्रणीतमित्यन्वयः । **प्रत्यक्षप्रमाणस्येति** । इन्द्रियात्मकस्येत्यर्थः । **अनुमानादीनां चेति** ।

---

१ 'निवृत्तः सर्वतत्त्वज्ञः कामक्रोधविवर्जितः । ध्यानस्थो निष्क्रियो दान्तस्तुल्यमृत्काञ्चनो मुनि'रिति मुनिलक्षणम् । अवयवार्थमर्यादयाह—निरन्तरेति । मन ज्ञाने इत्यस्मान्मनेरुचोपधाया इति इप्रत्यये साधुः । २ अत्यन्तं प्रतिकूलमिति वेद्यं दुःखं तदेव पङ्कत्वेन रूप्यते तत्र मग्ना ये संसारिण आत्मानो जीवास्तेषां जातस्य समूहस्योद्धारे दुःखापनोदने या इच्छा तद्वत्त्वमित्यक्षरार्थः ।

ननु "प्रमाण—प्रमेय—संशय—प्रयोजन—दृष्टान्त—सिद्धान्ता-ऽवयव—तर्क—निर्णय—वाद—जल्प—वितण्डा—हेत्वाभास—छल—जाति—निग्रह-स्थानानां तत्त्वज्ञानान्निश्रेयसाधिगमः" इति न्यायशास्त्रे षोडशपदार्थानामुक्तत्वात् कथं सप्तैवेत्यत आह—सर्वेषामिति ॥ सर्वेषां सप्तस्वेवान्तर्भाव इत्यर्थः ॥ आत्मश-रीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्' इति द्वादश-विधं प्रमेयम् ॥ प्रवृत्तिर्धर्माधर्मौ ॥ रागद्वेषमोहा दोषाः ॥ रागः इच्छा ॥ द्वेषो म-न्युः। मोहः शरीरादौ आत्मत्वभ्रमः ॥ प्रेत्यभावो मरणम् ॥ फलं भोगः ॥ अपवर्गो

## नीलकण्ठी.

परमकारुणिकेन मुनिना दुःखपंकमग्नं जगदुद्दिधीर्षुणा प्रणीतं "प्रमाणप्रमेय" इत्यादिसूत्रं, तद्विरोधं परिहर्तुमाक्षिपति **नन्विति** । प्रत्यक्षप्रमाणस्य द्रव्ये, अनुमानादीनां च गुणेऽन्तर्भावस्य स्फुटत्वात् प्रमेयादीनां द्रव्यादिष्वन्तर्भावमाह—**आत्मेत्यादिना** । आत्मशरीरेन्द्रियाणां द्रव्ये, अर्थस्य पृथिव्यादिरूपस्य द्रव्यादिषु, बुद्धेर्गुणे, अन्तरिन्द्रियस्य मनसः द्रव्येऽन्तर्भावः । एवमग्रेपि यथायथमन्तर्भावो द्रष्टव्यः । **धर्माधर्माविति** । तज्जनिकेत्यर्थः । एतच्च स्फुटमाकरे । **रागः** इच्छाविशेषः । **मरणमिति** । मरणानन्तरभावि जननमित्यर्थः । तथाच पदव्यु-त्पत्तिः प्रेत्य मृत्वा भावो जननमिति । चरमप्राणशरीरसंयोगध्वंसो **मरणम्** । आद्यशरीरप्राणसंयोगो **जननम्** । मुक्तात्मसंयोगध्वंसवतः घटस्य मुक्तत्वापत्तिवार-

## भास्करोदयाख्यव्याख्या.

व्याप्त्यादिज्ञानानां चेत्यर्थः । **स्फुटत्वादिति** । एतेन प्रमाणस्यान्तर्भावाकथन-प्रयुक्तन्यूनता मूलकृतः परिहृता । **द्रव्येष्वन्तर्भाव इति** । यथायथं द्रव्यादिष्व-न्तर्भाव इत्यर्थः । **आदीति** । आदिना गुणादीनामपि संग्रहः । तेषामप्यर्थत्वस्य स्पष्टत्वात् । मनोन्तानां प्रसिद्धत्वधियाऽव्याख्याय प्रवृत्तिं व्याचिख्यासुः प्रवृत्तिर्धर्मा-धर्मौ इत्युक्तं तदसङ्गतं तयोः प्रवृत्तिफलत्वादित्याशयेनाह—**तज्जनिकेत्यर्थ इति** । **धर्माधर्मजनिकेति** । प्रवृत्तिधर्माधर्मावित्यर्थ इत्यर्थः । **स्फुटमाकर इति** । सूत्रवृत्त्यादावित्यर्थः । **इच्छाविशेष इति** । रागेण राधिकां कृष्णः कृष्णं रागेण राधिका । स्वप्नेऽपि राधिकेत्युक्त्वा रमतेऽपि तया समम् ॥ अत्र राग उत्कटेच्छेति यावत् । **इच्छायामौत्कट्यं च** निरन्तरतद्विषयकत्वम् । धनादीच्छाव्यावृत्तं रसिकजननवरससमन्वयाधिकरणकामिनीकामुकेच्छावैजात्यावच्छिन्नरूपं बोध्यम् । प्राणक्रियाजन्यसंयोगानां शरीरनिष्ठानां नानात्ववत्तद्ध्वंसानां क्रियाजन्यत्वेन नाना-त्वात् । **चरम इति** । आद्य इत्यादिः । **ननु** पञ्चमे मात्स्याद्यशरीरप्राणसंयोगस्य पुराणप्रसिद्धेर्जननव्यवहाराभावादसङ्गतिरिति **चेदत्राहुः** । शास्त्रतस्तदैव तत्स-त्त्वेऽपि लोके तद्व्यवहारो भाक्त[1] इति बोध्यम् । **मुक्तात्मेत्यादि** । विशेष्यानु-पादाने मुक्तात्मसंयोगध्वंसस्यापि ग्रहीतुं शक्यत्वेन तस्य च स्वसमानाधिकरण-

१ गौणः ।

मोक्षः ॥ स च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसः॥प्रयोजनं सुखप्राप्तिः दुःखहानिश्च ॥ दृष्टान्तो महानसादिः ॥ प्रामाणिकत्वेन अभ्युपगतोऽर्थः सिद्धान्तः ॥ निर्णयो निश्चयः ॥ स च प्रमाणफलम् ॥ तत्त्वबुभुत्सोः कथा वादः ॥ उभयसाधनवती विजिगीषुकथा जल्पः ॥ स्वपक्षस्थापनहीना वितण्डा ॥ कथा नाम नानावक्तृकः पूर्वोत्तरपक्षप्रतिपादकवाक्यसंदर्भः ॥ अभिप्रायान्तरेण प्रयुक्तस्यार्थान्तरं प्रकल्प्य दूषणं छलम् ॥ असदुत्तरं जातिः ॥साधर्म्य—वैधर्म्य—उत्कर्षा-

## नीलकण्ठी.

णाय **दुःखध्वंस** इति । दुःखध्वंसवतामस्मदादीनामपि मुक्तत्वापत्तिवारणाय कालीनान्तम् । अन्यदीयदुःखप्रागभावसमानकालिकदुःखध्वंसवतां शुकाद्यात्मनाममुक्तत्वप्रसङ्गात्–समानाधिकरणेति दुःखप्रागभावविशेषणम् । नच समानाधिकरणदुःखासमानकालीनेत्यनेनैव सुषुप्तिकालिकदुःखध्वंसस्याप्यग्रिमदुःखक्षणवृत्तेर्वारणात् प्रागभावेति व्यर्थमिति वाच्यम् । यथासन्निवेशे वैयर्थ्याभावादिति दिक् । संशयस्य निरूपितत्वात् प्रयोजनस्वरूपं दर्शयति—**प्रयोजनमिति** । **उभयसाधनवतीति** । परपक्षनिराकरणस्वपक्षसाधनवती । इदं च वितण्डायामतिव्याप्तिवारणायेति ध्येयम् । **स्वपक्षेति** । अत्र विजिगीषुकथेत्यनुवर्तते । **नानेति** । एकेन पूर्वपक्षः क्रियते, अन्येन च समाधानम्, एवं क्रमेण नानाकर्तृकत्वं वाक्यसमूहस्यावसेयम् । **छलमिति** । यथा 'नवकम्बलोऽयं देवदत्तः' इति । नवतात्पर्येण प्रयुक्तस्य नवत्वसंख्याविशिष्टमर्थान्तरं परिकल्प्य कश्चिद्दूषयति—'नास्य नव कम्बलाः सन्ति अतिदरिद्रत्वात्' इत्यादि । **असदुत्तरमिति** । उत्तरस्यासत्त्वं तु स्वसाधकतासाधारण्येन परसाधकतासाधकतया स्वव्याघातकत्वम् । तथाच स्वव्याघातकमुत्तरं जातिरिति लक्षणं पर्यवस्यति । तदवान्तरभेदान्

## भास्करोदयाख्यव्याख्या.

दुःखप्रागभावसमानकालिकत्वान्मोक्षत्वे तादृशध्वंसवतो घटस्य मुक्तत्वव्यवहारापत्तिः । मुक्तात्मसंयोगध्वंसश्च घटे परंपरया मानसिकव्यवहारप्रयुक्तो द्रष्टव्यः । संयोगे मुक्तात्मविशेषणं तु सुषुप्तिकालीनसंयोगध्वंसस्य स्वसमानाधिकरणदुःखप्रागभावकालिकत्वादतिव्याप्तिसंपादनायेति बोध्यम् । **दुःखध्वंसवतामस्मदादीनामिति** । दुःखप्रागभावकालीनदुःखध्वंसवतामस्मदादीनामित्यर्थः । **दुःखध्वंसस्याप्यग्रिमदुःखक्षणवृत्तेरिति** । ध्वंसस्य ध्वंसासंभवात्तत्क्षणवृत्तित्वं तस्येति भावः । अथ तर्हि तद्वृत्ताप्रत्ययापत्तिरिति चेन्न । दुःखानधिकरणदुःखध्वंसाधिकरणस्यैव तत्प्रतीतिनियामकत्वेनाभ्युपगमात् । **यथासन्निवेशे वैयर्थ्याभावादिति** । स्वसमानाधिकरणदुःखध्वंसे दुःखासमानकालीनत्वं तात्पर्यमर्यादया दुःखप्रागभावासमानकालीनत्वरूपमेवेति वैयर्थ्याशङ्कैव नेति हृदयं बोध्यम् । **निरूपितत्वादिति** । संशयलक्षणस्य प्रागुक्तत्वादित्यर्थः । **इदमिति** । कथायामुभयसाधनवतीति विशेषणमित्यर्थः । **इत्यादीति** । सुरापीत्यादिशब्दार्थः । **स्वव्याघातकत्वमिति** । स्वस्योत्तरस्य व्याघातदोषवत्त्वमित्यर्थः । **तदवान्त-**

## नीलकण्ठी.

दर्शयति—**साधर्म्येत्यादिना** । द्वन्द्वान्ते श्रूयमाणत्वात् समाशब्दस्य प्रत्येकं योगः । साधर्म्यसमा वैधर्म्यसमेत्यादयः चतुर्विंशतिजातयः । साधर्म्येण स्थापनहेतुदूषकमुत्तरम्—**साधर्म्यसमा** । यथा 'आत्मा सक्रियः क्रियाहेतुगुणवत्त्वाल्लोष्टवत्' क्रियाहेतुगुणश्चात्र क्रियाजनकवायुसंयोगादिरेवेति स्थापनायामुत्तरं 'यदि सक्रियसाधर्म्यात् सक्रियः तदा विभुत्वरूपनिष्क्रियत्वसाधर्म्यान्निष्क्रिय एव किं न स्यात् । न चात्र किंचिद्विनिगमकमस्तीति' ॥ १ ॥ वैधर्म्येण दूषकमुत्तरम् **वैधर्म्यसमा** । यथा तत्रैव 'क्रियावतो लोष्टस्य साधर्म्याद्यदि क्रियावानात्मा तदा विभुत्वरूपतद्वैधर्म्यान्निष्क्रिय एव किं न स्यात् । नहि 'तत्साधर्म्यात् क्रियावता भवितव्यम् । तद्वैधर्म्यान्निष्क्रियेण न भवितव्यम्, इत्यत्र किंचित् नियामकमस्ति' इति ॥ २ ॥ परोक्तसाधनादेव तदव्यापकस्य धर्मस्य पक्षे आपादनम् **उत्कर्षसमा** । यथा 'शब्दोऽनित्यः कृतकत्वाद् घटव'दित्यादौ कश्चिदेवमाह 'यदि कृतकत्वेन हेतुना शब्दो घटवदनित्यः स्यात्, तर्हि तेनैव हेतुना शब्दो घटवत् सावयवः स्यात्' इति ॥ ३ ॥ परोक्तदृष्टान्तसाधर्म्येण पक्षे पराभिमतधर्मान्तरस्याभावसाधनम् **अपकर्षसमा** । यथा तस्मिन्नेवानुमाने 'यदि कृतकत्वेन शब्दो घटवदनित्यः स्यात्, तर्हि तेनैव शब्दो घटवदश्रावणः स्यात्' इति ॥ ४ ॥ वर्ण्यस्य स्थापनीयस्य दृष्टान्तधर्मस्य पक्षे साधनं **वर्ण्यसमा** । यथा पूर्वोक्तानुमाने 'क्रियाजनकनोदनाख्यसंयोगवत्त्वाल्लोष्टादेर्भवतु क्रियावत्त्वं आत्मनस्तु क्रियावत्त्वे तज्जनकनोदनाख्यसंयोगवत्त्वमपि स्यात्' इति ॥ ५ ॥ साध्यहेत्वोर्धर्मयोरपि पक्षे तुल्यतासाधनम् **अवर्ण्यसमा** । यथा तत्रैवानुमाने लोष्टादिगतं नोदनादिरूपक्रियाहेतुगुणवत्त्वमात्मन्यसिद्धम् । तथाच तुल्यतया यथा असिद्धेन

## भास्करोदयाख्यव्याख्या.

**रेति** । असदुत्तररूपजात्यवान्तरेत्यर्थः । **साधर्म्येणेत्यादि** । समानो धर्मो यस्य स सधर्मा तस्य भावः साधर्म्यं समानधर्म इति यावत् । स्थापनायां हेतुः स्थापनाहेतुः कार्यस्येति शेषः । कार्यस्य साध्याख्यस्य स्थापना पक्षे सिद्धिः । तत्र हेतुस्तस्मिन् दूषकं प्रतिवन्द्युत्तरं साधर्म्यसमाख्याऽसदुत्तरं जातिरित्यर्थः । **क्रियाजनकवायुसंयोगादिरेवेति** । आदिना वेगसंग्रहः । **सक्रियसाधर्म्यादिति** । आकाशरूपदृष्टान्तनिष्ठसक्रियरूपधर्मतुल्यविभुत्वरूपधर्मवत्त्वादित्यर्थः ॥१॥ विरुद्धो धर्मो यस्य स विधर्मा तस्य भावो वैधर्म्यं विरुद्धधर्म इति यावत् । तेन तद्दूषकमुत्तरं प्रतिवन्दिरूपं वैधर्म्यसमेत्यर्थः । **तद्वैधर्म्यादिति** । सक्रियविरुद्धविभुत्वरूपधर्मादित्यर्थः । अनयोः फलैक्येऽपि साधर्म्यवैधर्म्याख्यं हेतुदूषकोत्तरत्वाद्विभाजकरूपद्वयावच्छिन्नत्वं बोध्यम् ॥ २ ॥ **परोक्तसाधनादेवेति** । परोक्तहेतोरेवेत्यर्थः । **तदव्यापकस्य धर्मस्येति** । परोक्तहेतुत्वव्यापकधर्मस्येत्यर्थः ॥३॥ **दृष्टान्तसाधर्म्येणेति** । दृष्टान्तवृत्तिधर्मतुल्यधर्मेणेत्यर्थः ॥ ४ ॥ **दृष्टान्तधर्मस्येति** । दृष्टान्तवृत्तिधर्मान्तरस्येत्यर्थः ॥ ५ ॥ **नोदनादीति** । वर्ण्यसमाया-

---

१ पराभिमतसमाधिसमाधेयमुत्तरं प्रतिवन्द्युत्तरम् ॥

पकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहे-

## नीलकण्ठी.

क्रियाहेतुगुणेन आत्मनि क्रियावत्त्वं साध्यते तथा तादृशेन क्रियावत्त्वेन तज्जनकगुणवत्त्वमपि किमिति न साध्यते नियामकाभावात्' इति ॥ ६ ॥ दृष्टान्तविकल्पं प्रदर्श्य दार्ष्टान्तिकविकल्पकथनम् **विकल्पसमा** । यथा तत्रैवानुमाने क्रियाहेतुगुणयुक्तं किंचिद्गुरु, यथा लोष्टादिकं, किंचिल्लघु, यथा वायुः । एवं क्रियाहेतुगुणयुक्तं किंचित्क्रियावत् स्यात्, यथा लोष्टादि, किंचिदक्रियम्, यथात्मा पूर्वं विकल्पो भवतीत्ययं तु न भवत्यत्र किं नियामकं स्यात्' इति ॥ ७ ॥ दृष्टान्तस्य पक्षतुल्यताकथनं **साध्यसमा** । साध्यशब्दोऽत्र पक्षवाची यथा तत्रैव, यदि 'यथा लोष्टः तथा आत्मा' इति त्वयोच्यते, तदा 'यथा आत्मा तथा लोष्टः' इत्यप्यायातम् । तथाच 'यथात्मनि क्रियावत्त्वं साध्यते तर्हि लोष्टेपि तत्साधनीयं नेति चेत् तर्हि यथा लोष्टस्तथात्मेति न वाच्यम् लोष्टसदृश आत्मा नात्मसदृशो लोष्ट इत्यत्र नियामकाभावात्' इति ॥ ८ ॥ प्राप्त्या प्रत्यवस्थानम् **प्राप्तिसमा** । प्राप्तिश्च साध्यहेत्वोः सामानाधिकरण्यम् । यथा तत्रैव 'क्रियाहेतुगुणवत्त्वेनैव किमिति क्रियावत्त्वं साध्यते किमिति क्रियावत्त्वेन तादृशगुणवत्त्वम् न उभयोरविशेषात्' इति ॥ ९ ॥ अप्राप्त्या प्रत्यवस्थानम् **अप्राप्तिसमा** । यथा तत्रैव 'पूर्वोक्तदोषादप्राप्तस्य हेतोः साध्यसाधकत्वं वाच्यम् । तथा चाप्राप्तत्वाविशेषात् स सर्वः सर्वं साधयेदिति । अयमेव हेतुः साध्याभावं किमिति न साधयेदित्यत्र विनिगमकाभावात्' इति ॥ १० ॥ साधनपरम्पराप्रश्नः **प्रसङ्गसमा** । यथा 'क्रियावत्त्वे क्रियाहेतुगुणवत्त्वं साधनम् । तत्र किं साधनम् नहि साधनं विना

## भास्करोदयाख्यव्याख्या.

मित्यादिः । **तज्जनकगुणवत्त्वमपीति** । क्रियाजनकनोदनाख्यसंयोगरूपगुणवत्त्वमपीत्यर्थः । तत्प्रकारश्च 'आत्मा नोदनाख्यगुणवान् क्रियावत्त्वाल्लोष्टवत्' इति ॥ ६ ॥ **तत्रैवानुमान इति** । क्रियासाध्यकक्रियाहेतुगुणवत्त्वहेतुकानुमान इत्यर्थः । **यथा लोष्टादीति** । नचेदमसंभवि, दृष्टान्तस्य दार्ष्टान्तिकत्वायोगादिति वाच्यम् । वायोर्दृष्टान्तत्वमभ्युपेत्यास्य दार्ष्टान्तिकत्वौचित्यात् । **किंचिदक्रियमिति** । निष्क्रियलोष्टदृष्टान्तेन किंचिद्दार्ष्टान्तिकमक्रियं क्रियाशून्यमित्यर्थः । **यथा आत्मेति** । दार्ष्टान्तिकनिदर्शकपरो यथाशब्द इति बोध्यम् । **पूर्वं विकल्पो भवतीति** । हेतौ पूर्वोक्तो विकल्पो भवतीत्यर्थः ॥ ७ ॥ **तत्रैवेति** । पूर्वोक्तानुमान एवेत्यर्थः । **इत्यप्यागतमिति** । यथाशब्दस्य परस्परसादृश्यार्थबोधकत्वादिति भावः । **नियामकाभावादिति** । शब्दशक्तिस्वाभाव्याद्यथाशब्देन परस्परसादृश्यं बोध्यत इत्येकशेषे कारणाभावादिति भावः ॥ ८ ॥ **प्रत्यवस्थानमिति** । साध्यसिद्धिरित्यर्थः ॥ ९ ॥ **पूर्वोक्तदोषादिति** । प्राप्तिसमारूपदोषाद्धेतोः साध्यसाधकत्वासंभवादिति भावः । **अप्राप्तस्य हेतोरिति** । कस्य चिद्धेतोरित्यर्थः । **अयमेवेत्यादि** । अथवेत्यादिः ॥ १० ॥ साध्यतेऽनेनेति करणल्युटि साधनशब्दो हेतु-

## नीलकण्ठी.

कस्यचित्सिद्धिरस्ति एवं तत्रापि किं साधनम्' इत्यादि ॥ ११ ॥ दृष्टान्तान्तरेण साध्याभावसाधनं **प्रतिदृष्टान्तसमा** । यथा तत्रैव लोष्टदृष्टान्तेन क्रियावत्त्वे साधिते निष्क्रियाकाशदृष्टान्तेन आत्मनो निष्क्रियत्वमेव किं न स्यात् 'लोष्टदृष्टान्तेन क्रियावत्त्वमाकाशदृष्टान्तेन निष्क्रियत्वं न इत्यत्र नियामकाभावात्' इति ॥ १२ ॥ अनुत्पत्त्या प्रत्यवस्थानम् **अनुत्पत्तिसमा** । यथा 'घटो न नित्यः जन्यैकत्वात्' इत्यादौ कश्चिदाह—यदि जन्यैकत्वमनित्यत्वे प्रमाणं तदा घटे एकत्वोत्पत्तेः पूर्वं तदभावान्नित्यत्वम् । नित्यश्चेत्, तदाऽनुत्पन्न एवेति ॥ १३ ॥ साधारणधर्मं प्रदर्श्य संशयोद्भावनं **संशयसमा** । यथा 'शब्दोऽनित्यः कार्यत्वात्, इत्यादौ शब्दस्यानित्येन घटेन सह कार्यत्वरूपं साधर्म्यं यथास्ति, तथा नित्येन शब्दत्वेन सह श्रावणप्रत्यक्षविषयत्वं साधर्म्यमस्तीति उभय-साधर्म्यदर्शनात् संशयः स्यात् एकपरिशेषे नियामकाभावात्' इति ॥ १४ ॥ वाद्युक्तहेतोः साध्यविपरीतसाधकं हेत्वन्तरोद्भावनं **प्रकरणसमा** । सत्प्रतिपक्षो-दाहरणमेवात्रोदाहरणं बोध्यम् ॥ १५ ॥ कालत्रयेऽपि हेतुत्वासंभवेन अहेतुत्वक-थनम् **अहेतुसमा** । यथा 'कार्यत्वादिरूपसाधनं साध्यादनित्यत्वात् पूर्वकालवृत्ति चेत्, तदाऽनित्यत्वरूपसाध्यस्य तदानीमभावात् कस्य साधकमथ पश्चात्कालवृत्ति चेत् तदा पूर्वकाले साधनाभावात् कस्य साध्यमनित्यत्वं यदि चोभयमेककालवृत्ति किं कस्य साधनं किं कस्य साध्यं विनिगमकाभावादिति । **हेतुसमेति** पाठे तु कालत्रयेऽपि हेतुत्वस्यासंभवकथनं हेतुसमेत्यर्थः ॥ १६ ॥ अर्थापत्तिपुरस्कारेण

## भास्करोदयाख्यव्याख्या.

बोधकः । **इत्यादीति** । इत्यादिरूपः साधनपरम्पराप्रश्न इत्यर्थः ॥ ११ ॥ **दृष्टान्तान्तरेणेति** । अन्यो दृष्टान्तो दृष्टान्तान्तरं तेनेत्यर्थः । **तत्रैवेति** । आत्मन्येवेत्यर्थः । **क्रियावत्त्वे साधित इति** । क्रियाहेतुगुणवत्त्वहेतुनेति शेषः । **निष्क्रियत्वं नेत्यत्रेति** । विभुत्वहेतुना क्रियाशून्यत्वं न साध्यत इत्यत्रेत्यर्थः । ॥ १२ ॥ **तदभावादिति** । जन्यैकत्वरूपहेत्वभावादित्यर्थः । **नित्यत्वमिति** । नित्यत्वं स्यादित्यर्थः ॥ १३ ॥ **अनित्यत्वेनेति**[1] । अनित्यत्वस्वरूपहेतुनेत्यर्थः । **घटेन सहेत्यादि** । शब्दस्येति पूर्वेणान्वयः । सहयोगे तृतीया । तृतीयार्थः साहित्यं कार्यत्वान्वयि । तथाच घटनिरूपितसाहित्यावच्छिन्नकार्यत्वरूपसमानध-र्मसंबन्धिशब्द इति बोधः । **नित्यत्वेनेति**[2] । नित्यत्वरूपहेतुनेत्यर्थः । **एकपरि-शेष इति** । एकपरिच्छेद इत्यर्थः ॥ १४ ॥ **अत्रोदाहरणमित्यादि** । शब्दोऽ-नित्य इत्यादिरूप एवेति भावः ॥ १५ ॥ **तदानीमभावादिति** । हेतुकालेऽभा-वादित्यर्थः । **पूर्वकाल इति** । कार्याव्यवहितपूर्वकाल इत्यर्थः । **पाठे त्विति** । तुशब्दोऽरुचिसूचकः नाप्यत्वाभावाद्धेतुत्वासंभवकथनस्योदक्षरत्वादिति भावः ॥ १६ ॥

---

१ अनित्यत्वेनेति भा. या. सम्मतः पाठः । २ नित्यत्वेनेति भा. या. सम्मतः पाठः ।

त्वर्थापत्त्यविशेषोपपत्त्युपलब्धिनित्यानित्यकार्याकार्यसमा जातयः ॥

## नीलकण्ठी.

साध्याभावोद्भावनम् **अर्थापत्तिसमा**। यथा 'पूर्वोक्तानुमाने शब्दस्यानित्यसाधर्म्यादनित्यत्वं यदि, तदार्थापत्त्या सिद्धं नित्यसाधर्म्यान्नित्यत्वमपि एकतरावधारणे नियामकाभावात्' इति ॥ १७ ॥ सर्वाविशेषप्रसंगोद्भावनम् **अविशेषसमा**। यथा तत्रैव 'यदि कृतकत्वादिनाऽनित्यघटादिसाधर्म्येण शब्दस्यानित्यत्वं, तदा प्रमेयत्वादिरूपेण तत्साधर्म्येण सर्वस्यैवानित्यत्वं स्यात्, मदुक्तसाधर्म्येण तत् सिध्यति नतु त्वदुक्तेनेत्यत्र नियामकाभावात्' इति ॥ १८ ॥ उभयपक्षसाधर्म्येण साधनोपपत्तिकथनम् **उपपत्तिसमा**। 'यदि चानित्यत्वसाधनं कार्यत्वमुपपद्यत इति शब्दस्यानित्यत्वम्, तदा नित्यत्वसाधनमपि किंचिदुपपद्यत इति नित्यत्वं किं न स्यात्' इति ॥ १९ ॥ वाद्युपदर्शिते साधनाभावेऽपि साध्यस्योपलब्धिकथनम् **उपलब्धिसमा**। यथा 'शब्दोऽनित्यः प्रयत्नानुविधायित्वात् घटवत्' इत्यत्र प्रयत्नं विनापि वायुनोदनवशात् वृक्षशाखाभङ्गजन्यशब्दस्योपलब्धेर्न प्रयत्नानुविधायित्वं शब्देऽस्ति' इति ॥ २० ॥ वादिनानुपलब्धिवशात् कस्यचित् पदार्थस्यानङ्गीकारेऽनुपलब्धिवशादेव वाद्यभिमतस्यापि यत्किञ्चित्पदार्थस्याभावसाधनम् **अनुपलब्धिसमा**। यथा 'जलादेर्विद्यमानस्याप्यावरणवशादनुपलब्धिः तद्वत् उच्चारणात्पूर्वं शब्दस्य विद्यमानस्याप्यावरणवशादनुपलब्धिरित्येतन्मतं वादिना दूष्यते 'यद्यावरणवशाच्छब्दो नोपलभ्यते तदा जलाद्यावरणमिव शब्दाद्यावरणमप्युपलभ्येत' इति । अत्रोत्तरं 'यदि भवद्भिरनुपलब्धित आवरणवशाच्छब्दो नोपलभ्यते तदानुपलब्धेरप्यनुपलब्ध्यभावे सिद्धे तदभावादावरणसिद्धिः' इति ॥ २१ ॥ धर्मस्य नित्यत्वानित्यत्वविकल्पाद्धर्मिणो नित्यत्वसाधनं **नित्यसमा**। यथा 'शब्दस्य यदनित्यत्वं भवद्भिरुच्यते तन्नित्यमनित्यं वा । यदि नित्यं, तदा शब्दवृत्तेरेव तस्य सदातनत्वाच्छब्दस्यापि तथात्वमागतम् । अथानित्यं तदा शब्दे कदाचित् अनित्यत्वाभावोऽस्तीति नित्य एव शब्द इत्युभयथापि शब्दस्य नित्यत्वम्'

## भास्करोदयाख्यव्याख्या.

**नित्यसाधर्म्यादिति**। नित्यवृत्तिनित्यत्वरूपसमानधर्मवत्त्वादित्यर्थः ॥ १७ ॥ **आदीति**। अनेन वाच्यत्वज्ञेयत्वादीनां परिग्रहः ॥ १८ ॥ **नित्यत्वसाधनमपीति**। श्रावणत्वरूपमित्यर्थः ॥ १९ ॥ **वाद्युपदर्शित इति**। वादिना पक्षसाध्यहेतुरूपे प्रदर्शिते सतीत्यर्थः । **वायुनोदनवशादिति**। वायोर्नोदनाख्यसंयोगवशादित्यर्थः ॥ २० ॥ **इत्येतन्मतमिति**। शब्दानुपलब्धिवादिमतमित्यर्थः । **एवमिति**। एवंविधमुत्तरं दूषणमित्यन्वयः । **तदेति**। शब्दावरणानुपलभ्येत्यर्थः । यतः आवरणोपलब्धिप्रयुक्तैव शब्दानुपलब्धिस्तदभावाचानुपलब्धेरप्युपलब्ध्यभाव इति संबन्धः । तथाच शब्दस्योपलब्धिरेव त्वया वाच्येति फलितम् । **तदभावादिति**। अनुपलब्ध्यभावादित्यर्थः ॥ २१ ॥ **तथात्वमिति**। नित्यत्वमित्यर्थः । **शब्दस्य नित्यत्वमिति**। वैयाकरणाध्वरमीमांसकौ ब्रूत इति

वादिनोऽपजयहेतुर्निग्रहस्थानम् ॥ प्रतिज्ञाहानिः, प्रतिज्ञान्तरं, प्रतिज्ञाविरोधः,

## नीलकण्ठी.

इति ॥ २२ ॥ अनित्यदृष्टान्तसाधर्म्यात् सर्वानित्यत्वप्रसङ्गोद्भावनम् **अनित्यसमा** । यथा 'यद्यनित्येन घटेन सादृश्याच्छब्दोऽनित्य इत्युच्यते, तदा येन केनचिद्धर्मेण सर्वस्यैव तत्सदृशत्वात् सर्वस्यानित्यत्वप्रसङ्गः' इति ॥ २३ ॥ वाद्युक्तहेतोरन्यकार्येणापि संभवाभिधानं **कार्यसमा** । यथा तत्रैव प्रयत्नानुविधायित्वमुभयथापि संभवति घटादिवत् शब्दस्वरूपोत्पत्तौ जलादिवदावरकनिवृत्तौ च उभयत्रापि प्रयत्नानुविधायित्वदर्शनात् । तथाच तस्यावरकनिवृत्तिरूपकार्यान्तरस्य संभवान्नानित्यत्वं नियतमिति ॥ २४ ॥ क्वचित् **कारणसमेति** पाठः । तस्यापि 'कारणस्य प्रयत्नानुविधायित्वस्योभयत्र शब्दस्योत्पत्तौ तदावरकनिवृत्तौ च समत्वाभिधानम्' इति रीत्या उक्त एवार्थे पर्यवसानमवसेयम् । अत्र ग्रन्थगौरवभयात् सूक्ष्मप्रकारा न दर्शिता अभियुक्तैरन्यत्र तेऽनुसंधेयाः ।

निग्रहस्थानं लक्षयति—**वादिन इति** । इदं च यद्यपि छलादावप्यस्ति तथाप्यर्थान्तरादिरूपनिग्रहस्थानमध्येऽन्तर्भावाददोषः । छलत्वादिनापि ज्ञानस्योपयोगित्वात्पृथगुपादानं हेत्वाभासवत् । तस्यावान्तरभेदान् दर्शयति—**प्रतिज्ञेत्यादिना** । तत्र प्रतिज्ञातार्थविरुद्धाभ्युपगमः प्रतिज्ञातार्थपरित्यागो वा **प्रतिज्ञाहानिः** । यथा 'शब्दोऽनित्यः प्रत्यक्षगुणत्वात्' इत्यत्र 'सोऽयं गकारः' इत्यादि प्रत्यभिज्ञाबलात् परेण बाधे उद्भाविते 'अस्तु तर्हि नित्यः शब्दः' इति नित्यत्वमङ्गीकुर्वन् वादी शब्दस्यानित्यत्वप्रतिज्ञां जहाति ॥ १ ॥ परोक्तदोषोद्दिधीर्षया पूर्वानुक्तविशेषणविशिष्टतया प्रतिज्ञातार्थकथनं **प्रतिज्ञान्तरम्** । यथा 'क्षित्यादिकं

## भास्करोदयाख्यव्याख्या.

बोध्यम् ॥ २२ ॥ **येन केनचिद्धर्मेणेति** । प्रमेयत्वादिधर्मेणेत्यर्थः । **सर्वस्यैवेति** । परमाण्वादिनित्यसामान्यस्येत्यर्थः । **तत्सदृशत्वादिति** । घटसदृशत्वादित्यर्थः ॥ २३ ॥ **तत्रैवेति** । शब्द एवेत्यर्थः । **अनुविधानम्** । प्राप्तिरित्यर्थः । **कार्यान्तरस्य संभवादिति** । प्रयत्नेनेत्यादिः । **नानित्यत्वं नियतमिति** । यत्नानुविधानं शब्दे नोदनहेतुना चारितार्थ्यादतो हेतोर्नित्यत्वं नियतमिति भावः ॥२४॥ **ग्रन्थगौरवभयादिति** । अनेन स्वोत्कर्षः सूचितो भवति । **अभियुक्तैः** पण्डितैरित्यर्थः । **निग्रहस्थानं लक्षयतीति** । क्रमप्राप्तनिग्रहस्थानविषयकलक्षणस्वरूपबोधकव्यापारवान्मूलकार इति बोधः । **इदमिति** । निग्रहस्थानलक्षणमित्यर्थः । **छलादावप्यस्तीति** । छलादीनामपि वादिविजय एव विनियोगादिति भावः । **अन्तर्भावादिति** । छलादीनामित्यादिः । तर्हि पृथग्गणनं व्यर्थमत आह—**छलत्वादिनापि ज्ञानस्योपयोगित्वादिति** । वादिनोऽत्र छल इति व्यवहारः छलत्वज्ञानसाध्य एव यत इति भावः । **बाध उद्भावित इति** । अनित्यत्वे गकारस्य नष्टत्वात्प्रत्यभिज्ञाविरोध उद्भावित इत्यर्थः । **अनित्यत्वप्रतिज्ञां जहातीति** । प्रतिज्ञातार्थविरुद्धनित्यत्वं चाभ्युपगच्छतीत्यर्थः ॥ १ ॥ **सविषय-**

प्रतिज्ञासंन्यासः, हेत्वन्तरम्, अर्थान्तरम्, निरर्थकम्, अविज्ञातार्थम्, अपार्थकम्, अप्राप्तकालं, न्यूनम्, अधिकम्, पुनरुक्तम्, अननुभाषणम्, अज्ञानम्, अप्रतिभा,

## नीलकण्ठी.

गुणजन्यं कार्यत्वात्' इत्यत्र अदृष्टजन्यत्वेन सिद्धसाधनोद्भावने 'सविषयकेति' गुणविशेषणदानम् ॥ २ ॥ स्वोक्तसाध्यविरुद्धहेतुकथनं **प्रतिज्ञाविरोधः**। यथा 'द्रव्यं गुणभिन्नं, रूपादितः पृथक्त्वेनानुपलभ्यत्वात्' इति ॥ ३ ॥ स्वोक्तेर्थे परेण दूषिते तदपलापः **प्रतिज्ञासंन्यासः**। यथा 'शब्दोऽनित्यः ऐन्द्रियकत्वात्' इत्युक्ते, परेण सामान्ये व्यभिचारमुद्भाव्य दूषिते स्वोक्तमपलपति 'केनोच्यते शब्दोऽनित्य इति' ॥ ४ ॥ परोक्तदूषणोद्दिधीर्षया पूर्वोक्तहेतुकोटौ विशेषणान्तरोपादानं **हेत्वन्तरम्**। या 'शब्दोऽनित्यः प्रत्यक्षत्वात्' इत्यत्र सामान्ये व्यभिचारोद्भावने 'जातिमत्त्वे सति' इति विशेषणदानम् ॥ ५ ॥ प्रकृतानुपयुक्तार्थकथनम् **अर्थान्तरम्**। यथा 'नित्यः शब्दः अस्पर्शवत्त्वात्' इति हेतुः। हेतुपदं च हिनोतेस्तुनिप्रत्यये निष्पन्नम्, पदं च सुप्तिङन्तम् इत्यादि ॥ ६ ॥ अवाचकशब्दप्रयोगो **निरर्थकम्**। यथा 'शब्दोऽनित्यः जबगडदशत्वात्' इत्यादि ॥ ७ ॥ परिषत्प्रतिवाद्यबोधप्रयोजकपदप्रयोगः **अविज्ञातार्थम्**। तच्च 'क्लिष्टान्वयमप्रसिद्धार्थकं त्वरितोच्चारितम्' इत्यादिरूपम् ॥ ८ ॥ परस्परानन्वितार्थकपदसमूहोऽ**पार्थकम्**। यथा 'शब्दो घटः पटो नित्यमनित्यं च प्रमेयत्वात्' इत्यादि ॥ ९ ॥ अवयवानां व्युत्क्रमेण कथनम**प्राप्तकालम्**। यथा 'शब्दत्वाच्छब्दोऽनित्यः' इत्यादि ॥ १० ॥ यत्किंचिदवयवशून्यावयवाभिधानं **न्यूनम्**। स्पष्टम् ॥ ११ ॥ अधिकहेत्वादिकथनम् **अधिकम्**। यथा 'शब्दोऽनित्यः

## भास्करोदयाख्यव्याख्या.

**केति गुणविशेषणदानमिति**। इच्छायाः सविषयकत्वेन सविषयेच्छागुणजन्यत्वेऽपि अदृष्टस्य निर्विषयत्वेन न सिद्धसाधनोद्भावनमिति भावः ॥ २ ॥ **रूपादितः पृथक्त्वेनानुपलभ्यत्वादिति**। अनेन हेतुना गुणाभेदे गुणभेदो द्रव्येण सिध्यतीति साध्यविरुद्धो हेतुरिति भावः ॥ ३ ॥ **सामान्येव्यभिचारमिति**। अनित्यत्वाभाववति सामान्ये ऐन्द्रियकत्वहेतुवृत्तित्वमित्यर्थः ॥ ४ ॥ **जातिमत्त्वे सतीति विशेषणदानमिति**। हेतुकोटाविति शेषः। तथाच सामान्यस्य सामान्यानधिकरणत्वान्न व्यभिचारोद्भावनसंभव इति भावः ॥ ५ ॥ **इत्यादिरिति**। आदिना गुणः कृत्तद्धितान्तं च प्रातिपदिकमिति ॥ ६ ॥ **जबगडदशत्वादिति**। हेतोरवाचकत्वान्निरर्थकमिदमिति भावः ॥ ७ ॥ **अविज्ञातार्थकमिति**। अपूर्वसङ्केतार्थकमित्यर्थः ॥ ८ ॥ **अपार्थकमिति**। अपगतोऽर्थो यस्मादिति व्युत्पत्त्या निरर्थकमित्येवार्थः। परंच केवलावाचकशब्दप्रयोगान्न निरर्थकवाक्यैक्यमिति ध्येयम् ॥ ९ ॥ **अवयवानामिति**। वाक्यघटकीभूतानामवयवानामित्यर्थः ॥ १० ॥ **यत्किंचिदवयवशून्याभिधानमिति**। शब्दो नित्य इति मात्रम्। अनेन परिषदबोधाद्वादी निगृहीतो भवतीति बोध्यम् ॥ ११ ॥ **शब्दत्वादिति**। यद्यपीह दृष्टान्तानुपलम्भाच्छ्रावणत्वहेतोः

विक्षेपः, मतानुज्ञा, पर्यनुयोज्योपेक्षणं, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभासाश्च निग्रहस्थानानि ॥ शेषं सुगमम् ॥

ननु करतलानलसंयोगे सत्यपि प्रतिबन्धके सति दाहानुपपत्तेः शक्तिः पदार्थो-

## नीलकण्ठी.

शब्दत्वात् श्रावणत्वाच्च' इत्यादि ॥ १२ ॥ अनुवादं विना कथितस्य पुनः कथनं **पुनरुक्तम्** । यथा 'शब्दोऽनित्यः' 'शब्दोऽनित्यः' इत्यादि ॥ १३ ॥ परिषदा त्रिरभिहितस्याप्यननुवादः **अननुभाषणम्** ॥ १४ ॥ परिषदा विज्ञातस्य वादिना त्रिरभिहितस्यापि वाक्यार्थस्याबोधः **अज्ञानम्** ॥ १५ ॥ उत्तरार्हे परोक्तं बुद्ध्वापि उत्तरस्यास्फूर्तिवशात्तूर्णींभावः **अप्रतिभा** ॥ १६ ॥ असंभवत्कालान्तरककार्यव्यासङ्गमुद्भाव्य कथाविच्छेदो **विक्षेपः** ॥ १७ ॥ स्वपक्षे दोषमनुद्धृत्य परपक्षे दोषाभिधानं **मतानुज्ञा** ॥ १८ ॥ उद्भावनार्हपरकीयनिग्रहस्थानानुद्भावनं **पर्यनुयोज्योपेक्षणम्** ॥ १९ ॥ निग्रहस्थानरहिते निग्रहस्थानोद्भावनं **निरनुयोज्यानुयोगः** ॥ २० ॥ एकसिद्धान्तमतमाश्रित्य कथाप्रवृत्तौ तद्विरुद्धसिद्धान्तमतमालम्ब्योत्तरदानम् **अपसिद्धान्तः** ॥ २१ ॥ प्रतिज्ञाहान्यननुभाषणाज्ञानाप्रतिभाविक्षेपपर्यनुयोज्योपेक्षणानामभावे, अन्येषां हेत्वाभासव्यतिरिक्तनिग्रहस्थानानां गुणे, हेत्वाभासानां च द्रव्यादिष्वन्तर्भावो यथायथं बोध्यः । अतिरिक्तः सूत्रार्थः सुगम इत्यभिप्रायेणाह—**शेषमिति** ।

नन्वनलसंयोगे सत्यपि मण्यादिसमवधाने दाहो न जायत इति मण्यादेः प्रतिबन्धकता वाच्या । सा च वह्नौ दाहानुकूलशक्तिस्वीकार एव निर्वहति । प्रतिबन्धकतायाः कार्यानुकूलशक्तिविघटकत्वरूपत्वात् । अतस्तदन्यथानुपपत्तिसिद्धायाः शक्तेरतिरिक्तत्वात् 'सप्तैव पदार्थाः' इत्यसंगतमिति प्राभाकरः शङ्कते—

## भास्करोदयाख्यव्याख्या.

सार्थक्यम् तथापि सोऽयमिति प्रत्ययादिति हेतोर्बोधकः । तदर्थतात्पर्यग्राहकमेव- चेत्यादीत्यादिपदमिति बोध्यम् ॥ १२ ॥ **इत्यादीति** । आदिना कार्यत्वात्कार्यत्वादिति संग्रहः ॥ १३ ॥ **अननुवाद इति** । तदर्थबोधकोच्चारणानुच्चारणमित्यर्थः ॥ १४ ॥ परिषदोऽज्ञानव्यावृत्तये **परिषदा विज्ञातस्येति** ॥ १५ ॥ **उत्तरार्हमिति** । उत्तरितुं योग्यमित्यर्थः ॥ १६ ॥ **असंभवादिति** । अशक्यमित्यर्थः ॥ १७ ॥ **अनुद्धृत्येति** । उद्धारमकृत्वेत्यर्थः ॥ १८ ॥ **निग्रहस्थानानुद्भावनमिति** । परिषदि वादिविजयहेतुभूतदोषाप्रदानमित्यर्थः ॥ १९ ॥ **निग्रहस्थानरहित इति** । अदुष्टे परोक्तवाक्य इत्यर्थः ॥ २० ॥ **एकसिद्धान्तेत्यादि** । यथा कश्चन वैयाकरणः परिषदि शब्दः नित्य उच्चारणजन्यत्वादिति शङ्किते, नोच्चारणेन जन्यते शब्दः । उच्चारणं तदावरणमात्रनिवर्तकं तेन शब्दः नित्य एवेत्याहेति ॥ २१ ॥ सप्तैवेति मतं सिद्धान्तयितुमुक्तानन्तर्भावयति—**प्रतिज्ञेत्यादिना, शेषमितीति** । इदं च निरूपयिष्यते स्वयमेव मूलकारः पदार्थज्ञानस्येत्यादिनेति न व्याख्यातं प्रकाशकारैरिति बोध्यम् । **मण्यादीति** । आदिना

न्तरमिति चेत् ॥ न ॥ प्रतिबन्धकाभावस्य कार्यमात्रे कारणत्वेन शक्तेरनुपयोगात् ।

## नीलकण्ठी.

**नन्विति ।** नन्वेवं शक्तिसिद्धावपि तस्यातिरिक्तत्वासिद्धिरिति चेत् ॥ न ॥ यतो न तावद्द्रव्यात्मिका शक्तिः, गुणादिवृत्तित्वात् । अत एव न गुणकर्मान्यतररूपा, नच सामान्याद्यन्यतमरूपा उत्पत्तिविनाशशालित्वात् । एवं चातिरिक्तपदार्थत्वसिद्धिरिति ॥ प्रतिबन्धकत्वं न कार्यानुकूलशक्तिविघटकत्वम् । अपि तु कारणीभूताभावप्रतियोगित्वम् । तच्च मण्यभावस्य हेतुत्वादेवोपपद्यते । मणिसमवधानदशायां च तदभावरूपकारणान्तराभावादेव दाहानुत्पत्तिसंभवः । इत्थं चातिरिक्तशक्तिस्वीकारोऽनुचित इत्याशयेन समाधत्ते—**प्रतिबन्धकाभावस्येति** ॥ ननु 'दाहोत्पादे च वह्निः शक्तः' इति व्यवहारान्यथानुपपत्त्या सेत्स्यति अतिरिक्ताशक्तिरित्याशङ्क्य तस्याः कारणतारूपत्वेऽपि व्यवहारोपपत्तेर्नातिरिक्ता शक्तिरित्याह—**कारणत्वस्येति ।** ननु मण्याद्यभावस्य हेतुत्वे मणिसमवधानदशायां सत्यप्युत्तेजके दाहो न स्यात् । मन्मते तु मण्याद्यपसारणदशायामिवोत्तेजकसमवधानदशायामपि वह्नौ दाहानुकूलशक्त्यन्तरोत्पत्तेरङ्गीकारेण न दोष इति चेत् ॥ न ॥ उत्तेजकाभावविशिष्टमण्याद्यभावस्य कारणत्वाङ्गीकारेण अदोषात् । न चोत्तेजकाना-

## भास्करोदयाख्यव्याख्या.

मन्त्रौषध्योः संग्रहः । **तदन्यथानुपपत्त्येति ।** प्रतिबन्धकतान्यथानुपपत्त्येत्यर्थः । **शक्तिसिद्धावपीत्यादि ।** तुष्यतु दुर्जनन्यायेन शक्तिमभ्युपगम्य प्रौढ्या क्लृप्तेष्वेवैनामन्तर्भावयामोऽतस्ते न सिद्धः सप्तत्वविघटनपरो मनोरथ इत्याशङ्किते नैयायिके प्राभाकरोऽतिरिक्तत्वासिद्धिं निराचष्टे—**चेन्नेति । गुणादिवृत्तित्वादिति ।** 'ज्ञानशक्त्या क्रियाशक्त्या संयुतांशं स्मृतिं शिवः । प्राकरोन्मायया सर्वा भागधेयेन ते स्थिते' इत्यभियुक्तोक्तेस्तस्यास्तद्वृत्तित्वं बोध्यम् । **अतएवेति ।** गुणादिवृत्तित्वादेवेत्यर्थः । अत्र मानं 'भागधेयेन ते स्थिते' इतीति ध्येयम् । **उत्पत्तिविनाशशालित्वादिति ।** परमेश्वरोपासनया शास्त्रव्यवसायेन वा ज्ञाने शक्तिविशेषोत्पत्तेरनुभवसिद्धत्वाद्भागधेयेत्याद्युक्तेश्चैवं क्रियायामपि बोध्यं द्रव्ये तूक्तमेवेति भावः । **कारणीभूताभावप्रतियोगित्वमिति ।** दाहकारणीभूतो यो मण्यभावस्तत्प्रतियोगित्वेन मणेः प्रतिबन्धकत्वमित्यर्थः । **कारणान्तराभावादेवेति ।** अनन्यथासिद्धनियतपूर्ववृत्तित्वावच्छिन्नान्यकारणाभावादेवेत्यर्थः । **शक्त इतीति ।** शक्तिविशिष्ट इतीत्यर्थः । **कारणतारूपत्वेऽपीति ।** दाहकार्यकारणवह्निवृत्तिवह्नित्वसमानाधिकरणकारणतारूपत्वेऽपीत्यर्थः । एवं ज्ञानक्रिययोः संसृतिकारणत्वेन तद्वृत्तिरूपत्वान्नातिरिक्तत्वमिति नाभियुक्तोक्तिविरोधः । भागधेयेन स्थित इति तु भागधेयेन तद्रूपतद्धर्मावच्छिन्नज्ञानक्रिये उत्पद्येते इत्येवाभिप्रायकम् । परमेश्वरकृपया शास्त्रव्यवसायेन वा ज्ञाने शक्तिविशेषोत्पत्तिव्यवहारश्च दुरितजन्यज्ञानावरकमालिन्यनिवृत्तिविषय एव क्रियायां तदुत्पत्तिसंभवेनाप्यपि तु तत्कौशल्यमात्मन्युत्पद्यत इति निर्दुष्टः पन्थाः । **मन्मते त्विति ।** प्राभाकरमते

**कारणत्वस्यैव शक्तिपदार्थत्वात् ॥ ननु भस्मादिना कांस्यादौ शुद्धिदर्शनादाधेयश-क्तिरङ्गीकार्येति चेत् ॥ न ॥ भस्मादिसंयोगसमानकालीनाऽस्पृश्यस्पर्शप्रतियोगि-**

## नीलकण्ठी.

मननुगतत्वात् तत्तदुत्तेजकाभावकूटविशिष्टमण्याद्यभावस्यैव कारणतायाः कल्पनीयतया गौरवमिति वाच्यम् । दाहानुकूलशक्तिं प्रति एतादृशकारणतायास्त्वयाप्यावश्यकत्वात् अनन्तशक्तितत्प्रागभावध्वंसकल्पने महागौरवादिति संक्षेपः । नन्वेवमपि कांस्यादेरस्पृश्यवस्तुस्पर्शे सति न भोजनादिरूपकार्यार्हता शक्तिमत्कांस्यादेरेव तदर्हत्वात् अस्पृश्यस्पर्शे सति शक्तेर्नाशात् भस्मसंयोगे पुनः शक्तेरुत्पादात् तदर्हता । एवं च कांस्यादौ आधेयशक्तिः स्वीकार्या । नच कांस्यादौ भोजनादिकं प्रति अस्पृश्यस्पर्शस्य प्रतिबन्धकत्वकल्पनादेवोपपत्तौ तदनङ्गीकार इति वाच्यम् । प्रकृते च असंस्पृश्यस्पर्शस्यासंपृश्यसंयोगरूपतया सति तन्नाशे प्रतिबन्धकाभावसद्भावात् कांस्यादौ अन्तरा भस्मादिसंयोजनं भोजनाद्यर्हतापत्तिरिति पुनः प्रत्यवतिष्ठते—**ननु भस्मादिनेति** । प्रथमेनादिपदेनाम्लादेः द्वितीयेन च ताम्रादेः परिग्रहः । क्लृप्तध्वंसविशेषेणैव कांस्यादेः शुद्धत्वोपपत्तौ अतिरिक्तशक्त्यङ्गीकारोऽनुचित इति समाधत्ते—**भस्मादिसंयोगेति** । यत्र कांस्यादौ भस्मादिसंयोगध्वंसानन्तरं पुनरस्पृश्यस्पर्शः तत्रापि भस्मादिसंयोगध्वंसस्य सत्त्वाच्छुद्ध्यापत्तिरतः सहितान्तं ध्वंसविशेषणम् । साहित्यं चात्र संबन्धविशेष-

## भास्करोदयाख्यव्याख्या.

त्वित्यर्थः । **अननुगतत्वादिति** । अनेकत्वादिति भावः । **त्वयाप्यावश्यकत्वादिति** । मण्याद्यपसरणेन शक्तिरुत्पद्यते इति तव मतं तथाच मण्यभावस्य कारणत्वमार्थसमाजग्रस्तम् । मण्युत्तेजकयोः सत्त्वे दाहोत्पत्तेर्मण्यभावे च तत्तदुत्तेजकाभावकूटवैशिष्ट्यविशेषणमप्यावश्यकमेवेति भावः । **महद्गौरवादिति** । अतिरिक्तस्वीकारे इत्यादिः । नन्वितिशङ्काग्रन्थमवतारयति—**नन्वेवमित्यादिना** । **कांस्यादेरिति** । आदिना ताम्रादिसंग्रहः । **अस्पृश्यवस्तुस्पर्शे सतीति** । उच्छिष्टादिस्पर्शे सतीत्यर्थः । **शक्तिमत्कांस्यादेरेवेति** । शक्तिश्च संस्कारविशेषजन्यो वस्तुविशेष इति तदाशय इति बोध्यम् । **एवंचेति** । उत्पत्तिविनाशशालित्वेन तस्याः प्रत्यक्षसिद्धत्वे चेत्यर्थः । **आधेयशक्तिरिति** । ईदृश्यास्तन्मते आधेयेति शङ्केत इति बोध्यम् । **प्रकृते चेति** । कांस्यादावित्यर्थः । **सति तन्नाश इति** । यत्किंचिदस्पृश्यस्पर्शाभावे सतीत्यर्थः । **पुनः प्रत्यवतिष्ठत इति** । पुनः प्रतिद्वन्द्वी भवतीत्यर्थः । यद्यप्यस्पृश्यस्पर्शसामान्याभावविवक्षया तदापत्तिवारणं संभवति, तथापि शक्तेरेव शुद्धिस्वरूपत्वेन तदनङ्गीकारे तदसिद्धिः स्यादिति शङ्कासजातीयोत्तरस्यैव न्याय्यत्वात्प्रवृत्तमूलाशयं दर्शयन्मूलमुत्थापयति— **क्लृप्तेत्यादिना** । **कांस्यादाविति** । आदिना ताम्रम् । **भस्मादीति** । आदिना अम्लम् । **संयोगादीति** । आदिना संयोगान्तरम् । **ध्वंसादीति** । आदिना ध्वंसान्तरम् । **तत्रापीति** । पुनरस्पृश्यस्पर्शकाले इत्यर्थः । **संबन्धविशेष-**

कयावदभावसहितभस्मादिसंयोगध्वंसस्य शुद्धिपदार्थत्वात् ॥

## नीलकण्ठी.

नियन्त्रितं सामानाधिकरण्यम् अस्पृश्यवस्तूनामनुगमकरूपस्य दुर्वचतया सामान्यधर्मावच्छिन्नाभावनिवेशासंभवात् यत्किंचिदस्पृश्यस्पर्शाभावस्य च तत्र सत्त्वात्तदापत्तिस्तदवस्थैव इत्यतो **यावदिति** । तथा च तत्र यावतां तत्तदस्पृश्यभावानां निरवच्छिन्नविशेषणतासंबन्धेन असत्त्वेन नोक्तदोष इति भावः । ननु तर्हि कुत्रापि शुद्धत्वं न स्यात् अस्पृश्यस्पर्शप्रागभावस्यापि यावदन्तर्गततया तस्यास्पृश्यस्य इतरकालिकभस्मादिसंयोगध्वंसकाले चासत्त्वे न अदृश्याभावरूपसामानाधिकरण्यविशिष्टभस्मादिसंयोगध्वंसस्य सत्त्वासम्भवात् । अतः भस्मादिसंयोगकालावच्छेदेन तत्रासत्त्वेन यावदन्तर्गततया न दोषः । नच यत्रास्पृश्यस्पर्शध्वंसोत्तरं भस्मादिसंयोगः ततः स ध्वंसः पुनरस्पृश्यस्य स्पर्शः । तद्ध्वंसानन्तरं भस्म......ध्वंसः । तदा तत्र शुद्धत्वानुपपत्तिर्द्वितीयास्पृश्यस्पर्शप्रागभावस्य प्राथमिकभस्मसंयोगकालिकतयायावदन्तर्गततया द्वितीयास्पृश्यस्पर्शतद्ध्वंसदशायामितिवत् तदुत्तरसमवायेऽभावात् इति वाच्यम् । यतो यादृशभस्मसंयोगध्वंसमादाय व्यवहारस्तादृशभस्मसंयोगकालिकत्वं निवेशनीयमित्यत्र तात्पर्यम् । एवञ्च तादृशयावदभावसामानाधिकरण्य......स्य......भस्मसंयोगध्वंसमादायैव तदाशुद्धत्वोपपत्तिः । प्रथमभस्माऽसंयोगध्वंसकाले तु तादृशं प्राथमिकं भस्मसंयोगध्वंसमुपादाय शुद्धिनिर्वाह इतिसंक्षेपः ॥

## भास्करोदयाख्यव्याख्या.

**नियन्त्रितं सामानाधिकरण्यमिति** । दैशिकविशेषणतासंबन्धावच्छिन्नोक्तयावदभावाधिकरणतावद्वृत्तित्वमित्यर्थः । तेन भस्मादिसंयोगध्वंसाधिकरणे विद्यमानस्यापि समवायेनास्पृश्यस्पर्शस्य संयोगेनाभावसामानाधिकरण्यमादाय न दोषः । **तत्रेति** । भस्मादिसंयोगध्वंसाधिकरण इत्यर्थः । **तदापत्तिरिति** । शुद्ध्यापत्तिरित्यर्थः । **असत्त्वेनेति** । तस्य नष्टत्वादिति भावः । **तादृशप्रागभावस्येति** । अस्पृश्यस्पर्शप्रागभावस्येत्यर्थः । **न दोष इति** । शुद्ध्यनापत्तिरूपो दोषो नेत्यर्थः । **तदुत्तरसमय इति** । भस्मसंयोगध्वंससमय इत्यर्थः । **तादृशभस्मसंयोगकालिकत्वमिति** । शुद्धत्वव्यवहारप्रयोजकभस्मसंयोगकालवृत्तित्वरूपसामानाधिकरण्यं यावदभावे निवेशनीयं न यथाकथंचित्संयोगकालवृत्तित्वमित्यर्थः । **एवंचेति** । एवंविधनिवेशे चेत्यर्थः । **तादृशयावदभावेति** । यादृशभस्मसंयोगध्वंसमादाय शुद्धत्वव्यवहारस्तादृशसंयोगकालिको यावदभाव इत्यर्थः । **सामानाधिकरण्यविशिष्टमिति** । तत्तदस्पृश्यस्पर्शध्वंसकूटसामानाधिकरण्यमेव संभवतीति तमादायैव संयोगध्वंसस्य शुद्धित्वं न तत्तत्प्रागभावाद्यघटिताभावकूटसामानाधिकरण्यमादायापीति गुह्यमवधार्यम् । **संक्षेप इति** । एतद्विचारस्य बहुश उपयोगाभावान्न विस्तृतोऽयमिति भावः । **मतमिति** । स्वत्वं तावत् स्वत्वमुत्पन्नं विनष्टं तव स्वत्वं मम स्वत्वम् ब्रह्मस्वमित्यादि प्रतीतिसिद्धं षष्ठीवाच्यं पदार्थान्तरं तच्च वृत्तिनियामकविशेषणताविशेषेण स्वर्णादिनिष्ठम् । स्वर्णे स्वत्वमित्यादिप्रत्ययात् । निरूपकत्वाख्यविशेषणताविशेषेण च स्वामिनिष्ठम् । अत्रास्य पुरुषस्य स्वामित्वमिति

---

१ यत्र भस्मादिसंयोगास्पृश्यवस्तुस्पर्शौ युगपदेवोत्पन्नविनष्टौ तत्र तत्तदस्पृश्यस्पर्शाभावकूटसामानाधिकरण्यविशिष्टभस्मादिसंयोगमादाय शुद्धतापत्तिः । अतो भस्मादिसंयोगकालावच्छेदेन तत्र विद्यमानार्थकं कालीनान्तमभावविशेषणम् । तथाच तत्र भस्मादिसंयोगक्षणावच्छेदेन यावत्तत्तदभावानामसत्त्वान्न दोष इति भावः ।—अयं मुद्रिततैलङ्गपुस्तकेऽप्यत्र पाठः ॥

## भास्करोदयाख्यव्याख्या.

प्रत्ययात्। नच स्वत्वं द्रव्यस्वरूपं गुणादिवृत्तित्वात्। नवा गुणरूपं कर्मरूपं वातत्त्वादेव। नच सामान्यादिरूपं नित्यत्वप्रसङ्गात्। उत्पन्नं स्वं विनष्टं स्वमिति प्रत्ययानापत्तेश्च। नचाभावस्वरूपं भावत्वेन प्रतीतिविषयत्वानापत्तेस्तस्मान्नान्तर्भवति सप्तस्विति। नच षष्ठीवाच्यत्वे चैत्रस्य कुलमित्यादौ तत्प्रत्ययापत्तिः। धनादिसमभिव्याहारस्याकाङ्क्षात्वात्। नचैवं धनस्य चैत्र इत्यत्रापि तद्बोधापत्तिः। स्वामित्वाश्रयप्रकृतिकषष्ठ्या तद्बोधे प्रथमान्तस्वत्वाश्रयपदसमभिव्याहारस्याकाङ्क्षात्वात्। नचैवं चैत्रपदधनपदाभ्यां तद्बोधेऽन्यलभ्यत्वात्षष्ठ्यास्तदर्थवाचकत्वमनुपपन्नमिति वाच्यम्। चैत्रधनयोश्चैत्रत्वधनत्ववाचकयोः षष्ठ्यैव तथार्थकत्वात्। नचैवमस्मिन्पुरुषे तद्द्रव्यस्वामित्वमित्यादिप्रतीतिर्दुर्वचेति वाच्यम्। निरूपकतासंबन्धेन स्वत्वमेव स्वामित्वम् अयमस्य स्वामी अयमस्य पतिरित्यादिप्रतीतिसिद्धं तदपि पदार्थान्तरं वृत्तिनियामकविशेषणताविशेषेण स्वामिनिष्ठम्। अस्मिन्पुरुषे एतद्द्रव्यस्वामित्वमिति प्रत्ययात्। अत्र द्रव्येऽस्य पुरुषस्य स्वामित्वमित्याद्यप्रत्ययाच्च। अथैवं स्वत्वस्वामित्वयोर्विभिन्नपदार्थत्वे चैत्रस्य धनमित्यादौ स्वत्वं स्वामित्वं वेत्यत्र विनिगमनाविरहः। स्वत्वस्य षष्ठ्यर्थत्वे निरूपकत्वसंबन्धेन प्रकृत्यर्थविशेष्यतयाऽऽश्रयतासंबन्धेन धनविशेषणतया तदन्वयस्य सुवचत्वात्। नच स्वामित्वस्य षष्ठ्यर्थत्वे चैत्रस्य धनमितिवद्धनस्य चैत्र इत्यपि प्रतीतिः स्यात् चैत्रस्य धननिरूपितस्वामित्वाश्रयत्वादिति वाच्यम्। स्वत्वस्य षष्ठ्यर्थत्वेऽपि तादृशप्रत्ययस्य दुर्वारत्वात्। धननिष्ठस्वत्वनिरूपकत्वाच्चैत्रस्येत्यतः षष्ठ्यर्थस्वत्वस्य निरूपकत्वसंबन्धेनैव प्रकृत्यर्थविशेष्यतया आश्रयतासंबन्धेनैव चानुयोगिविशेषणतयाऽन्वयो नतु संबन्धान्तरेणेति व्युत्पत्तिः कल्प्यते। स्वामित्वस्य षष्ठ्यर्थत्वेऽपि षष्ठ्यर्थस्वामित्वस्य निष्ठतासंबन्धेनैव प्रकृत्यर्थविशेष्यतया निरूपकत्वसंबन्धेनैव स्वानुयोगिनि विशेषणतयाऽन्वयो न तु संबन्धान्तरेणेति व्युत्पत्तेः सुवचत्वादिति चेन्न। स्वामित्वस्यैव षष्ठ्यर्थत्वे चैत्रीयधने नेदं चैत्रस्येति व्यवहारापत्तेः। स्वामित्वस्य चैत्रवृत्तितया तदभावस्य सुतरां धने सत्त्वात्। नच निरूपकतासंबन्धेनैव षष्ठ्यर्थस्वामित्वस्याभावो बोध्यते स च न धन इति वाच्यम्। निरूपकतासंबन्धस्य वृत्त्यनियामकतयाऽत्यन्ताभावप्रतियोगितानवच्छेदकत्वात्। नच तथापि वृत्त्यनियामकसंबन्धस्याप्यभावप्रतियोगितावच्छेदकतानये स्वामित्वस्य षष्ठ्यर्थत्वे न किमपि बाधकमिति वाच्यम्। तन्नये प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यधिकरणत्वस्यैवाभावविरोधितया गगनादिसंयोगिनि घटादौ संयोगसंबन्धावच्छिन्नगगनाद्यभावश्चैत्रनिष्ठस्वामित्वनिरूपकेऽपि धने निरूपकत्वसंबन्धावच्छिन्नचैत्रनिष्ठस्वामित्वाभावस्य वृत्तौ बाधकाभावेन तादृशव्यवहारापत्तेर्दुर्वारत्वात्। नचैवं सति निरूपकतासंबन्धावच्छिन्नप्रतियोगिताकज्ञानाद्यभावस्यापि केवलान्वयित्वं स्यान्न स्याच्च विषयितासंबन्धेन ज्ञानादेः केवलान्वयित्वं विषयितासंबन्धस्य केवलान्वयित्वानियामकतया तेन संबन्धेन ज्ञानाद्यधिकरणस्यैवाप्रसिद्धिरिति वाच्यम्। इष्टत्वात्। ज्ञानविषयत्वादेः केवलान्वयित्वात्। यदि च वृत्त्यनियामकसंबन्धोऽपि अत्यन्ताभावप्रतियोगितावच्छेदकः। प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिसंबन्धित्वमेवाभावविरोधि। अत एव प्रलये परमाणावुत्पत्तिकाले चावयविनि

---

१ निरूपकतासंबन्धेन स्वामित्वस्य सत्त्वात्। २ वृत्त्यनियामकतयेत्यर्थः।

स्वत्वमपि न पदार्थान्तरम् ॥ यथेष्टविनियोगयोग्यत्वस्य स्वत्वरूपत्वात् । तदवच्छेदकं च प्रतिग्रहादिलब्धत्वमेवेति ॥

अथ विधिर्निरूप्यते—प्रयत्नजनकचिकीर्षाजनकज्ञानविषयो विधिः। तत्प्रतिपा-

## नीलकण्ठी.

चैत्रस्य इदं धनमित्यादौ यत् स्वत्वं प्रतीयते, तत् पदार्थान्तरमिति मतं निरस्यति—**स्वत्वमपीति** । अपिनाद्युक्तसमुच्चायकेन प्रतियोगित्वपरिग्रहः । ननु तर्हि स्वत्वं किं स्वरूपमत आह—**यथेष्टेति । तदवच्छेदकं चेति ।** तादृशयोग्यत्वप्रयोजकं त्वित्यर्थः । प्रतियोगित्वं प्रतियोगिरूपं प्रतियोगितावच्छेदकरूपं वेत्यादिकं बहुतरमूहनीयम् ।

सर्वेषां पदार्थानामुक्तपदार्थेषु यथायथमन्तर्भावं निरूप्य मूलन्यूनतां परिहर्तुं विधिं निरूपयिष्यमाणः शिष्यावधानाय तन्निरूपणं प्रतिजानीते—**अथेति ।** स्वपरमतसाधारणं विधित्वं तावन्निर्वक्ति—**प्रयत्नेति ।** प्रयत्नजनिका या चिकीर्षा

## भास्करोदयाख्यव्याख्या.

संयोगसंबन्धावच्छिन्नगगनाद्यभावो नान्यथेति । अत एव ज्ञानविषयत्वादिवद्विषयितासंबन्धेन ज्ञानादिकमपि केवलान्वयि । विषयितासंबन्धावच्छिन्नज्ञानाद्यभावस्त्वलीक इत्याद्रियते तदाऽस्तु विनिगमनाविरहात्स्वत्वस्वामित्वोभयमेव षष्ठ्यर्थः । तात्पर्यग्रहस्य विनिगमकत्वादेव चैत्रस्य धनमित्यादौ नियमतो न स्वत्वस्वामित्वयोरवगम इति संप्रदायः । **केचित्तु** स्वत्वमेव स्वामित्वं नतु पदार्थान्तरम् । निरूपकतासंबन्धस्य वृत्त्यनियामकत्वेऽपि निरूपकत्वस्य स्वरूपसंबन्धेन वर्तमानत्वादेवात्र स्वत्वं पुरुषस्य द्रव्यस्य स्वामीति प्रत्ययोत्पत्तेः । एवं च गौरवादेव स्वामित्वं न षष्ठ्यर्थोऽपितु स्वत्वमेवेत्याहुः । तदसत् । विनिगमकाभावात् । स्वामित्वमेव पदार्थान्तरं तन्निरूपकत्वमेव स्वत्वमिति वैपरीत्यस्यापि सुवचत्वात् । नच स्वामित्वनिरूपकत्वस्य स्वत्वरूपत्वेऽपि स्वशब्दादेः शक्यतावच्छेदकत्वे गौरवम् । स्वत्वनिरूपकत्वस्य स्वामित्वरूपत्वेऽपि स्वामिशब्दपतिशब्दादेः शक्यतावच्छेदकत्वे गौरवात् । नव्यास्तु स्वत्वं स्वामित्वमेकपदार्थः । स च विशेषणतासंबन्धेनात्र स्वत्वमेव स्वामित्वमिति व्यवहारः । न तु स्वत्वस्वामित्वयोर्भेदः । उभयोर्भेदेऽपि[5] उभयोरवश्यं पुरुषधननिष्ठपरस्परविलक्षणविषयताभ्युपगमात्[6] । एतेन विषयत्वं विषयित्वमित्यपि व्याख्यातम् । तदुभयोरप्येकपदार्थत्वात् । स च विलक्षणविषयतासंबन्धेनात्र विषयत्वम् । इदं विषय इति व्यवहारात् । विलक्षणविशेषणतया चात्र विषयित्वमिदं विषयीत्यादिव्यवहारादित्याहुरिति मतमित्यर्थः । **निरस्यतीति ।** गुणे एनमन्तर्भाव्यातिरिक्तत्वं निषेधतीत्यर्थः । **प्रतियोगित्वादीति ।** आदिना विषयत्वनिरूपकत्वादिसंग्रहः । **यथेष्टेतीति ।** स्वकीयधननिष्ठो गुणविशेष इति भावः । **प्रयोजकत्वं चेत्यर्थ इति ।** प्रतिग्रहादिलब्धत्वमिति परेणाभेदेनान्वयः । **इत्यादिकमिति ।** एवं विषयता विषयस्वरूपा ज्ञानस्वरूपा

---

१ मूलस्य न्यूनतामिति भास्कराभिमतः पाठः । २ प्रलयपरमाणावुत्पत्तिकालावयविनि च संयोगसंबन्धेन गगनसंबन्धित्वविरहादिति भावः । ३ केवलान्वयित्वभङ्गापत्तेरेव । ४ द्रव्ये । ५ भेदानुभवेऽपि । ६ विलक्षणविषयताप्रयुक्तभेदानुभवादित्यर्थः ।

दको लिङादिर्वा ॥ कृत्यसाध्ये प्रवृत्त्यदर्शनात्, कृतिसाध्ये प्रवृत्तिदर्शनात् कृतिसा-

## नीलकण्ठी.

तज्जनकं यज्ज्ञानं तद्विषय इत्यर्थः । गुरुमते कृतिसाध्यताज्ञानस्य, स्वमते कृतिसाध्यत्वविशिष्टेष्टसाधनताज्ञानस्य, चिकीर्षाद्वारा प्रयत्नजनकत्वात् । तन्मते च कृतिसाध्यत्वे, स्वमते च कृतिसाध्यत्वविशिष्टेष्टसाधनत्वे लक्षणसंगतिः । अभिधायकस्य विधिमताभिप्रायेणाह—**तत्प्रतीति** । तादृशज्ञानविषयकार्यत्वादिप्रतिपादकलिङादिरित्यर्थः । लिङादीत्यादिना लोट्तव्यादिसंग्रहः । वाकारोऽनास्थायाम् । गुरुमतमाशङ्कते—**कृत्यसाध्य इति** । कृत्यसाध्यत्वेनावगत इत्यर्थः । **प्रवर्तकमिति** । चिकीर्षाद्वारा प्रवृत्तिजनकमित्यर्थः । नच कृत्यसाध्यत्वज्ञानाभाव एव प्रवर्तकोस्त्विति शङ्क्यम् । कृत्यसाध्यत्वज्ञानाभावत्वेन तत्त्वे गौरवात् । कृतिसाध्यत्वाभावकृतिसाध्यभेदतत्तद्व्याप्यादिदर्शनानां प्रवृत्तौ प्रतिबन्धकत्वकल्पनेन महागौरवाच्चेति

## भास्करोदयाख्यव्याख्या.

वेत्यादिकमित्यर्थः । **ऊहनीयमिति** । वितर्कितव्यमित्यर्थः । **मूलस्य न्यूनतामिति** । विधिपदार्थानिरूपणप्रयुक्तां संग्रहस्य न्यूनतामित्यर्थः । **तन्निरूपणं प्रतिजानीत इति** । विधिसंबन्धिलक्षणस्वरूपप्रामाण्यप्रकारकज्ञानानुकूलशब्दप्रयोगविषयकप्रतिज्ञाश्रयो मूलकार इति बोधः । **स्वपरमतसाधारणमिति** । नैयायिकमीमांसकोभयमतसाधारणमित्यर्थः । **तन्मत इति** । मीमांसकमत इत्यर्थः । तन्मते तावन्मात्रतथाविधज्ञानस्य तत्त्वेऽनिष्टसाधनेऽपि विषादौ तत्सत्त्वेन विधित्वापत्तेः । कृतिसाध्यत्वविशिष्टेष्टसाधनताज्ञानस्य तत्त्वं नैयायिकैरभ्युपगतं तन्निवृत्तये इष्टसाधनत्वज्ञानमात्रस्य तत्त्वे 'आत्मा वारे द्रष्टव्य' इतीयताऽऽत्मदर्शने इष्टसाधनत्वे बोधिते विधित्वाद्याग इवापूर्वविधेयत्वापत्तिः । आत्मज्ञानस्य तु नापूर्वविधेयत्वं स्वप्रकाशत्वेन सर्वदाऽवस्थितेस्तदावरणभङ्गमात्रस्यैव विधेयत्वेन तव्यदुपपत्तिरित्याहुः । **अभिधायकस्येति** । विधिनिमन्त्रणामन्त्रणेत्यनुशासनविहितस्य विध्यर्थाभिधायकस्य लिङादेरित्यर्थः । **तादृशज्ञानविषय इति** । प्रयत्नजनकचिकीर्षाजनकज्ञानविषय इत्यर्थः । **कार्यत्वादिप्रतिपादिकेति** । कृतिसाध्यत्वेष्टसाधनत्वप्रतिपादिकेत्यर्थः । **वाकारोऽनास्थायामिति** । विध्यर्थको लिङिति प्रामाणिकव्यवहारादिति भावः । **कृत्यसाध्यत्वेनावगत इत्यर्थ इति** । यथाश्रुते स्वरूपतः कृत्यसाध्ये भ्रमात्कृतिसाध्यत्वेन प्रवृत्तेर्दर्शनात्तत्त्वेनावगत इत्यर्थ इति । नन्ववगमस्य भ्रमात्मकस्यापि संभवात् कृतिसाध्येऽपि कृत्यसाध्यत्वेनावगमविषयत्वादप्रवृत्त्यापत्तिरिति चेन्न । यथार्थत्वेन विशेषणीयत्वात् । **चिकीर्षाद्वारेति** । जानाति इच्छति यतते इति क्रमानुरोधादिति भावः । यदभावो यदभावप्रयोजकस्तदभावाभावस्तदभावाभावकारणमिति न्यायेन प्रकृते कृत्यसाध्यत्वज्ञानस्य प्रवृत्त्यभावप्रयोजकत्वात्तदभाव एव प्रवृत्तिकारणमस्त्वित्यभिप्रायेणाशङ्कते—**नचेति** । **तत्त्व इति** । प्रवर्तकत्व इत्यर्थः । **गौरवादिति** । कारणतावच्छेदकशरीरस्य गुरुत्वादित्यर्थः । **तत्तद्व्याप्यादिदर्शनानामिति** ।

१ लिङ्लोट्तव्यतां लिङर्थे लेटश्च विधिवाक्यलिङ्गताऽध्वरमीमांसकैरुक्ता ।

ध्यताज्ञानं प्रवर्तकम्। नच विषभक्षणादौ प्रवृत्तिप्रसङ्गः, इष्टसाधनतालिङ्गककृतिसाध्यताज्ञानस्य काम्यस्थले, विहितकालशुचिजीवित्वनिमित्तज्ञानजन्यस्य नित्यनैमित्तिकस्थले, प्रवर्तकत्वात्॥ न चाननुगमः। स्वविशेषणवत्ताप्रतिसंधानजन्यत्वस्यानुगतत्वात् इति गुरवः॥ तन्न॥ लाघवेन कृतिसाध्येष्टसाधनताज्ञानस्यैव चिकी-

## नीलकण्ठी.

दिक्। ननु विषभक्षणादौ प्रवृत्त्यापत्तिः, कृतिसाध्यताज्ञानस्य तत्रापि सत्त्वादित्याशङ्कां निराचष्टे—**न चेत्यादिना**। **इष्टसाधनतालिङ्गकेति**। 'अयं मत्कृतिसाध्यः मत्कृतिं विना अनुपपद्यमानत्वे सति इष्टसाधनत्वात्' इत्यानुमानिकेत्यर्थः। **काम्यस्थल इति**। प्रवर्तकत्वादित्यनेनान्वयः। ज्योतिष्टोमयागादावित्यर्थः। **विहितकालेत्यादि**। विहितकालशुचिजीवित्वज्ञानाधीनस्य कृतिसाध्यताज्ञानस्य नित्ये संध्यावन्दनादौ, आशौचादिरूपनिमित्तज्ञानाधीनस्य तस्य नैमित्तिके स्नानादौ, प्रवर्तकत्वादित्यर्थः। 'अहमेतत्कालिककृतिसाध्यसंध्यावन्दनकः एतत्कालिकशुचिजीवित्वात्' इत्येवं रीत्या कृतिसाध्यत्वज्ञानस्य विहितकालशुचिजीवित्वादिज्ञानजन्यत्वमवसेयम्। **अननुगम इति**। प्रवृत्तिसामान्यप्रयोजकस्यैकस्याभावादिति भावः। **स्वविशेषणवत्तेत्यादि**। स्वं प्रवर्तमानः पुरुषः तस्य विशेषणं तन्निष्ठो धर्मः कामनादिः, तद्वत्तायाः स्वविषयसाधनत्वादिरूपस्य तत्संबन्धस्य प्रतिसंधानं ज्ञानं तज्जन्यत्वस्येत्यर्थः। **लाघवेनेति**। कारणतावच्छेदकलाघवेनेत्यर्थः। तन्मते कारणतावच्छेदकस्य जन्यत्वादिघटितत्वाद्गौरवमिति भावः। **कृतिसाध्येष्टसाधनतेति**। अत्र बलवदनिष्टाननुबन्धित्वमप्यन्तर्भावनीयम्। तेन कृतिसाध्यत्वेन तृप्तिरूपेष्टसाधनत्वेन चावगते विषसंपृक्ते भोजनादौ न प्रवृत्त्यापत्तिः। विशिष्टज्ञा-

## भास्करोदयाख्यव्याख्या.

तत्तदभावव्याप्यवत्ताज्ञानानामित्यर्थः। **अयमिति**। दयायागादेः पक्षनिर्देशः। इष्टसाधनत्वमात्रस्य हेतुत्वे आत्मसाक्षात्कारे मोक्षे इष्टसाधनत्वसत्त्वात्कृतिसाध्यत्वापत्तिरतः सत्यन्तं बोध्यम्। **शुचिजीवित्वमिति**। शुचिर्भूत्वाऽऽत्मवत्त्वमित्यर्थः। अहमेतत्कालिकशुचिमान् इति ज्ञानवत एव मत्कृतिसाध्यताज्ञानविषयत्वेन संध्यावन्दनादौ प्रवृत्तेः शिष्टानां दृष्टत्वादिति भावः। **निमित्तज्ञानाधीनस्येति**। कृतिसाध्यताज्ञानस्येत्यनेनान्वयः। **कृतिसाध्यत्वज्ञानस्येति**। संध्यावन्दनादिनिष्ठस्येति बोध्यम्। **कामनादिरिति**। आदिना ज्ञानमात्रसंग्रहः। **तद्वत्तायाः**। कामनादिमत्तायाः। विषयतासंबन्धेन कामना यस्मिन्स कामनावान् तस्य भाव इत्यर्थकतया तत्संबन्धबोधात्स च स्वविषयेत्यादिरूप इत्याह—**स्वविषयसाधनत्वादिरूपस्येति**। कामनाविषयस्वर्गसाधनत्वादिरूपस्येत्यर्थः। **तत्संबन्धस्येति**। स्वर्गसंबन्धस्येत्यर्थः। **तज्जन्यत्वस्येत्यर्थ इति**। षष्ठीतत्पुरुष इति भावः। **जन्यत्वादिघटितत्वादिति**। जन्यत्वविशिष्टज्ञानत्वादिघटितत्वादित्यर्थः। **विषसंपृक्तभोजनादाविति**। आदिना पानपरिग्रहः। मुमुक्षोर्बलवदनिष्टाननुबन्धीष्टसाधनत्वस्यैव विषभक्षणादौ सत्त्वात्प्रवृत्त्युपपत्तिः।

र्थोद्वारा प्रयत्नजनकत्वात् ॥ नच नित्ये इष्टसाधनत्वाभावादप्रवृत्तिप्रसङ्गः । तत्रापि प्रत्यवायपरिहारस्य पापक्षयस्य च फलत्वकल्पनात् ॥ तस्मात्कृतिसाध्येष्टसाधनत्वमेव लिङाद्यर्थः ॥ ननु 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र लिङा स्वर्गसाधनकार्यं प्रतीयते यागस्याशुतरविनाशिनः कालान्तरभाविस्वर्गसाधनत्वायोगात् तद्योग्यं स्थायिकार्यमपूर्वमेव लिङाद्यर्थः ॥ कार्यं, कृतिसाध्यम् । कृतेः सविषयत्वाद्विषयाकाङ्क्षायां यागो विषयत्वेनान्वेति, 'कस्य कार्यम्' इति नियोज्याका-

---

## नीलकण्ठी.

न्त्वावच्छिन्नस्य कारणत्वकथनं तु प्राचां मतेन । नव्यमते कृतिसाध्यत्वादिज्ञानानां पृथगेव दण्डचक्रादिन्यायेन कारणत्वात् । **प्रयत्नेति** । प्रवृत्तीत्यर्थः । **प्रत्यवायेति** । प्रत्यवायस्य परिहारः प्रागभावः तस्य च दुःखजनकाभावतया तन्नाशस्यैवेष्टत्वे संवन्धरूपफलत्वमिति भावः । न च कथं तत्प्रागभावस्य फलत्वं तस्याजन्यत्वादिति वाच्यम् । यत्सत्त्वे यत्सत्त्वमिति व्यवहारलभ्यस्य स्वरूपसंवन्धरूपस्य संध्यावन्दनप्रयोज्यत्वस्य तत्र सत्त्वेन फलत्वाक्षतेरित्यवधेयम् । अथ लिङादेः कार्ये एव शक्तिरिति गुरुमतमाशङ्कते—**नन्विति** । इच्छाविशेषरूपस्य यागस्याशुतरविनाशिनः स्वर्गसाधनत्वेन भानं न संभवति अयोग्यत्वादित्यपूर्वरूप एव कार्ये शक्तिरङ्गीकार्येत्याह—**यागस्येति** । **आशुतरविनाशिनः** तृतीयक्षणवृत्तिध्वंसप्रतियोगिनः । **स्थायि** फलपर्यन्तस्थायि । अन्वयप्रकारं दर्शयति—**कार्यं कृतिसाध्यमिति** । यागे कृतिसाध्यत्वं साक्षात्, अपूर्वे तु यागद्वारा इति वोद्धव्यम् ।

## भास्करोदयाख्यव्याख्या.

क्वचित्कार्ये उत्कटरागेणेष्टसाधनत्वमात्रमादाय वलवदनिष्टानुवन्धित्वेऽपि प्रवृत्तिर्वाच्या । अत एव युधि वीराणां, परयोषिति जाराणां, च प्रवृत्तिः । श्रूयते च, 'भवत्कृते खञ्जनमञ्जुलाक्षि शिरो मदीयं यदि याति यातु । नीतानि नाशं जनकात्मजायै दशाननेनापि दशाननानि' इति । **प्राचां मतेनेति** । प्राचां मताभिप्रायेणेत्यर्थः । **कृतिसाध्यत्वादिज्ञानानामिति** । कृतिसाध्यत्वज्ञानमिष्टसाधनत्वज्ञानं वलवदनिष्टाननुवन्धित्वज्ञानमेषामित्यर्थः । **प्रवृत्तिरित्यर्थ इति** । प्रयत्नस्य केवलेच्छाजन्यत्वमात्रेण मूलन्यूनतापरिहारायैवंविधार्थकरणमिति वोध्यम् । **तस्यचेति** । प्रत्यवायप्रागभावस्य चेत्यर्थः । **दुःखजनकाभावतयेति** । प्रत्यवायोत्पत्तेर्दुःखजनकतया तत्प्रागभावस्य दुःखाभावजनकत्वमित्यभिप्रायः । **तन्नाशस्येति** । प्रत्यवायनाशस्येत्यर्थः । **यत्सत्त्वे यत्सत्त्वमिति** । सन्ध्यावन्दनसत्त्वे प्रत्यवायप्रागभावसत्त्वमिति वोध्यम् । **तत्रेति** । प्रत्यवायप्रागभावे इत्यर्थः । **कार्य एव शक्तिरिति** । अपूर्वरूपकार्ये एव शक्तिरित्यर्थः । **इच्छाविशेषरूपस्येति** । यागस्येति शेषः । **अयोग्यत्वादि** । कारणस्य कार्याव्यवहितप्राक्क्षणवृत्तित्वनियमात्तदभावात्तदभाव इति भावः । **अपूर्वरूपकार्य एवेति** । व्यापाररूप इत्यादिः । **फलपर्यन्तं स्थायीति** । स्वर्गोत्पत्तिफलपर्यन्तं

ङ्गायां स्वर्गकामपदं नियोज्यपरतयान्वेति । कार्यबोद्धा नियोज्यः । तेन 'ज्योतिष्टोमनामकयागविषयं स्वर्गकामस्य कार्यम्' इति वाक्यार्थः संपद्यते ।

## नीलकण्ठी.

**कार्यबोद्धेति** । इदं मत्कृतिसाध्यमिति ज्ञानवानित्यर्थः । विध्यर्थमुख्यविशेष्यकं शाब्दबोधं दर्शयति—**तेनेति** । स्वर्गकामस्य लिङर्थे कार्ये, तदेकदेशे च यागस्यान्वयेनेत्यर्थः । न्यायमते तु तत्र 'कृतिसाध्यबलवदनिष्टाजनकेष्टसाधनयागानुकूलकृतिमान्स्वर्गकामः' इति वाक्यार्थबोधः । ननु अपूर्वस्य पूर्वमनुपस्थितत्वात् कथं तत्र शक्तिग्रह इति चेत् । अत्र प्रवदन्त्यभिज्ञाः । तन्मते तद्धर्मावच्छिन्नविषयकशाब्दबोधं प्रति तद्धर्मावच्छिन्नविषयकशक्तिग्रहस्य तादृशोपस्थितेश्च हेतुता, न तु समानविषयकत्वेन हेतुहेतुमद्भावः । एवंच कार्यत्वावच्छिन्ने यत्र कुत्रचित् शक्तिग्रहः । योग्यताबलाच्चापूर्वरूपकार्यस्य शाब्दबोधे भानं नहि यागविषयकमन्यत्कार्यं संभव-

## भास्करोदयाख्यव्याख्या.

स्थितिमदित्यर्थः । नियोज्यशब्दार्थमाह—**इदमित्यादिना** । **तदेकदेश इति** । स्वर्गकामैकदेशे स्वर्ग इत्यर्थः । **वाक्यार्थबोध इति** । प्रथमान्तमुख्यविशेष्यकवाक्यार्थबोध इत्यर्थः । **पूर्वमनुपस्थितत्वादिति** । शाब्दबोधात्पूर्वमुपस्थितिविषयत्वाभावादित्यर्थः । **तन्मत इति** । अपूर्वस्य शाब्दबोधे भानाङ्गीकर्तृमीमांसकमत इत्यर्थः । **तद्धर्मावच्छिन्नविषयकशाब्दबोधं प्रतीति** । कार्यत्वरूपधर्मावच्छिन्नकार्यविषयकशाब्दबुद्धित्वावच्छिन्नं प्रतीत्यर्थः । **तादृशोपस्थितेश्चेति** । तद्धर्मावच्छिन्नोपस्थितेश्चेत्यर्थः । **न तु समानविषयकत्वेनेति** । यद्धर्मावच्छिन्नत्वेन यद्रूपविषयकशाब्दबोधस्तत्प्रति तद्धर्मावच्छिन्नत्वेन तद्रूपावच्छिन्नशक्तिग्रहोपस्थित्योर्न हेतुहेतुमद्भाव इत्यर्थः । फलितमाह—**एवंचेति** । **यत्र कुत्रचिदिति** । यागविषये शिष्टप्रतिपत्तिरूपकार्ये इत्यर्थः । यत्तु घटादिरूपे कार्ये इति । तदसत् । प्रत्यासत्त्या यागविषयकार्य एवेत्यर्थसामञ्जस्यात् । **शक्तिग्रह इति** । ईदृशार्थस्यैवोपस्थितिरित्यप्यूह्यम् । **योग्यताबलाच्चेत्यादि** । फलपर्यन्तावस्थायिनोऽपूर्वस्यैव यागविषयकार्यस्य शाब्दविषयत्वमितरस्य यागविषयत्वेऽपि स्वर्गोत्पादकत्वाभावाच्च तदिति समुदिततात्पर्यार्थः । ज्योतिष्टोमेनेत्यादिवाक्यघटकलिङोऽपूर्वबोधकत्वं स्वर्गरूपफलश्रुतेस्तदुत्पत्त्यन्यथानुपपत्त्या युक्तं यावज्जीवमग्निहोत्रं जुहुयादिति वाक्यघटकलिङः फलाश्रुतेरहरहरित्यादिवदस्याप्याधानबोधकस्य नित्यत्वादयुक्तं तद्बोधकत्वमित्यर्थकत्वेनाशङ्कते—**नन्वित्यादिना** । वस्तुतस्तु ज्योतिष्टोमस्यापि नित्यत्वमेव अहरहरितिवद्वसन्ते वसन्ते ज्योतिषा यजेतेति वीप्सावचनात् । एवं च नित्यत्वं न दुरितक्षयान्याफलकत्वं किन्त्वकरणप्रत्यवायवत्वं । तथाच श्रुतिः—'आतृतीयात्सोमं न पिबतीन्द्राग्नी एव स्वेन भागधेयेनोपधावती'त्यकरणप्रायश्चित्तोक्तेः । आतृतीयादित्युक्त्या द्वितीयपुरुषस्य तदकरणेऽपि न प्रत्यवायभाक्त्वं, पूर्वेण कृतेन कृतत्वात् । इह नित्येति विशेषोपादानं तु स्वर्गरूपकाम्यफलाफलकत्वमात्रेण यथाकथंचिदुक्तमिति मीमांसया

वैदिकलिङ्त्वात् 'यावज्जीवमग्निहोत्रं जुहुयात्' इति नित्यवाक्येऽप्यपूर्वमेव वाच्यं कल्प्यते। 'आरोग्यकामो भेषजपानं कुर्यात्' इत्यादि लौकिकलिङः क्रियाकार्ये लक्षणा इति चेत् ॥ न ॥ यागस्याप्ययोग्यतानिश्चयाभावेन साधनतया प्रतीत्यनन्तरं निर्वाहार्थम् अवान्तरव्यापारतयाऽपूर्वकल्पनात् ॥ कीर्तनादिना नाशश्रुतेर्न यागध्वंसो व्यापारः। लोकव्युत्पत्तिबलात् क्रियायामेव कृतिसाध्येष्टसाधनत्वं

## नीलकण्ठी.

तीति। ननु नित्ये फलाभावात् कथं तत्रापूर्वबोधकतेत्यत आह—**यावज्जीवमिति। अपूर्वमेवेति।** कार्यत्वेनेत्यादि। पण्डापूर्वमित्यर्थः। लौकिकस्थलेऽपूर्वभानासंभवादाह—**आरोग्येति। क्रियाकार्य इति।** धात्वर्थनिष्ठकार्यत्व इत्यर्थः। लौकिकालौकिकसाधारण्येन कार्यत्वादावेव लिङादेः शक्तिरङ्गीकार्या इत्याशयेन समाधत्ते—**यागस्येति।** अयोग्यत्वात् यागस्य स्वर्गसाधनत्वेन भानं न संभवतीत्युक्तदोषं निराचष्टे—**अयोग्यतेति।** अयोग्यतासंशयसत्त्वेपि तस्याविघटकत्वात् शाब्दबोधो भवत्येवेति भावः। वाक्यादिष्टसाधनत्वे यागेऽवगते तस्याशुतरविनाशिनो व्यापारं विना फलजनकत्वासंभवात् तन्निर्वाहाय अपूर्वं कल्प्यते इत्याह—**तन्निर्वाहार्थमिति।** ननु यागध्वंसस्यैव व्यापारत्वमस्तु किमपूर्वकल्पनेन इत्यत आह—**कीर्तनादिनेति।** आदिना 'कर्मनाशाजलस्पर्शात् करतोयाविलङ्घनात्। गण्डकीबाहुतरणात् धर्मः क्षरति कीर्तनात्' इत्यत्रोक्तकर्मनाशाजलस्पर्शादिपरिग्रहः। ध्वंसस्य व्यापारत्वे स्वर्गधारापत्तिरित्यपि दूषणं विभावनीयम्। **लोकव्युत्पत्तीति।** लोकव्यवहारेत्यर्थः। स च यो यत्र प्रवर्तते स कृतिसाध्य-

## भास्करोदयाख्यव्याख्या.

अधिकजिज्ञासुभिर्मीमांसा विधेयेत्यलम्। **पण्डापूर्वमित्यर्थ इति।** पापनाशजनकमपूर्वमित्यर्थः। **धात्वर्थनिष्ठकार्यत्व इत्यर्थ मिति।** प्रकृतधात्वर्थनिष्ठं यत्कृतिसाध्यारोग्यरूपेष्टसाधनत्वरूपकार्यत्वेनापूर्वरूपकार्यनिष्ठं यत्कृतिसाध्येष्टसाधनत्वरूपकार्यत्वमित्यर्थः। **कार्यत्व इति।** धात्वर्थनिष्ठकार्यत्व इत्यर्थः। **आदावेवेति।** आदिना संख्यापरिग्रहः। **लिङादेरिति।** आदिना लोडादिपरिग्रहः। **संशयत्वेऽपीति।** अपिना अयोग्यतानिश्चयसमुच्चयः। **अविघटकत्वादिति।** स्वर्गसाधनत्वाविघटकत्वादित्यर्थः। **बोधो भवत्येवेति।** तत्साधनत्वेन बोधो भवत्येवेत्यर्थः। **यागध्वंसस्यैव व्यापारत्वमस्त्विति।** प्रतियोगिसत्त्वविधया यागजन्यत्वे सति यागजन्यस्वर्गजनकत्वं, यागध्वंसोत्तरमेव स्वर्गोत्पत्तेर्ध्वंसस्य तत्त्वमावेदितव्यम्। **कीर्तनादिनेतीति।** तथाच ध्वंसो न यागजन्यः कीर्तनादिजन्यत्वाद्व्यापारत्वमेव ध्वंसे न सेत्स्यतीति भावः। **क्षरति कीर्तनादिति।** भारते अनुष्ठितात्यन्तानेकपुण्यवान् ययातिर्नाम राजा प्रेत्य दिव्यशरीरं प्राप्य पुण्यवशाद्देवराजार्धासने उपविष्टस्तदा देवराजेन बहुमानपुरस्सरं पूर्वाचरितं पृष्टस्तदा सर्वं निजगाद। तदैव भुवि पातयामासुस्तं देवाः धर्मक्षतेरिति प्रसिद्धमिति बोध्यम्। **ध्वंसस्य व्यापारत्वे इति।** उक्तरीत्या यागजन्यत्वादिकमादाय तत्त्वोपपादने इत्यर्थः। **स्वर्गधारापत्तिरिति।** तत्तद्यागध्वंसधाराजन्यत्वेन स्वर्गधारापत्तिरिति

(१) "पडिनाशने" (चु. प.) इत्यस्मादच्कर्त्तरि ॥

लिङा बोध्यत इति लिङ्त्वेन विध्यर्थकत्वम् । आख्यातत्वेन यत्नार्थकत्वम् । पचति पाकं करोतीति विवरणदर्शनात्, किं करोतीति प्रश्ने पचतीत्युत्तराच्चाख्यातस्य प्रयत्नार्थकत्वनिश्चयात् ॥

रथो गच्छतीत्यादौ अनुकूलव्यापारे लक्षणा, देवदत्तः पचति, देवदत्तेन

---

## नीलकण्ठी.

त्वेनेष्टसाधनत्वेन च तज्जानातीत्येवंरूपः । केचित्तु यदिच्छया यत्र प्रवृत्तिः तत् तत्साधनमितिरूपो लोकव्यवहार इत्याहुः । नव्याः पुनः लोके पचेतेत्यादिलिङादिसमभिव्याहारस्थले क्रियायामेव कृतिसाध्यत्वविशिष्टेष्टसाधनत्वबोध इति नियमबलादित्यर्थः । सर्वत्रेति शेष इति व्याचख्युः । **आख्यातत्वेनेति** । तच्च संकेतसंबन्धेनाख्यातपदवत्त्वं, तिप्त्वादिकमेव शक्यतावच्छेदकमिति तु नव्याः । **यत्नार्थकत्वं** कृतित्वावच्छिन्नवाचकत्वम् । **किं करोतीति** । कृतित्वावच्छिन्ने जिज्ञासितसंबन्धबोधकं हि तत्प्रश्नवाक्यम् । उत्तरवाक्यस्य कृतित्वावच्छिन्ने पाकसंबन्धबोधकत्वे एव तन्निवर्तकत्वं नान्यथेति भावः । ननु 'रथो गच्छति' इत्यादौ आख्यातस्य कृतिबोधकत्वासंभवात् तदनुरोधेन व्यापार एव शक्तिर्वक्तव्येत्यत आह—**रथो गच्छतीत्यादाविति** । व्यापारे अनुकूलत्वोत्कीर्तनं तु तेन संबन्धेन व्यापारे गमनस्यान्वयलाभाय । नव्याः पुनः गच्छतीत्याख्यातस्य जानातीत्यादाविव आश्रयत्वे निरूढलक्षणा । न चाश्रयतासंबन्धेनैव प्रथमान्तार्थे गमनादेरन्वयेन निर्वाहे आश्रयत्वे निरूढलक्षणाकल्पनं निरर्थकमिति वाच्यम् । नामार्थयोरिव धात्वर्थनामार्थयोरभेदातिरिक्तसंबन्धेन अन्वयस्याव्युत्पन्नत्वात् तत्र

## भास्करोदयाख्यव्याख्या.

भावः । **यो यत्र प्रवर्तत इति** । अनेनानिष्टसाधने प्रवर्तमानोऽपि इष्टसाधनत्वेनैव तज्जानातीति फलितमिति बोध्यम् । **यदृच्छयेति** । स्वभावेनेत्यर्थः । **क्रियायामेवेति** । पचिक्रियायामेवेत्यर्थः । **तच्चेति** । आख्यातत्वं चेत्यर्थः । **संकेतसंबन्धेनेत्यादि** । पाणिनीयेत्यादिः । **तिप्त्वादिकमेवेति** । तत्तत्तिबादिभिरेव प्रयत्नबोधादिति भावः । **जिज्ञासितसंबन्धबोधकमिति** । कृतिः कीदृशक्रियासंबन्धिनीति बोधकमित्यर्थः । **तन्निवर्तकत्वमिति** । प्रश्ननिवर्तकत्वमित्यर्थः । **नान्यथेति** । अन्यथा कर्णे पृष्टे कटिं चालयतीतिन्यायेन निग्रहस्थानत्वमुत्तरकर्तुरापद्येतेति भावः । **कृतिबोधकत्वासंभवादिति** । कृतेश्चेतनधर्मत्वादसंभव इति भावः । **गमनस्यान्वयलाभायेति** । एतेन गमनानुकूलव्यापारवान् रथ इति बोधः । गमनं च भ्रमिः । तदनुकूलव्यापारश्चावान्तरो रथावयवनिष्ठो बोध्यः । **नव्या इति** । नव्यशिरोमणय इत्यर्थः । **गच्छतीत्यत्रेति** । रथो गच्छतीत्यत्रेत्यर्थः । **जानात्यादाविवेति** । आदिना इच्छति संग्रहः । **आश्रयत्वे इति** । ज्ञानेच्छानन्तरमेव कृतेरुत्पत्तेर्ज्ञानेच्छयोरनुकूलतासंबन्धेन कृतावन्वयस्य बाधितत्वादिति भावः । **तत्रेत्यादि** । तथाचेत्यादिः अत एव तण्डुलं पचतीत्यादौ

पच्यते तण्डुलः, इत्यादौ कर्तृकर्मणोर्नाख्यातार्थत्वम्। किं तु तद्गतैकत्वादीनामेव। तयोराक्षेपादेव लाभः ॥

प्रजयतीत्यादौ धातोरेव प्रकर्षे शक्तिः ॥ उपसर्गाणां द्योतकत्वमेव न तु तत्र शक्तिरस्ति।

## नीलकण्ठी.

तथान्वयासंभवात्। स्तोकं पचतीत्यादौ स्तोकादेर्धात्वर्थे पाकेऽन्वयादभेदातिरिक्तेति ध्येयम्। वैयाकरणमतं निराचष्टे—**देवदत्त इति**। **नाख्यातार्थत्वमिति**। आख्यातस्य कर्त्रादौ शक्तिस्वीकारेऽनन्तकृत्यादेः शक्यतावच्छेदकत्वमङ्गीकर्तव्यम्। कृत्यादौ शक्तिस्वीकारे तु कृतित्वादिजातेः शक्यतावच्छेदकत्वालाघवमिति भावः। **तद्गतैकत्वादीनामेवेति**। आख्यातार्थत्वमिति पूर्वेणान्वयः। आदिना कृत्यादिपरिग्रहः। ननु तर्हि कर्तृकर्मणोः कथं लाभ इत्यत आह—**तयोरिति**। **आक्षेपादेवेति**। परमतेन। स्वमते तु प्रथमान्तपदेनैव तल्लाभात्। 'देवदत्तः तण्डुलं पचति' इत्यत्र 'तण्डुलकर्मकपाकानुकूलकृतिमान् देवदत्तः' इत्यन्वयबोधः। 'देवदत्तेन पच्यते तण्डुलः इत्यत्र तु देवदत्तसमवेतकृतिजन्यपाककर्मीभूतस्तण्डुलः इति शाब्दबोधः। नच 'देवदत्तः पचति' इत्यत्र तृतीया, 'तण्डुलः पच्यते' इत्यत्र च द्वितीया स्यात्, तत्र कर्तृकर्मणोराख्यातेनानभिधानादिति वाच्यम्। अनभिहिते कर्तृत्वे तृतीयायाः, तादृशे च कर्मत्वे द्वितीयाया विधानेनादोषादिति ध्येयम्।

उपसर्गाणां वाचकत्वमतं निरस्यति—**प्रजयतीत्यादाविति**। ननु धातुनैव

## भास्करोदयाख्यव्याख्या.

तण्डुलरूपनामार्थस्य कर्मतासंबन्धेन पाकेऽन्वयासंभवात्कर्मणि द्वितीयाविभक्तेः शक्तिरङ्गीकृतेति ध्येयम्। **स्तोकं पचतीत्यादाविति**। आदिना सुष्ठु पचतीत्यादिसंग्रहः। स्तोकशब्दोऽल्पपर्यायः। तथाच ओदनकर्मकस्तोकाभिन्नपाकानुकूलकृतिमांश्चैत्र इति बोधः। **कर्त्रादाविति**। आदिना कर्मसंग्रहः। **अनन्तकृत्यादेरिति**। तत्तदात्मसमवेतकृतीनां तत्तद्व्यापारजन्यफलानां चानन्त्याच्छक्यतावच्छेदकानन्त्यप्रयुक्तं गौरवं वैयाकरणमते दुर्वारमिति भावः। **कृत्यादौ शक्तिस्वीकारे त्विति**। कर्तृकर्मपदयोर्लक्षणया कर्तृत्वकर्मत्वपरत्वेन कर्तृत्वं कृतिः कर्मत्वं फलं तयोः 'लः कर्मणि च' इति शास्त्रेण भिन्नशक्तिस्वीकारे त्वित्यर्थः। **कृतित्वादिजातेरिति**। जातेरेकत्वान्न शक्यतावच्छेदकानन्त्यप्रयुक्तगौरवमस्मन्मते इति भावः। **परमतेनेति**। मीमांसकमतेनेत्यर्थः। **स्वमतेत्विति**। नैयायिकमते त्वित्यर्थः। कर्तृकर्मोभयप्रत्ययसमभिव्याहारे प्रथमान्तमुख्यविशेष्यक एव बोधोऽभिमतो नैयायिकानामिति बोधयितुं स्पष्टप्रतिपत्तये तदुभयबोधं दर्शयति—**देवदत्तेत्यादिना**। **अनभिधानादिति**। 'अनभिहिते' इत्यधिकृत्याख्यातेन कर्तृकर्मणोरनभिधाने 'कर्तृकरणयोस्तृतीया' 'कर्मणि द्वितीयेति' तृतीयाद्वितीययोर्विधानादित्यर्थः। **अदोषादिति**। कर्तृत्वकर्मत्वयोरभिधानादिति भावः। **वाचकत्वमतं निरस्यतीति**। प्रादीनां वाचकत्वमिति केषांचिन्मतं निषेधतीत्यर्थः।

पदार्थज्ञानस्य परमप्रयोजनं मोक्षः । तथाहि—'आत्मा वारे द्रष्टव्यः श्रोतव्यो

## नीलकण्ठी.

प्रकर्षादेर्वोधे प्रशब्दादेर्वैयर्थ्यमत आह—**उपसर्गाणामिति** । द्योतकत्वं तात्पर्यग्राहकत्वम् । एतेन 'इतरनिपातानां वाचकत्वम्' इति सूचितम् । तथाहि—एवकारस्यायोगव्यवच्छेदोर्थः 'शङ्खः पाण्डुर एव' इत्यादौ, अन्ययोगव्यवच्छेदश्च 'पार्थ एव धनुर्धरः' इत्यादौ, इत्यादिकं वहुतरमूहनीयम् ।

प्रेक्षावत्प्रवृत्तये सकलकामनाविषयमुक्तिप्रयोजनकतां दर्शयति—**पदार्थज्ञानस्येति** । पदार्थतत्त्वज्ञानस्येत्यर्थः । अन्येषामवान्तरप्रयोजनानामपि सद्भावादाह—**परमेति** । श्रुतेरयमर्थः —'अरे मुमुक्षुणाऽऽत्मा द्रष्टव्यः' मुमुक्षोः आत्मदर्शनम् इष्टसाधनमिति यावत् । आत्मदर्शनोपायं दर्शयति—**श्रोतव्य इत्यादि** ।

## भास्करोदयाख्यव्याख्या.

वैयाकरणानां तु द्योतकत्वात् । इतरनिपातानां वाचकत्वमिति । निर्णीतं चेदमस्माभिरादावेवाखिलमाकलनीयम् । **वहुतरमूहनीयमिति** । एवकारो हि त्रिविधः—विशेषणसंगतो विशेष्यसंगत क्रियासंगतश्चेति । विशेषणसंगतः शङ्खः पाण्डुर एवेत्यादौ । विशेष्यसंगतः पार्थ एव धनुर्धर इत्यादौ । क्रियासंगतश्च नीलं सरोजं भवत्येवेत्यादौ । विशेषणसङ्गतैवकारस्यायोगव्यवच्छेदोऽर्थः । विशेष्यसङ्गतैवकारस्यान्ययोगव्यवच्छेदोऽर्थः । क्रियासंगतैवकारस्यात्यन्तायोगव्यवच्छेदोऽर्थः । तथा चेत्थं वोधः । पाण्डुरत्वायोगव्यवच्छेदवान् शङ्ख इति । पार्थान्ययोगव्यवच्छेदवान्धनुर्धर इति । अन्वयितावच्छेदकं सरोजत्वं सामानाधिकरण्येन नीलभवनकर्तृत्वात्यन्तायोगव्यवच्छेदवदित्यादिकमधिकतरं तर्कितव्यमित्यर्थः । बुद्धिकुशलैरिति शेषः । 'नान्यः पन्था विद्यते अयनाय'; 'ज्ञानादेव तु कैवल्य' मित्यादिभिर्ज्ञानस्यैव सर्वपरमोपादेयमोक्षसाधनत्वश्रुतेस्तत्साधकत्वे कथिते प्रेक्षावतां प्रवृत्तिरनायाससाध्येत्यालोच्याभिहितं पदार्थेत्यादिमूले । तदवतारयति—**प्रेक्षावदित्यादिना** । **सकलकामनाविषयेति** । सकलानां विवेकिनां संसारोद्दिधीर्षया इच्छाविषय इत्यर्थः । **मुक्तिप्रयोजनकतामिति** । मुक्तिः प्रयोजनं यस्य स मुक्तिप्रयोजनकः तस्य भावः मुक्तिप्रयोजनकता तां परंपरया आत्मा इतरभिन्न इत्यात्मसाक्षात्कारे इतरज्ञानसंपादनेन मुक्तिप्रयोजनप्रयोजकतामित्यर्थः । **पदार्थतत्त्वज्ञानस्येत्यर्थ इति** । पदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम इति गोतमीयादिति भावः । **परमेतीति** । मुख्यमित्यर्थः । तदननुसंधानवतां मध्यमाधिकारिणां शास्त्रव्युत्पत्तिप्रयोजनमात्रफलद्वारा सभायां वादिविजयार्थप्राप्तिफलस्य गौणस्य शास्त्रप्रयोजनस्य लोकप्रसिद्धत्वतात्पर्येणोत्तमाधिकारिणामपि प्रवृत्तये तदुक्तमिति भावः । तदेवोक्तम्—अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥ १ ॥ आयुर्वेदो धनुर्वेदो गान्धर्वं चेति ते त्रयः । अर्थशास्त्रं च विज्ञेयं विद्या ह्यष्टादशैव च ॥ २ ॥ विद्यामान्वीक्षिकीमाह मुनिः श्रीगोतमो महान् । उद्दिधीर्षुर्जगत्पङ्कात्संसाराद्दुःखरूपिणः ॥ ३ ॥ अभ्यर्हिततमामेनां परमकारुणिकश्च सः । प्राकरोदप-

## भास्करोदयाख्यव्याख्या.

वर्गस्य हेतोर्ज्ञानैकसिद्धये ॥ ४ ॥ दृष्टादृष्टे फले दृष्टे दृष्टं माध्यमिकैकभाक् । अदृष्टमधिकारित्वं भजतीति व्यवस्थितिः ॥ ५ ॥ अस्यायमाशयः । परमप्रयोजनीभूतनिःश्रेयसरूपफलप्रयोजकत्वेनान्वीक्षिक्याः अभ्यर्हिततमत्वमन्यासां त्वधिकपरंपरयेत्यत एव तत्कर्तुर्दुःखपङ्कसंसारादुद्दिधीर्षुत्वमात्यन्तिकदुःखनिवृत्तिफलसाधकोपदेशनेन परमकारुणिकत्वं च, दृष्टमात्रफलोपदेशकत्वे प्रकृष्टफलोद्देशेन प्रवर्तमानानां विवेकिनां प्रवृत्तिर्न स्यादित्यदृष्टापवर्गफलोपदेशकत्वं, परंचोक्तरूपं, दृष्टमदृष्टमधिकारित्वमधिकारिविशेषधर्मं भजत्यपेक्षत इति । तथाहि—अत्र चाधिकारिणो विवेकिनो येऽस्मिन्संसारापारकान्तारे कियन्ति दुःखदुर्दिनानि कियती वा सुखद्योतिका इति कुपितफणिफणामण्डलच्छायाप्रतिममिदमिति मन्यमानाः सुखमपहातुमिच्छन्ति ते । अपवर्गश्चैहैकविंशतिदुःखध्वंसः । न तु तत्प्रागभावः । तस्यानादित्वेन तत्त्वज्ञानसाध्यत्वासंभवादत एव न तदत्यन्ताभावोऽपि तस्य नित्यत्वात् । तत्सत्त्वे मानं 'न स पुनरावर्तते' 'आनन्दं ब्रह्मणो विद्वान्' इत्यादिश्रुतिजातम् । न चोक्तरूपापवर्गस्य सुखाभावनियतत्वेन सुखविरोधितया न पुरुषार्थत्वसंभव इति वाच्यम् । सुखाभावनियतत्वेऽप्यात्यन्तिकविशेषितेन दुःखाभावत्वेन प्रवृत्त्युपदेशोपपत्तेः । नच दुःखाभावस्य सुखानियतत्वेन मुनेस्तत्प्रणयनं विषं भुंक्ष्वेतिवद्वैय्यर्थ्यं स्यादिति वाच्यम् । परमकारुणिकस्य गोतममहामुनेस्तथाविधप्रवर्तकप्रणयनासंभवात् । दुःखोपश्लिष्ट एव सुखे दुरितनिचयमलमलिनान्तःकरणवतां रागिणां प्रवृत्तेस्तदभावे द्वेषोदयो देवैरपि दुष्परिहार्य एवात एव 'शिरो मदीयं यदि याति यातु' इत्यतिशयानुरागवशात्परकामिनीघनजघनसंगुप्तापानोद्गारधूपितद्विधाभिन्नस्रवन्मूत्रक्लिन्ने मांसखण्डे मक्षिका इव लुब्धमनस्कानामपवर्गवार्ता कर्णकठोरायमाणैवेति कस्तत्प्राप्तौ यत्न इति विद्वांसो विदांकुर्वन्तु । ननु दुःखाभावस्य सुखानियतत्वोक्तिरनुपपन्ना दुःखाभावस्य सुख एव तात्पर्यावसानाद्यथा कश्चन वाहकः भारमुद्वह्य परिश्रान्तः क्वचिद्देशे भारं निक्षिप्य सुखी संवृत्तोऽहमित्याह यत इति चेन्न । सुखस्यैकविंशतिदुःखेषु परिगणनात् । सुखशब्दस्य दुःखनियतसुखे वैषयिके एव शक्तेः । दुःखध्वंसे चात्यन्तिकत्व विशेषणात् । तत्त्वं च स्वसमानाधिकरणदुःखाऽसमानकालीनत्वम् । अनेन स्वर्गेऽपि पातभयानुविद्धतया क्षयितया च न विवेकिनामुत्कटोरागः वसिष्ठादीनां तु परंपरया लोकानां सन्मार्गप्रवृत्तिबोधनायैवेत्यादिस्पष्टमस्म दीयराधामाधवविलासाख्यप्रबन्धे । अत्र च तत्त्वज्ञानाददृष्टनाशोऽदृष्टनाशात्सुखदुःखाद्येकविंशतिदुःखध्वंसरूपो मोक्षो, नाविद्यानाशादविद्याकार्यान्तःकरणविशेषवुद्धिनाशः, बुद्धितत्त्वस्यानादित्वेन विनाशानुपपत्तेः । अनादिभूतप्रागभावस्येव नाशाभ्युपगमे योगिनां बुद्धिसत्त्वेऽपि तत्त्वज्ञानेनादृष्टनाशात्सुखदुःखाद्यनुत्पत्तिरूपबाधः । अविद्या न पदार्थान्तरं, मानाभावात् किंत्वदृष्टमेव तत्त्वाज्ञानरूपविद्याविरोधितया अविद्येत्युच्यते इति सिद्धान्तः । एतेनान्तःकरणोपाधेस्तत्त्व-

१ एकविंशतिदुःखमध्ये सुखस्यापि परिगणनात्सुखध्वंसोऽप्यपवर्ग इति ॥

मन्तव्यो निदिध्यासितव्यः' इति श्रुत्या श्रवणादीनां तत्त्वसाक्षात्कारे हेतुत्वबोधनात् । श्रुत्या देहादिविलक्षणात्मज्ञाने सत्यप्यसंभावनानिवृत्तेः युक्त्यनुसंधानरूपमननसाध्यत्वात् । मननोपयोगिपदार्थनिरूपणद्वारा शास्त्रस्यापि मोक्षोप-

## नीलकण्ठी.

तेनाऽऽर्थक्रमेण शाब्दक्रमस्त्यक्तो भवति 'अग्निहोत्रं जुहोति' 'यवागूं पचति' इत्यादिवत् । **असंभावनानिवृत्तेरिति** । अप्रामाण्यज्ञाननिवृत्तेरित्यर्थः । **युक्त्यनुसंधानेति** । अयं भावः । युक्तिभिरनुचिन्तनं मननम् । तच्च आत्मन इतरभिन्नत्वेन अनुमानम् । तच्च भेदप्रतियोगीतरज्ञानसाध्यम् । तदर्थं सकलपदा-

## भास्करोदयाख्यव्याख्या.

ज्ञानानाश्यत्वान्मोक्षदशायां तदुपाधिकजीवात्मभावः सुस्थिर एवेति नैयायिका भेदवादिन इति मन्यन्ते । अत एव 'निरञ्जनः परमं साम्यमुपैतीति' श्रुतिः स्तौति, साम्यं ब्रह्मसाम्यमात्यन्तिकदुःखाभावत्वेनेति । नच देहरूपदुःखसत्त्वात्कथं जीवन्मुक्तिव्यवस्थेति वाच्यम् । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत' इति श्रुतेः । अशरीरमित्यस्य शरीराभिमानवर्जमित्यर्थः । अत्र च 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग' इति सूत्रमेव गमकम् । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुने'ति गीतावचनेऽपि कर्मपदमदृष्टपरमेव । अदृष्टं सदसद्व्यापारजन्यं पुण्यापुण्यरूपमेव । तद्वैचित्र्याज्जगद्वैचित्र्यं, तद्वैचित्र्यमपि सदसत्क्रियावैचित्र्यात्तद्वैचित्र्यं तदन्तःकरणवृत्तिवैचित्र्यात्तद्वैचित्र्यं पूर्वपूर्वसंस्कारवैचित्र्यादित्यनादित्वं संसारस्येत्यनादिभूतसंसारदुःखदहनाय विवेकिभिर्ज्ञानमेवाभ्यस्यमित्याह—**मुमुक्षोरात्मदर्शनमिष्टसाधनमिति** । **तेनेति** । श्रवणादीनामात्मदर्शनोपायत्वेनेत्यर्थः । आत्मश्रवणं च श्रुतिभिरेव साक्षात्कारहेतुः । 'श्रोतव्यः श्रुतिवाक्येभ्य' इत्याद्युक्तेः । पुराणादीनां तच्छ्रवणे आत्मस्वरूपं परोक्षकल्पविषयमेवावतिष्ठते नत्वपरोक्षं, भाषाप्रबन्धादिश्रवणे तु द्विजातीनां निषेध एव । 'न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्द' इत्यपशब्दभाषणस्यैव निन्द्यत्वात् । **इत्यादीति** । आदिना यथा काचिद्गोपी दैवाद्रहसि संगता श्रीकृष्णसंकेतवाक्यमाह—'कुरुष्व रतिपाण्डित्यं सकामां जेतुमर्हसि । इह सख्यः प्रपश्यन्ति निकुञ्जं याहि सत्वर'मित्यादि बोध्यम् । **अप्रामाण्यज्ञाननिवृत्तेरिति** । देहेन्द्रियादिविलक्षणात्मनि श्रुतेः प्रामाण्यग्राहकत्वादिति शेषः । नन्वहं तिष्ठामि गच्छामीत्याद्यहमिति पण्डितपामरसाधारणप्रात्यक्षिकप्रतीतिगोचरसिद्धस्यात्मसाक्षात्कारस्य सिद्धये का श्रवणाद्याकाङ्क्षा हस्तकङ्कणस्यादर्शाकाङ्क्षातुल्यत्वादिति चेन्न । देहेन्द्रियादिषु तद्विषयत्वभ्रान्तस्य भ्रान्तिनिवृत्तये श्रुतेरेवापेक्षणीयत्वात् । नहि श्रवणमात्रेणार्थसिद्धिरित्यत आह—**युक्त्यनुसंधानेतीति** । **तदर्थमिति** । इतरभेदप्रतियोगीतरज्ञानार्थमित्यर्थः । **सकलपदार्थनिरूपणमिति** । द्रव्यादि-

१ अन्ये दार्शनिकाः ।

योगित्वम् । तदनन्तरं श्रुत्योपदिष्टयोगविधिना निदिध्यासने कृते तदनन्तरं देहादिविलक्षणात्मसाक्षात्कारे सति देहादौ अहममिमानरूपमिथ्याज्ञाननाशे सति दोषाभावात् प्रवृत्त्यभावे धर्माधर्मयोरभावाज्जन्माभावे पूर्वधर्माधर्मयोरनुभवेन नाशे चरमदुःखध्वंसरूपो मोक्षो जायते । ज्ञानमेव मोक्षसाधनम् । मिथ्याज्ञाननिवृत्तेर्ज्ञानमात्रसाध्यत्वात् । 'तमेव विदित्वाऽतिमृत्युमेति नान्यः

## नीलकण्ठी.

र्थनिरूपणमिति । मोक्षोपयोगित्वं विशदयति—**तदनन्तरमिति** । मननानन्तरमित्यर्थः । श्रुतस्यार्थस्य नैरन्तर्येण अनुसंधानरूपनिदिध्यासनस्य उपायमाह—**योगविधिनेति** । इन्द्रियाणि विषयेभ्यः प्रत्याहृत्य इन्द्रियेभ्यः मनः प्रत्याहृत्य साक्षात्कर्तव्ये वस्तुनि मनःप्रणिधानं **योगः** । **तदनन्तरं** निदिध्यासनानन्तरम् । **मिथ्याज्ञाननाशे** । वासनासहितमिथ्याज्ञाननाशे । **दोषः** रागादिः । एवकारेण कर्मव्यवच्छेदः । **मिथ्याज्ञानेति** । शुक्त्यादौ रजतभ्रमो विशेषदर्शनेनैव यथा

## भास्करोदयाख्यव्याख्या.

निखिलपदार्थनिरूपणमित्यर्थः । **नैरन्तर्येणेत्यादि** । अत्र च मानं 'आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तये'ति वचनम् । **प्रत्याहृत्येति** । निवर्त्येत्यर्थः । **मनःप्रणिधानमिति** । तदाकारान्तःकरणवृत्त्या भक्तिविशेषकरणमित्यर्थः । तदुक्तं पतञ्जलिना 'ईश्वरप्रणिधानाद्वे'ति । प्रणिधानाद् भक्तिविशेषादभिध्यानादीश्वरस्तमभिध्यायन्तमनुगृह्णाति सगुणं वा निर्गुणं तदा समाधिफलं' चित्तैकाग्र्यमधिगच्छति योगजमिति तदर्थः । योगस्य चित्तवृत्तिनिरोधद्वारा ईश्वरप्रणिधानफलकत्वादित्याद्यधिकं बोध्यमन्यत्र । **मिथ्याज्ञाननाशादिति** । 'ईश्वरानुग्रहादेव पुंसामद्वैतवासने'त्युक्तेस्तादृशप्रणिधानादुत्पन्नेश्वरानुग्रहेण द्वैतरूपप्रातिभासिकमिथ्याज्ञानध्वंसे सतीत्यर्थः । अविद्यायाः द्वे शक्ती—विक्षेपशक्तिः आवरणशक्तिश्च । विपरीतार्थग्राहिका शक्तिराद्या । यथा जगद्गतायाः ब्रह्मसत्तानतिरेकेऽप्यतिरिक्तसत्तात्वेन भासिका । वास्तविकार्थाच्छादनार्थिका शक्तिर्द्वितीया । यथा जगतः ब्रह्मणि कल्पितत्वेन कल्पितस्य कल्पनाधिष्ठानानतिरिक्तत्वेन ब्रह्मस्वरूपत्वेऽपि तदाच्छादनाद्घटादिरूपेण व्यवहारः इत्यावरणशक्तिनाशेन सर्वत्र ब्रह्मबुद्धावपि विक्षेपशक्तेरनिवृत्त्या घटोऽस्ति पटोऽस्ति इत्यादिव्यवहारस्य पामरस्येव तत्त्वज्ञानवतामप्यनुभवसिद्धतया तद्विषयकवासनोदयात्कथं तदुत्तरं रागादिरूपदोषाभावः, रागादिकं प्रति वासनायाः हेतुत्वादित्यालोच्य विक्षेपशक्तिसहितावरणशक्तिनिवृत्तिरेव रागादिनिवृत्तिहेतुद्वारा दुःखनिवृत्तिरूपमोक्षहेतुरित्यभिप्रायेणाह—**वासनासहितमिथ्याज्ञाननाशे इति** । **एवकारेणेत्यादि** । इदं ज्ञानमेव मोक्षसाधनमिति मूलपाठाभिप्रायेण । क्वचित्पुस्तकेषु ज्ञानं मोक्षसाधनमेवेति पाठोऽपि दृश्यते तत्पाठे एवकारस्य मोक्षसाधनपदोत्तरवृत्तित्वान्मोक्षेतरसाधनव्यवच्छेद उचित इति कथं कर्मणो व्यवच्छेद इत्युक्तिः साध्वीति चेदाहुस्तत्त्वविदः । एवकारोऽत्र भिन्नक्रमः । तथाच ज्ञानपदोत्तरमेव संबन्धः । ज्ञानमेव मोक्षसाधनमित्येवं च कर्मव्यवच्छेदोक्त्या व्याख्यानं निर्दुष्टपथिकमेवेति । **विशेषदर्शनेनैवेति** ।

पन्था विद्यतेऽयनाय' इति साधनान्तरनिषेधाच्च ॥ ननु 'तत्प्राप्तिहेतु विज्ञानं कर्म चोक्तं महामुने' इति कर्मणोपि मोक्षसाधनत्वश्रवणात् ज्ञानकर्मणोः समुच्चय इति चेत् ॥ न ॥ 'नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् । ज्ञानं च विमलीकुर्वन् अभ्यासेन च पाचयेत् । अभ्यासात्पक्वविज्ञानः कैवल्यं लभते नरः' ॥ इत्यादिना कर्मणो ज्ञानसाधनत्वप्रतिपादनात्, ज्ञानद्वारैव

## नीलकण्ठी.

निवर्तते तथा प्रकृतेऽपीति भावः । 'कैवल्यं लभते नरः' इत्यादिनेत्यादिना 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इत्यादिश्रुतेः 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' इत्यादिस्मृतेश्च संग्रहः । ज्ञानद्वारैवेति । अत्रायं क्रमः निष्कामनया भगवत्प्रीत्यर्थं कृतैः कर्मभिर्दुरितक्षयरूपात्मशुद्धिर्भवति । ततो विषयेषु वैराग्यम् । ततः श्रवणादौ प्रवृत्तिः । ततः श्रवणादिक्रमेण तत्त्वज्ञानोत्पत्तौ

## भास्करोदयाख्यव्याख्या.

नीलपृष्ठत्वादिरूपविशेषदर्शनज्ञानेनैवेति भावः । प्रकृतेऽपीति । कनककान्तादिविषयेऽपीत्यर्थः । इत्यादिस्मृतेश्चेति । आदिना 'नहि ज्ञानेन सदृशं पवित्र' मित्यादिसंग्रहः । निष्कामनयेति । ऐहिकामुष्मिककामवर्जितयेत्यर्थः । भगवत्प्रीत्यर्थं कृतैरिति । ननु ज्योतिष्टोमादिभिः कर्मभिरस्तु भगवतः प्रीतिर्हविरादिभोगद्वारा, संध्यावन्दनादिभिः का प्रीतिः प्रीत्युत्पादकद्रव्यत्यागाभावादिति चेदत्र वदन्ति । 'संध्यायां गायत्र्याभिमन्त्रिता अप ऊर्ध्वं विक्षिपती'त्यादिश्रुत्या मन्देहारुणीनामकान् राक्षसान् संध्ययोरनुदितं योद्धुकामान्सूर्यं प्रति ब्राह्मणैः गायत्र्या अभिमन्त्र्य अपामूर्ध्वं प्रक्षेपे कृते ता आपः वज्रीभूत्वा तान् द्वीपान्तरे प्रक्षिपन्तीति सिद्धम्, तेन संध्यावन्दनस्य भगवच्छत्रुपराजयसंपादनद्वारा प्रीत्युत्पादकत्वमिति । संसारस्यानादिपरम्परासिद्धस्य मनसाप्यचिन्त्यरचनारूपस्य श्रुतिसिद्धार्थविषयस्य संशयो दोषायैवेति श्रुतिप्रामाण्यमुपगच्छद्भिर्यथार्थबुद्ध्या श्रद्धया च वचनात्प्रवृत्तिर्वचनान्निवृत्तिरिति न्यायेन श्रुतिसिद्ध सर्वमनुष्ठेयं ब्राह्मणैरिति निर्दुष्टः पन्थाः । नन्वेवमपि ममोपात्तदुरितक्षयद्वारेति संकल्पे दुरितक्षयस्य कामनाविषयत्वान्निष्कामनया संध्यावन्दनस्य करणमनुपपन्नमिति चेन्न । प्राधान्येन भगवत्प्रीतेरेवोद्देश्यत्वात् । दुरितक्षयरूपात्मशुद्धिरिति । आत्मशब्देनान्तःकरणं विवक्षितं निःश्वासाभिहतदर्पणस्येव तेजःप्रकाशस्य अन्तःकरणस्य दुरितमलमलिनता तया सदसद्विवेकानुत्पत्तिः । तत्क्षये चूर्णसंमार्जितदर्पणे स्वच्छमुखप्रतिबिम्ब इव सदसद्विवेकः स्वतःसिद्ध एवाविर्भवतीति भावः । तत इति । सदसद्विवेकानन्तरमित्यर्थः । विषयेषु वैराग्यमिति । कनककान्तादिविषयेष्वसत्त्वबुद्ध्या रागाभाव इति भावः । श्रवणादौ प्रवृत्तिरिति । विशेषरूपेण सदर्थनिर्णयार्थमिति भावः । श्रवणादिक्रमेणेति । श्रवणं सद्गुरोः श्रुतिभिरात्मनः शाब्दानुभवः दशमस्त्वमसीतिवदात्मापरोक्षानुभव इति यावत् । ततस्तस्यैव दृढीकरणाय युक्तिभिरनुचिंतनाख्यं मननं ततस्तस्यैव स्थिरीकरणाय नैरन्तर्येणा-

कर्म मोक्षसाधनम्, न साक्षात् तस्मात् पदार्थज्ञानस्य मोक्षः परम... इत्येव रमणीयमिति ॥

कणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।
अन्नंभट्टेन विदुषा रचितस्तर्कसंग्रहः ॥ १ ॥

इति श्रीमदन्नंभट्टोपाध्यायविरचिता तर्कदीपिका समाप्ता ॥

---

## नीलकण्ठी.

पूर्वोक्तमिथ्याज्ञाननाशादिक्रमेण मोक्षनिष्पत्तिः । अधिकमस्मदीयाभिनव— (चिन्ता-) मणिदीधितिव्याख्यायामनुसंधेयं तर्ककर्कशविचारचातुरीधुरीणैरिति ।

कौण्डिन्यगोत्रसंभूतो नीलकण्ठाख्यपण्डितः ।
कृतिमार्पिपदेतस्मै चन्द्रचूडाय मङ्गलम् ॥ १ ॥

इति श्रीमत्पाण्योपनामककौण्डिन्यवंशपयःपारावारराकाचन्द्रायमाणपदवाक्य-प्रमाणपारावारीणश्रीरामभट्टतनूजश्रीनीलकण्ठभट्टविदुषा विरचितः तर्कसंग्रहदीपिकाप्रकाशः समाप्तः ॥ १ ॥

## भास्करोदयाख्यव्याख्या.

नुसंधानरूपं निदिध्यासनमित्येवं क्रमेणेत्यर्थः । **तत्त्वज्ञानोत्पत्ताविति** । अबाधितात्मज्ञानोत्पत्तावित्यर्थः । **पूर्वोक्तमिथ्याज्ञाननाशादिक्रमेणेति** । वासनासहितमिथ्याज्ञाननाशः रागादिरूपदोषनाशस्ततः प्रवृत्तिनाश इति क्रमेणेत्यर्थः । **मोक्षनिष्पत्तिरिति** । दुःखध्वंसरूपमोक्षोत्पत्तिरित्यर्थः । अधिकमिह ग्रन्थगौरवभिया न लिखितम् । अधिकजिज्ञासुभि**रस्मदीया**ऽस्माभिर्निर्मिता याऽभिनवा **मणिदीधितिव्याख्या** मणेर्या दीधितिरूपा व्याख्या तस्यामधिकमनुसन्धेयं न सर्वैः साधारणैर्नैयायिकैर्दुरूहविषयत्वादित्याह—**तर्ककर्कशविचारचातुरीधुरीणैरिति** । तर्के तर्कशास्त्रे कर्कशः कठिनतरः यो विचारः पूर्वपक्षोत्तरसंदर्भस्तत्र या चातुरी चातुर्यमूहापोहरूपं तस्मिन्धुरीणैः समर्थैरित्यर्थः । ग्रन्थं परिसमाप्य कृतम् 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्' इति भगवदुक्तेः स्वोपास्यश्रेष्ठतमाय चन्द्रचूडाय समर्पयन् स्वकार्यनुवृत्तये ग्रन्थकृतिमत्त्वेन स्वनामग्रहणपूर्वकं पद्यं पठति—**कौण्डिन्येति** । **कृतिं** । दीपिकाप्रकाशाख्यग्रन्थम् । **एतस्मै** । अत्यन्तसमीपवृत्तये । 'यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान्कामान्सह' इति श्रुतेरन्तर्हृदाकाशस्थितत्वेन तत्त्वं बोध्यम् । तथाज्ञानवत्त्वेनास्यात्यन्तोत्कर्षः सूचितो भवति । निखिलवेदशास्त्राध्ययनस्य तत्त्वज्ञानमेव मुख्यं फलमन्यथाध्ययनं शुष्केष्टिप्रायमेव, उक्तंच—"साक्षाच्छ्रुत्या ऋचोऽक्षरे परमे व्योमन् यस्मिन्देवा अधिविश्वे निषेदुः । यस्तं न वेद किमृचा करिष्यती"ति । **चन्द्रचूडाय** । तरुणेन्दुशेखराय

---

१ इदमस्तु संनिकृष्टे समीपतरवर्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात् ॥ इति महदुक्तेः ॥

## भास्करोदयाख्यव्याख्या.

परशिवाय । **मङ्गलं** कल्याणं यथास्यात्तथाऽऽर्पिपत् अर्पितवान् । अर्तेर्णिजन्तस्य लुङि अर्तिह्रीत्यादिना पुगागमे रूपं बोध्यम् । **इतीति** । एवमित्यर्थः । **श्रीमदिति** । इदं पाण्योपनामककौण्डिन्यवंशविशेषणं पाण्योपनामककौण्डिन्यवंशस्य वेदशास्त्राध्ययनसंपन्नपरम्परागतत्वेन प्रसिद्धेर्लोके श्रीमत्त्वं बोध्यम् । नाम्नोऽपि व्यावर्तकंनामोपनामेत्युच्यते । तच्च क्वचिद्ग्रामनाम क्वचित्पौरुषेयम् । प्रकृते चेदं ग्रामनाम-पाण्येत्यान्ध्रदेशे अहोबालसन्निधौ स्थितेः । तात्स्थ्यात्तद्व्यवहारो यथा आन्ध्रा इत्यादि । अन्ध्रादिर्देशविशेषसंज्ञेति प्रसिद्धम् । कौण्डिन्यवंशस्यानेकोपनामकत्वादितरव्यावृत्तये–उपात्तं, स एव पयःपारावारः क्षीरसमुद्रः तेन निर्दुष्टत्वं श्रीलक्ष्मीनृसिंहनिकेतनत्वं तादृशवंशस्य स्फुटम् । तस्य राकाचन्द्रायमाणः पौर्णिमापूर्णचन्द्रस्तेन स्वस्य पूर्णकलावत्त्वेन सर्वजगदाह्लादकत्वम् । तादृशस्याप्यस्मदीयवंशीयः सर्वलोकवन्द्यः इति वृद्धिकरत्वं च सिद्धम् । पदवाक्यप्रमाणानां पारावारीण इति षष्ठीतत्पुरुषः । पदशब्देन व्याकरणं वाक्यशब्देन मीमांसा प्रमाणशब्देन न्यायशास्त्रमेषां पारावारीणः पारङ्गतः । राष्ट्रावारपाराद्घखाविति सूत्रस्य अवारपारादिति[1] वार्तिकेन साधुः । तेन त्रिष्वनर्गलैसामर्थ्यं सिद्धम् । **श्रीरामभट्टतनूजः** । 'सा हि श्रीरमृता सता'मिति श्रुतिबोधितवेदत्रयीरूपश्रीसहितत्वमत्र विवक्षितम् । भट्टत्वं वेदशास्त्रार्थतत्त्वज्ञत्वम् तादृशरामनामकस्य तनूजः सूनुः तेनानूचानपाण्डित्यं सिद्धम् । **श्रीनीलकण्ठभट्टः** । तथाविधश्रीसाहित्यविशिष्टस्तथाविधभट्टत्वविशिष्टश्च नीलकण्ठ शर्मा ग्रन्थकारः । **विदुषा** । वेदवेदाङ्गनिखिलतन्त्रसिद्धान्तज्ञानजनितानेकग्रन्थसन्दर्भरचनाधायककल्पनाविशेषवता **विरचितः** निर्मितः **तर्कसंग्रहदीपिकाप्रकाशः** । तर्कसंग्रहस्य व्याख्यानं दीपिका तद्व्याख्यानं प्रकाशः प्रकाशनामको ग्रन्थः समाप्तः चरमवर्णध्वंसवानित्यर्थं इति शिवम् ॥

नीलकठण्प्रसादेन नीलकण्ठतनूद्भवः ।<br>
निर्माय प्रार्पयद्ग्रन्थं नीलकण्ठाय मङ्गलम् ॥ १ ॥<br>
श्रीमत्पण्डितमण्डलीकुमुदिनीराकासुधादीधितेः<br>
पुत्रस्तस्य च नीलकण्ठविदुषो लक्ष्मीनृसिंहाभिधः ॥<br>
श्रीमत्तातविनिर्मितां कृतिमिमां व्याख्यातवान्मञ्जुलाम्<br>
तेन स्यान्मुदितो हिमाचलसुतावामार्धदेहः शिवः ॥ २ ॥<br>
श्रीदीपिकाप्रकाशस्य व्याख्यानं भास्करोदयम् ।<br>
शिवप्रेरितशेमुष्या प्राकरोद्विदुषां मुदे ॥ ३ ॥

श्रीमद्दक्षिणामूर्तिप्रसादलब्धानवद्यनिखिलवेदशाखामुखसर्वतन्त्रस्वतन्त्रस्यानल्पान्तेवासिपश्वास्यजितदिङ्मण्डलविद्वद्व्रजविविधग्रन्थनिबन्धनपटुतरसिद्धान्तपारीणकुशलपण्डितमण्डलविकचकुमुद्वतीकुमुद्वतीरमणायमानाद्वैतज्ञानामृतोद्गारधारासंपातनिरन्तरवि-

१ राष्ट्रावारेतिसूत्रे 'अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यमि'ति वार्तिकेनेत्यर्थः ।
२ अप्रतिबद्धबुद्धिसत्त्वम् ।

## भास्करोदयाख्यव्याख्या.

डम्बितप्राष्टषेण्यावारिवाहव्यूहमहामहोपाध्यायश्रीनीलकण्ठभट्टचरणकमलध्यानावलब्ध सन्मतिकतत्सूनुसूरिश्रीलक्ष्मीनृसिंहविरचिता तर्कसंग्रहदीपिकाप्रकाशव्याख्या भास्करो ... श्रीनीलकण्ठस्य प्रीतये संबोभूयात् ॥ शुभमस्तु ॥

श्रीगुरोर्नीलकण्ठस्य चरणौ मूर्ध्नि धारयन् ।
भूयात्संप्रार्थये शश्वद्व्याख्या मोदाय धीमताम् ॥ १ ॥
मक्षिका मधुलोभेन पुष्पेभ्यो मधु पुष्कलम् ।
कुर्वन्ति संचयं स्वार्थे भुङ्क्ते भाग्यात्परो जनः ॥ २ ॥
मात्सर्यं तु समुत्सार्य सान्तं स्वालोक्य सद्बुधाः ।
दूष्यं चेद्दूष्यतां तावत्तुष्यतां वा न मे भिदा ॥ ३ ॥

---

श्रीलश्रीमिथिलेशसत्कृतबलोदर्केप्रतिष्ठान्वित-
श्रीमद्गोकुलनाथशर्मतनुजः श्रीमान् सनाथोऽभवत् ।
यो विद्वानखिलं विनश्वरमिदं श्री १०८ मत्परे ब्रह्मणि
विन्यस्याखिलभावमाशु विजहावर्थे ममत्वं दृढम् ॥ १ ॥
पुत्रा वेदमिताः परैरनमिताः सन्नीतिनिष्ठाविदः
तस्यासन मिथिलेशलब्धविभवा दानप्रतिष्ठान्विताः ।
तेषां च ह्यनुजोनुजाश्रितपदः श्रीमाञ्छिवाराधको
भोलानाथ इतीदृशीमलभताभिख्यां दयाख्यातिमान् ॥ २ ॥
तत्सूनुर्मिथिलामहीन्द्रतनुज-श्री ५ मद्गुणेशाभिध-
प्रोद्यत्स...शसाश्रितः करमहावंशाम्बुधीन्दुर्महान् ।
प्रह्लादं जन ...निजकृतौ दाक्ष्यं च सन्दर्शयन् ।
श्री १०८ मत्कृष्णपदाब्जसेवनपरः श्रीनन्दलालोऽभवत् ॥ ३ ॥
तत्सूनुर्निजतातपादयुगलानुध्यानविध्मातधी-
र्व्याकृत्यादिविदग्रणीः समभवच्छ्रीमान्मुकुन्दः सुधीः ।
सम्राडर्पितसत्प्रशस्तिक इमां श्रीनिलकण्ठात्मजै-
र्निर्मातुं प्रकृतां क्वचित्क्वचिदसंपूर्णां समापूरयत् ॥ ४ ॥
श्रीमद्वैक्रमवत्सरे नवशराङ्कक्ष्मा १९५९ मिते माधवे
वारे देवगुरोरियं वदि तिथौ के २ पूर्तिमापादिता ।
एनामाकलयन्तु धीरधिषणा व्याख्यां तु चाशु स्फुटं
श्रीमत्पण्डितनीलकण्ठरचितां टीकां प्रकाशाभिधाम् ॥ ५ ॥

---

१ बख्शीपदालङ्कृतः । २ श्रीमन्मिथिलामहीमहेन्द्रेण प्रतापसिंहमहाराजेनासन्ततिकेन पारितोषिकरूपेण प्रत्तं राज्यं स्वीकृत्य तद्वैमात्रेयभ्रात्रे पुण्यश्लोकाय माधवसिंहशर्मणे वर्तमानमहाराजाधिराजवृद्धप्रपितामहाय समार्पिपत् ।

नाटकानि

अद्भुतदर्पणनाटकम्—श्री[illegible] [illegible]

अभिज्ञानशाकुन्तलं नाटकम्—[illegible]कालिदासकृतम् [illegible] प्रणीतया अर्थद्योतनिकाख्यटीकया सहितम्. [illegible]

अमृतोदयनाटकम्—श्रीमद्गोकुलनाथकृतम्. ... ।)

कंसवधनाटकम्—महाकविश्रीशेषकृष्णकृतम्. ... ... ॥।

कर्णसुन्दरीनाटिका—महाकविश्रीबिह्लणकृता. ... ... ।॥।

चैतन्यचन्द्रोदयं नाटकम्—श्रीकविकर्णपूरविरचितम्. ... १।

दूताङ्गदं नाटकम्—श्रीसुभटकविविरचितम्, एकाङ्कात्मके स्वल्पतरेऽस्मिन्नाटके रावणपुरतोऽङ्गदकृतस्य दौत्यस्य सम्यक् रमणीयतया विवेचनं कृतमस्ति. ... ... ... ... ... ८≡

धनंजयविजयम्—श्रीकाञ्चनाचार्यविरचितम्. ... ... ८≡

पार्वतीपरिणयनाटकम्—महाकविबाणभट्टप्रणीतम्. ... ।-

प्रबोधचन्द्रोदयं नाटकम्—श्रीमत्कृष्णमिश्रयतिविरचितम्. १॥

प्रसन्नराघवं नाटकम्—श्रीजयदेवकविविरचितम्. ... ।॥।

मृच्छकटिकं नाटकम्—पृथ्वीधरकृतया व्याख्यया समेतम्. १।

मालविकाग्निमित्रम्—काटयवेमकृतं, कुमारगिरिराजीयव्याख्यासमेतम्. ... ... ... ... ... ... ।॥।

मालतीमाधवं नाटकम्—भवभूतिकृतं, त्रिपुरारिकृतटीकया, नान्यदेवकृतटीकया, जगद्धरकृतटीकया च सहितम्. ... २।

रत्नावलीनाटिका—श्रीहर्षदेवकृता, गोविन्दकृतटीकासहिता. १।

रुक्मिणीपरिणयं नाटकम्—श्रीरामवर्मवञ्चियुवराजकृत.... ।-

लटकमेलकप्रहसनम्—शंखधरविरचितम्. ... ... ।-

विद्यापरिणयः—आनन्दरायमखिविरचितः. ... ... ॥-

विदग्धमाधवम्—(नाटकं) श्रीरूपगोस्वामिप्रणीतम्. ... १।

वृषभानुजा नाटिका—श्रीमथुरादासविरचिता. ... ... ।=

सत्यहरिश्चंद्रनाटकम्—प्रबंधशतकर्तृमहाकविरामचंद्रकृतम्. ॥

पाण्डुरङ्ग जावजी—निर्णयसागराध्यक्षः,
पो०—काळबादेवी, मुंबई.